**स्नायात्ततस्त्रिभागेन पाण्योः शौचं पुनःपुनः ।**

[**तच्छेषं**] तेभ्यः पूर्वकृतेभ्यः [1]त्रिभ्यो भागेभ्य एकस्योपयुक्तत्वाद्यौ [2]द्वावेवावशिष्टौ तत एकमंशं पुनः पुनः पाण्योः शौचार्थं **त्रिधा** संपाद्य तदपरं तृतीयम् **अंशं** करतले **पूर्वयाम्योदक्संस्थं** पूर्वदक्षिणोत्तरभागस्थं[3] त्रिधैव **विभज्य** [4]यथाक्रमम् [**अस्त्रब्रह्मशिवैः**] अस्त्रब्रह्ममूलमन्त्रैरभिमन्त्र्य अस्त्रजप्तेन पूर्वदिक्स्थेन **जलाद् विघ्नान्** [**उत्सारयेत्**] अपनयेत् । **तदन्तेनेति** तृतीयेनोदक्स्थितेन मूलजप्तेन तज्जलम् **अमृतीकुर्यात्** । **द्वितीयेन** तु याम्यदिक्स्थितेन ब्रह्मजप्तेन [**तनुम् आलभेत्**] देहं लिम्पेत् । **ततश्च स्नायात्** । त्रयो भागा यस्य तेन प्रागुक्तेन **त्रिभागेन पुनः पुनः** करौ शौचयेत् ॥

[5]अन्तर्जलप्राणायामार्थमाह—

**संयतासुरपां मध्ये [6]वक्त्रमाधाय चेतसा ॥ १२ ॥**

**जपेदघौघविच्छित्यै तारकं दुःखतारकम् ।**

[**संयतासुः**] नियमितप्राणो [**अपां मध्ये**] जलान्तरे [**वक्त्रमाधाय**] मुखं निवेश्य [**अघौघविच्छित्यै**] दुरित[7]निवहक्षयार्थं [**दुःखतारकं**] सर्वदुःखोद्धारं **तारक**मिति ओंकारं [**चेतसा**] मनसा **जपेत्** ॥

**आप्लुत्य [8]परिवृत्यान्तर्वासो बद्ध्वाचमेच्छिखाम् ॥ १३ ॥**

[**आप्लुत्य**] अप्सु निमज्योत्तीर्य **अन्तर्वासः** [9]**परिवृत्य** [**शिखां बध्वा**] शिखाबन्धं कृत्वा आचामेत् ॥ १३ ॥

**ततोऽभिषेचनं कृत्वा मन्त्रैः कलशमुद्रया ।**

**मार्जनं [10]चाघमर्षं च कुर्यात्तैरेव संयतः ॥ १४ ॥**

[**ततः**] अनन्तरं वक्ष्यमाणलक्षणया[11] **कलशमुद्रया** अस्त्रवर्जितमन्त्राभिषेकं कुर्यात् । **तैरेव** [12]संहितामन्त्रैः **मार्जनं** मूर्ध्नि जलकणविकिरणलक्षणम् **अघमर्षणं** च दक्षिणपाणिस्थानां सुसितरूपाणामपां

[1] C : त्रिस्त्रिभ्यो
[2] C : द्वौ द्वाववशिष्टौ
[3] B : भागस्तं pour भागस्थं
[4] C : यथाकर्म
[5] C : अन्तर्जलं
[6] A et B : आदाय pour आधाय
[7] C : निबर्ह pour निवह
[8] B : परिवर्त्स्यान्तर्वासो ; A : परिवृत्त्यान्ते वासो ; C : परिवृत्यान्तर्वासो.
[9] B : परिवर्त्य
[10] C : साघमर्षं
[11] voir *paṭala* 5, *śloka* 16–17a
[12] C omet संहिता

वामरन्ध्राघ्रातानां देहस्थकल्मषाद्दक्षिणानासास्रोतसा कृष्णवर्णानाम् [1]अघरूपिणीनां स्वकरक्षिप्तानामधः-क्षेपणं कुर्यात् । **संयत** इति, आकर्षणप्रक्षेपणार्थं पूरकरेचकयोगात्संयतप्राण इत्यर्थः ॥ १४ ॥

**ततश्च पुनराचम्य पाण्यग्रेण [2]गुणोत्तमम् ।**
**ब्रह्मादिपञ्चकं [3]सर्वान्विद्याविद्येश्वरानपि ॥ १५ ॥**
**[4]तत्त्वान्यधिपतीन्सर्वान् ध्यायन् कालान्तमण्डले ।**
**चतुर्थ्यन्ताभिधानेन स्वाहान्तेन [5]प्रतर्पयेत् ॥ १६ ॥**

[**ततः**] अघमर्षणानन्तरं शुद्ध्यर्थं [6]**पुनराचम्य** । **गुणोत्तम**मिति । गुणानां मन्त्राणामुत्तममर्घ्यं मूलमन्त्रम् । [**ब्रह्मादिपञ्चकं**] ब्रह्मणां च सद्योजातादीनां पञ्चकम् । आदिग्रहणादङ्गपञ्चकम् । **सर्वां**श्च सप्तकोटिसंख्याक**विद्या**[7]सहितान् **विद्येश्वरान्** परापरान् **तत्त्वानि** च पृथिव्यादीनि [**अधिपतीन्**] तदीश्वरांश्च ब्रह्मादीन् **सर्वान्** एतान् [**कालान्तमण्डले**] कालाग्न्यन्तेऽ[8]ध्वमण्डले **ध्यायन्** [**चतुर्थ्यन्ताभिधानेन**] चतुर्थ्यन्तेन स्वेन स्वेन[9] नाम्ना **स्वाहान्तेन** तर्पयेत् ॥ १५-१६ ॥

**ततो यज्ञोपवीतेन मुनीन्कण्ठावलम्बिना ।**
**मनकादीन्सभृग्वादीन् [10]स्वगोत्रप्रवराधिपान् ॥ १७ ॥**
**[11]कनिष्ठामूलमार्गेण भूतादीन्पर्वसन्धिभिः ।**

**कण्ठावलम्बिनेति** अनुद्धृतान्यतरबाहुनोपवीतेन [**सनकादीन्**] सनकसनन्दनसनत्कुमार-प्रभृतीन् [12]मुनीन् **सभृग्वादीन्** [13]भृग्वादिसहितांश्च [**स्वगोत्रप्रवराधिपान्**] स्वगोत्राधिपान्स्वप्रवराधिपांश्च [**कनिष्ठामूलमार्गेण**] कनिष्ठामूलेनार्षेण तीर्थेन समनन्तरवक्ष्यमाणश्रुतेन नमस्कारेण तर्पयेत् । गोत्राधिपानां पूर्वे प्रवराधिपाः पराशरादीनामिव वसिष्ठादयः । **भूतादीन्** अङ्गुलि**पर्वसन्धिभि**स्तर्पयेदिति स्थितम् । भूतग्रामः पशु[14]मृगपक्षिसरीसृपभेदाच्चतुर्विधः । आदिग्रहणात्सागरद्रुमादयः । तथा च **योगयाज्ञवल्कीये**[15] " ततः संतर्पयेदेवम् " इत्युपक्रम्य—

[1] C : असरूपाणां
[2] A : गुरूत्तमः
[3] A : साङ्गं मूलं विद्येश्वरानपि
[4] B : तत्त्वान् pour तत्त्वानि
[5] C : प्रतापयेत्
[6] C : पुनः पुनराचम्य
[7] C : संहितान्
[8] C : कालाग्न्यन्तोर्ध्वमण्डले
[9] C : स्वेतरस्वेन
[10] B : सगोत्र pour स्वगोत्र
[11] Ce demi-*śloka* manque en B.
[12] B omet मुनीन्
[13] B omet भृग्वादिसहितांश्च
[14] C : मृगसरीसृपपक्षिभेदाच्चतुर्धा
[15] C : योगयाज्ञवल्क्यः

" [1]वनस्पतीनोषधीश्च भूतग्रामं चतुर्विधम् ।
नदीर्देवान् द्रुमान्नागान् सागरान् पर्वतानपि ॥ " इति ॥

[2]तथापसव्येन पितॄन्सपत्नीकान्पितामहान् ॥ १८ ॥
प्रपूर्वान्स्वगुरूनेवं[3] चोदकान्बोधकान्परान् ।
[4]भ्रातॄन्सखीनुपाध्यायान्समातामहमातुलान् ॥ १९ ॥
स्वधान्तेनाभिधानेन[5] नतिप्रान्तेन मध्यमान् ।

**प्रपूर्वानिति** प्रपितामहान् । **सपत्नीकानिति** पितामहीप्रपितामह्यादिसहितान् । गुरवः त्रिविधाः चोदकबोधकपरभेदात् । **चोदकाः** प्रवर्तयितारः । **बोधका** व्याख्यातारः । **परे** [6]त्वनुग्रहकृतः । **एव**मिति पित्रादिवत् । **भ्रातॄनि**ति अनुजान् गुरुभ्रातॄंश्च । **अपसव्येने**ति उद्धृतवामबाहुमुपवीतम् अपसव्यमाहुः । तानेतान् [**अभिधानेन**] स्वनाम्ना **स्वधान्तेन** तर्पयेत् । **मध्यमानिति** देवानामादावुक्तत्वात् पितॄणां चान्तेऽभिधानान्मध्यमत्वमृषीणाम् । [7]तान् [**नतिप्रान्तेन**] नमस्कारेण तर्पयेदित्युक्तम् । तथा च श्रीमन्**मतङ्गे**—

" [8]स्वाहान्तमन्त्रं देवानामृषीणां तु नमोऽन्तकम् ।
स्वधाकारान्तसंयोगात्पितॄणां तर्पणं हितम् ॥ " इति ॥

ततस्तीक्ष्णांशुबिम्बस्थं[9] ध्यात्वा देवं सदाशिवम् ॥ २० ॥
[10]क्षिपेज्जलाञ्जलिं मन्त्रविरतौ[11] चेतसा स्मरन् ।
दिव्यां समुदितां पूजां संपाद्यार्घ्यपुरस्सराम् ॥ २१ ॥
ततो जप्त्वा शिवं साङ्गमावेद्योत्तरमारभेत् ।

[1] B : वनस्पतीमोषधींश्च
[2] A : ततोऽपसव्येन
[3] A : एव pour एवं ; C : प्रपूर्वांश्च गुरूनेवं
[4] D : समान् pour भ्रातॄन्
[5] D : अपिधानेन pour अभिधानेन
[6] B : अनुग्रहकृतः
[7] C omet तान्
[8] B : स्वाहान्तं मन्त्रं
[9] A et C : मध्यस्थं pour बिम्बस्थं
[10] D : शिवे जलाञ्जलिं
[11] A : मन्त्रविरतो

अथ [तीक्ष्णांशुबिम्बस्थं] अर्कबिम्बगं[1] सदाशिवनाथं ध्यात्वा [मन्त्रविरतौ] मन्त्रोच्चारणान्ते तमेव [2]च [चेतसा] मनसा स्मरन् जलाञ्जलिं [ क्षिपेत् ]दद्यात् । तस्मै च [3]दिव्यामिति देवस्य या वक्ष्यमाणा पूजा सा दिव्या ताम् [अर्घ्यपुरःसरां] अर्घ्यपूर्वाम् । समुदितामिति [4]धूपदीपलेपनकुसुमाद्यङ्गयुक्तां संपाद्य [शिवं साङ्गं जप्त्वा] शिवमन्त्रस्याङ्गयुक्तस्य जपं कृत्वा तच्च [आवेद्य] भगवते निवेद्य [उत्तरं] उत्तरकृत्यमाग्नेयं स्नानम् आरभेत् ॥

[5]तद्विधिमाह—

भस्मनाथ यतिः [6]स्नायात्तद्वन्यैर्गोमयोपलैः ॥ २२ ॥

पलाशचन्दनाद्यैर्वा काष्ठैः प्राक्शम्बराहृतैः ।
वामदेवचितैर्घोरदीपितैः [7]पुंनिवीजितैः ॥ २३ ॥

वर्मणा वेष्टितैरस्त्ररक्षितैः शुचि भूतले ।
जनितं [8]शांभवं भस्म गृहीत्वेशेन मन्त्रयेत् ॥ २४ ॥

शिवेनाङ्गवता [9]चैतद्धृदाहृत्य निधापयेत् ।
[10]सदाधारेऽस्त्रवर्मभ्यां [11]कृतरक्षे द्विजोत्तम ॥ २५ ॥

अथेति वारुणस्नानानन्तरं यतिर्हि भस्मना [12]स्नायादेव । न तु यतिरेव स्नायादित्यवधारणम् । [13]गृहस्थादीनामपि भस्मस्नानमाम्नातम् । उक्तं च श्रीमत्पौष्करे—

" गृही यथाङ्गमालभ्य तिलकैर्वा त्रिपुण्ड्रकैः ।" इति ।

यत्तु—

" एवं सकृद्यथाशक्ति स्नातोऽम्भसि दिने दिने ।
[14]भस्मस्नानेऽधिकारी स्यान्नान्यथा मुनिपुङ्गव ॥"

[1] B : बिम्बक pour बिम्बगं
[2] C omet च
[3] B et C : दिव्यमिति
[4] C : ध्रुवविलोचन
[5] B omet तद्विधिमाह
[6] A : स्नायात्तदन्यैर्
[7] A : पुंनिबीजितैः ; C : पुंप्रवीजितैः
[8] A et B : शाङ्करं
[9] C : चैतदधृदा वाहृत्य धापयेत्
[10] A : सदाधारेऽस्त्रवर्माभ्यां ; B : सदा घोरेऽस्त्रवर्माभ्यां
[11] A : कृतं रक्षे द्विजोत्तमः
[12] B : स्नायादेवं
[13] B : गृहस्थानामपि
[14] C : भस्मस्नानाधिकारी

इति श्रीमन्मतङ्गादावुक्तम् । इह च "सत्पूतस्योच्यमानेन विधिना भस्मनानलम्"[1] इति पूर्वमुपक्रान्तम् । तन्न सर्वथा वारुणस्नानपूर्वकत्वनियमाय । अपि तु [2]यथाशक्तीत्युपदेशात् सामर्थ्यापेक्षया जलस्नानपूर्वकत्वमलत्पूर्वकत्वं वा ज्ञापयितुम् । "उत्तरं वाथ नोत्तरम्" इति श्रीमत्किरणादौ[3] जलस्नानं विनापि पाक्षिकभस्मस्नानानुज्ञानात् । श्रीमत्स्वायंभुवेऽपि—

"[4]आग्नेयस्नानमपरं भस्मना तदुदाहृतम् ।
जलस्नानोत्तरं नित्यमनुत्तरमथापि वा ॥"

इति [5]स्पष्टमेवोक्तत्वात् । तथा च श्रीमन्मतङ्ग एव समनन्तरमुक्तम्—

"भूयो भूयोऽम्भसा यस्मात्सेव्यमानस्य रुग्भवेत् ।
तस्मात्तत्सततं नेष्टमिष्टमाग्नेयमुच्यते ॥" इति

एवं [6]चात्यन्तरोगिणामन्तरायादेर्जलस्नानानपेक्षमेव[7] भस्मस्नानं नित्यम् । अन्यस्य तु स्वशक्त्यपेक्षयैव । यथोक्तं [8]श्रीमन्निश्वासोत्तरे—

"वारिणा तु सकृत्स्नात्वा त्रिसन्ध्यं भस्मना पुनः ।
[9]स्नायाद्यथातुरो नित्यम्" इति ।

तच्च भस्म [**वन्यैः**] वनोद्भवैः [10]शुद्धैः **गोमयोपलैः** गोशकृत्पिण्डैः कार्यम् । श्रीमत् **पौष्करे**ऽप्युक्तम्—

"अभूतलनिसृष्टैस्तु[11] कपिलावृषगोमयैः ।" इत्युक्त्वा—

"कपिलावृषभाभावादारण्यांस्तु [12]समाहरेत् ।
शुचीनुपलकान् शुद्धान्"

इत्युपलशब्दो गोमयपिण्डेषु बहिर्देशे प्रसिद्धः । **काष्ठैर्वा** [**पलाशचन्दनाद्यैः**] पलाशचन्दनादिजैः । कीदृशैर्गोमयोपलकाष्ठैरित्याह—**प्राक्शम्बराहृतैः** इत्यादि । प्राक्शम्बर आद्यो मन्त्रः सद्योजातः तेन यान्याहृतानि ढौकितानि वामदेवेन चितानि [13]पाकार्हतया निवेशितानि घोरेण च दीपितानि तत्पुरुषेण च निर्वीजितानि उत्तेजितानि तैः [**वर्मणा वेष्टितैः**] कवचावकुण्ठितैः **अस्त्ररक्षितैः** [**जनितं**] उत्पादितं

[1] cf. *śloka* 4a.
[2] C : यथाशक्त्युपदेशात्
[3] cf. *Kiraṇāgama*, II, 1, 17
[4] C : आग्नेयं
[5] B : स्पष्टत एवोक्तत्वात्
[6] C : चात्यन्तरोगिणोऽन्तरायादेः
[7] C : जलस्नानापेक्षमेव
[8] C : श्रीमन्निश्वासे
[9] C : स्नायादथातुरो
[10] C : शुद्ध pour शुद्धैः
[11] C : निमित्तैस्तु
[12] B : समारमेत्
[13] B omet पाकार्हतया निवेशितानि

[**शुचि भूतले**] शुद्धे भूतले] [1]**शांभवं** [2]**शाङ्करं भस्म** [3]**तद् ईशेन** गृहीतं [**अङ्गवता**] साङ्गेन [**शिवेन**] मूलमन्त्रेणाभिमन्त्र्य [**कृतरक्षे**] कवचास्त्ररक्षिते [**सदाधारे**] शुद्ध आधारे नवे घटादौ [**हृदा**] हृन्मन्त्रेण [**निधापयेत्**] निक्षिपेदिति क्रमः ॥ २२ - २५ ॥

**तेनोत्तमाङ्ग[4]वक्त्रान्तर्देहजङ्घाद्यनुक्रमात् ।**

**उद्धूलयेच्च सर्वाङ्गं पाणिपादेतरत्सुधीः ॥ २६ ॥**

[**तेन**] तादृशेन भस्मना [**उत्तमाङ्ग-वक्त्र-अन्तर्देह-जङ्घादि**] मूर्ध-मुख-शरीरमध्य-जङ्घादिकं [**अनुक्रमात्**] क्रमेण [**सर्वाङ्गं**] बाह्वादिसर्वाङ्गजातं [**पाणिपादेतरत्**] कराङ्घ्रिवर्जितं[5] **उद्धूलयेत्** । **सुधीः** इति समाहितः सन् ॥ २६ ॥

**प्रत्यङ्गं कर्महस्तस्य शुद्धिरस्त्रेण पूर्ववत् ।**

**मन्त्राभिषेकसन्ध्यादिसूर्योपस्थानवारितम् ॥ २७ ॥**

[**प्रत्यङ्गं**] एकैकस्मिन्नङ्गे भस्मोद्धूलनं कृत्वा **कर्महस्तं** [6]दक्षिणं तदगोचरावयवोद्धूलकं वामं वा **अस्त्रेण** [7]संशोध्यान्याङ्गमुद्धूलयेत् । सर्वसमाप्तौ तु शुद्धमन्तर्वासः प्रावृत्य हस्तपादौ मृद्भिः प्रक्षालयेत् । यदुक्तं श्रीमन्**मतङ्गे**—

"यदगम्यं दक्षिणस्य तद्वामेन तु पाणिना ।
सम्यगुद्धूलयेच्चाङ्गं स्पृष्ट्वान्योन्यं करावुभौ ॥
शुद्धान्तर्वास आवृत्य पाणिं प्रक्षालयेद्धृदा ।
सलिलेन च पूतेन पादौ मृद्भिश्च सप्तभिः ॥" इति ।

**पूर्ववत्** चात्र भस्मस्नानान्ते **मन्त्राभिषेकसन्ध्या**देवपितृतर्पणं कार्यम् । किंपर्यन्तमित्याह—**सूर्योपस्थानवारितम्** इति । प्राग्वदादित्योपस्थानान्तं [8]सर्वं क्रममेवात्र कुर्यादित्यर्थः ॥ २७ ॥

## [ पार्थिवस्नानम् ]

पार्थिवस्नानकथनायाह—

**गङ्गार्कतनयासिन्धुसरस्वत्यादिसत्पयः ।**

**[9]स्पृष्टां सत्क्षेत्रजां वापि मृदं संहितयालभेत् ॥ २८ ॥**

[1] B : संभवं
[2] C omet शाङ्करं
[3] B : तदीशानगृहीतं ; C : तदीशानुगृहीतं
[4] C : वक्त्रादि
[5] B : कराङ्गवर्जितं
[6] C : दक्षिणबाह्वादिं
[7] C : संशोध्यान्यदङ्गम्
[8] C : सर्वमेवात्र
[9] A : स्पृष्ट्वा

तया मूर्धादिगात्रेषु मन्त्रैः कुर्यात्त्रिपुण्ड्रकम्[1] ।

अध्याहारेण पार्थिवम् । [**गङ्गार्कतनयासिन्धुसरस्वत्यादिसत्पयःस्पृष्टां**] जाह्नवीयमुनासिन्धुसरस्वत्यादिपुण्यपयःपूतां [**सत्क्षेत्रजां**] नैमिशादिपावनक्षेत्रोद्भवां **वा मृदं संहितया** मन्त्रजप्तां कृत्वा **तया** [**मूर्धादिगात्रेषु**] मस्तकाद्यङ्गेषु [**मन्त्रैः**] अङ्गब्रह्ममन्त्रैः अङ्गुलि[2]प्रतिबिम्बकरणात् पार्थिवं स्नानं भवतीत्यध्याहारः ॥ २८ ॥

[ वायव्यस्नानम् ]

मारुतं संहितामन्त्रं स्मरन् वायुरजो भवेत् ॥ २९ ॥

संहितामन्त्रस्मरणपूर्वकं प्रागुक्तपावनरजोयुक्तवायुसेवनाद् [**मारुतं**] वायव्यम् ॥ २९ ॥

[ दिव्यस्नानम् ]

पुण्यां सार्कातपां वृष्टिं बिभृयाच्छिवमुच्चरन् ।
प्राक् पदानि व्रजेत्सप्त दिव्यमेतद्दिवाम्भसा ॥ ३० ॥

[**शिवमुच्चरन्** ] मूलमन्त्रं जपन् [**प्राक्**] प्राङ्मुखः **सप्त पदानि** गच्छन् **सार्कातपां** [**पुण्यां**] पावनां दिव्याम् अम्भोमयीमनभ्रां [3]**वृष्टिं** [**बिभृयात्** ] धारयेत् । तद् **एतद्दिव्य**स्नानम् ॥ ३० ॥

[ गौरवस्नानम् ]

शुचिर्मूर्ध्ना गुरोः पादौ बिभृयाच्छिवमुच्चरन् ।
गौरवं तद्

गौरवस्नाननिष्पत्तये शुद्धेन **मूर्ध्ना शिवमुच्चरन्** [**गुरोः पादौ**] गुरुचरणौ [**बिभृयात्**] धारयेत् । **शुचिर्मूर्ध्नेति** । न तु [4]कुतश्चित्कारणाच्छुद्धिमाशङ्कमानो गुरोः पादौ स्पृशेत । अपि तु शुद्धः सन् तत्पादवन्दनात्स्नानफलं लभत इत्यर्थः ॥

[ मानसस्नानम् ]

मनोवृत्त्या मूलमाविलयात्स्मरन् ॥ ३१ ॥

[1] B : त्रिपुण्ड्रकम् . Les *śloka* N° 9, 12 b, 13 a, 20 b, 21, 22 a, 28, 29 et 31 de ce *paṭala* sont cités dans la *Vāruṇapaddhati* (cf. ms. pages 41, 40, 122, 159, 87, et 86 respectivement) ; ce texte ajoute le demi-*śloka* suivant : एवं पार्थिवमाख्यातं सर्वपापहरं शुभम् .

[2] C : प्रतिबन्ध pour प्रतिबिम्ब

[3] C omet अनभ्रां वृष्टिं

[4] B : कुतश्चित्कारणाय शुद्धिम्

**उत्सृष्टवारिणा शक्तेराप्लवेत्तद्धि मानसम् ।**

**मूलमाविलयाद्** इति द्वादशान्तपर्यन्तोच्चारितप्लुत[1]शान्तिपर्यन्तं यावन्मन्त्रं **स्मरन्** तेन मन्त्रेण [2]**उत्सृष्टं** जनितं निष्कलायाः शक्तेः प्रसृतं यद् **वारि** तेन [**आप्लवेत्**] [3]आप्लावयेत् स्नायात् । यदुक्तं **गुरुभिः**—

"निष्कलशक्तिक्षोभात्स्रुत[4]बहुलामृतस्य[5] सलिलस्य ।
मध्ये प्लवन्स हंसः[6] पुनरागच्छंस्ततो ध्येयः ॥ इति ।

तदेतन्**मानसं** स्नानम् ॥ ३१ ॥

उपसंजिहीर्षुराह—

**इति विधिविहिताभिषेकपूतो**
**[7]दलनविशुद्धपथा प्रविश्य धाम ।**
**कृतगणपतिभूतपालपूजः**
**प्रतिमनुमण्डलमर्चयेन्मताप्त्यै ॥ ३२ ॥**[8]

**इति** अनेनोक्तेन क्रमेण **विधिविहितः** शास्त्राम्नातो योऽ**भिषेकः** स्नानं तेन **पूतः** [9]पवित्रितः **दलनेन** विघ्नविसरणेन विनायकद्वारपालकपूजाकृतेन **विशुद्धः** शोधितो यः **पन्थाः** द्वारलक्षणः तेन याग**धाम प्रविश्य** [**प्रतिमनुमण्डलं**] शिवमन्त्रचक्रं [**मताप्त्यै**] अभिप्रेतसिध्यर्थं [**अर्चयेत्**] पूजयेत् । एतदेव स्पष्टयितुं विशेषयति— **कृतगणपतिभूतपालपूज** इति । गणानां नन्दीश्वरादीनां तत्पतेश्च गणेश्वरस्य भूतशब्दवाच्यानां च दिङ्मातङ्गादीनां पालानामित्येषां द्वारपालनया स्थितानां [10]द्वारश्रीसहितानां कृता पूजा येन स तथा ॥ ३२ ॥

[11] इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ [12] क्रियापादे स्नानप्रकरणं द्वितीयं समाप्तम्

[ इति द्वितीयः पटलः ]

[1] B : प्लुतं शान्तिपर्यन्तं
[2] B : सृष्टजनितं pour उत्सृष्टं जनितं ; C : सृष्टिजनितं
[3] C : प्लावयेत् pour आप्लावयेत्
[4] B : श्रुत pour स्रुत
[5] C : बहुलस्यामृतस्य
[6] B dans la note : " सहसा " इति पाठभेदः
[7] A : दनल pour दलन
[8] A ajoute : आहत्य ४३ ; इति मृगेन्द्रक्रियापादे स्नानविधिर्नाम द्वितीयः पटलः ; D : इति श्रीमृगेन्द्र-क्रियापादे स्नानपटलः पञ्चदशः ।
[9] B : पवित्रितः
[10] C omet द्वारश्रीसहितानां
[11] B : स्नानप्रकरणं द्वितीयं समाप्तम् ॥ ३२ १/२ ॥ ४३ १/२ ॥
[12] C omet क्रियापादे

## [अथ तृतीयः पटलः]

### [अर्चाप्रकरणम्]

अथेत्यादिनानन्तरप्रकरणान्तोपक्रान्तः पूजाविधिरभिधीयत इति [1]प्रकरणादिसंबन्धः ।

अथार्चाभवने शुद्धे [2]शस्त्रप्राकाररक्षिते ।
वर्मगर्भे [3]शिवीभूय बहिरन्तः शिवं यजेत् ॥ १ ॥

[4]**अथे**ति स्नानानन्तरं [**अर्चाभवने**] पूजागृहे **शुद्धे** [5]शल्यादिदोषरहिते [**शस्त्रप्राकाररक्षिते**] अस्त्रमयप्राकारकृतरक्षे [**वर्मगर्भे**] कवचावृते सकलीकरणपरभावावलम्बनादिना[6] **शिवीभूय अन्तर्बहिश्च शिवं यजेत्** ॥ १ ॥

### [करन्यासः]

सकलीकरणार्थं करन्यासं तावदाह—

[7]मन्त्रन्यासादिकं कर्म पाणिभ्यां [8]मान्त्रिकौ पुरा ।
तौ कार्यावसिनाशोध्याप्लाव्येशानादिकान् न्यसेत् ॥ २ ॥

अङ्गुष्ठादिषु तत्त्वं च परितोऽङ्गान्यपक्रमात् ।
[9]धामाङ्गुष्ठद्वये शस्त्रं तर्जन्योर्विघ्नतर्जनम् ॥ ३ ॥

[**पाणिभ्यां**] कराभ्यामेव देहदाहानन्तरं मन्त्रकलारब्धशुद्धशरीरोत्पादनाय [**मन्त्रन्यासादिकं कर्म**] मन्त्रन्यासादिव्यापारः क्रियते। तस्मात् **तावेव** [**पुरा**] आदितो [**मान्त्रिकौ**] न्यस्तमन्त्रौ **कार्यौ** । कथमित्याह **असिना** अस्त्रमन्त्रेण [**आ शोध्य**] आसमन्तात् क्रियाशक्तिविवृतये शोधयित्वा दहनोपप्लवन-[10]

[1] C : प्रकरणसंबन्धः
[2] A : चास्त्र pour शस्त्र ; D : शास्त्र
[3] C : शिवे भूत ; D : शिवे भूयः
[4] B omet अथेति
[5] B : शाल्यादि
[6] C : आलम्बनादिना pour अवलम्बनादिना
[7] D : मन्त्रप्रासादकं
[8] C : मान्त्रिकः
[9] C : समाङ्गुष्ठद्वये ; D : वामाङ्गुष्ठद्वये
[10] C : उत्प्लवन pour उपप्लवन

पूयनाघनयोः कृत्वेत्यर्थः। तत **आप्लाव्येति** ओंकारेणामृतकुम्भरूपेणात्यन्तसन्ततधारावर्षिणा[1] संसिच्य [2]**ईशानादिकान्** [**अङ्गुष्ठादिषु**] अङ्गुष्ठादिकनिष्ठान्तास्वङ्गुलीषु **न्यसेत्**। **तत्त्वं च परित** इति, समन्ताद्व्यापकत्वेन तयोरात्मविद्याशिवाख्यतत्त्वत्रयन्यासः कार्य इति यावत्। **अङ्गान्यपक्रमादिति**, ब्रह्मन्यासक्रमवैपरीत्येन कनिष्ठाद्यङ्गुष्ठान्तासु हृदयाद्यङ्गपञ्चकं न्यस्य [**विघ्नतर्जनं**] विघ्नौघनिर्भर्त्सनं [**शस्त्रं**] अस्त्रं [**तर्जन्योः**] तर्जनीद्वये, **अङ्गुष्ठद्वये** तु **धामेति** मूलमन्त्रं न्यसेत्॥ २ - ३॥

## [ देहशुद्धिः ]

एवं करन्यासं कृत्वा देहशुद्धिं कुर्यात्। [3]तदाह—

**प्रागुदग्वदनः प्राणांस्त्रिरायम्यास्त्रतेजसा।**
**[4]निर्दहेत्पाशवीं मूर्तिं सदाशिवपदस्पृशा॥ ४॥**
**तद्भस्म वायुना [5]शाक्तेनापनीयावलोकयेत्।**
**[6]दिनकृन्मण्डलाकारं दृक्क्रियामण्डलं चितः॥ ५॥**

[**प्रागुदग्वदनः**] प्राङ्मुख[7] उदङ्मुखो वा [**त्रिः**] त्रीन् वारान् **प्राणान् आयम्य** दैर्घ्यं नीत्वा कुम्भकसंधुक्षितरुचिना पादाङ्गुष्ठोत्थितेन [**अस्त्रतेजसा**] अस्त्राग्निना[8] [**पाशवीं मूर्तिं**] मायेयां तनुं **निर्दहेत्**। अत्र च प्राणायाम[9]करणसमये [10]पूरककुम्भक[11]करणविकसितहृत्पुण्डरीकवर्तिनं तप्तचामीकरकिरणरुचिरं पुर्यष्टकनिविष्टमात्मानं मध्यनाडीमार्गेण [12]रेचयित्वोर्ध्वं बिन्दुस्थानं यावदाकृष्योर्ध्वद्वारोद्घाटैर्बहिर्व्योम्नि बिन्द्वधिरूढं कुर्यादिति [13]शास्त्रान्तरोक्तक्रमोऽनुसर्तव्य इति **गुरवः**। तथा चोक्तं श्रीमत् **किरणे**[14]—

" [15]तत्स्थं गृहीत्वा [16]चात्मानं [17]रेचनाद् बिन्दुमध्यगम्।
कृत्वा कायं दहेत्पश्चादस्त्रं संचिन्त्य तैजसम्[18]॥" इति

[1] C : धारासारवर्षिणा
[2] C : ईशानादिना
[3] C : तमाह pour तदाह
[4] A : निर्दहेत्पाशवीं
[5] D : शक्तेन pour शाक्तेन
[6] A : दिनकृन्मण्डलाकाराद्दक्क्रियामण्डलं ; D : दिनकृन्मण्डलाकारदृक्क्रियामण्डलं
[7] C : प्राङ्मुखोदङ्मुखो वा
[8] B omet ना ; C : अस्त्रवह्निना
[9] C : प्रकरण pour करण
[10] C : पूर्वकपूर्वकुम्भक
[11] B omet क
[12] B : रेचकयुक्त्योर्ध्वं
[13] C : शास्त्रान्तरोक्तः क्रमो
[14] cf. *Kiraṇāgama* II, 2, 3.
[15] *Kiraṇāgama* : तत्संगृह्यात्मनात्मानं
[16] C : तु pour च
[17] C : रोचनाद्
[18] *Kiraṇāgama* : शर्वास्त्रं चिन्त्य तैजसम्

यथाश्रुतमेवानुष्ठान[1]मित्यन्ये ।

ननु[2] किमयं देहदाहः सत्यः काल्पनिको वा । काल्पनिकश्चेदकरणेन तुल्यम् । सत्यत्वे तु बाह्यशरीरस्यारब्धकार्यकर्मभोगोपरोधेन दीक्षायां परमेश्वरशक्त्यधिष्ठानतः स्थैर्येणाधिष्ठानात् "निर्दहेत्पाशवीं मूर्तिम्" इत्यस्याः श्रुतेर्दीक्षाप्रकरणवक्ष्यमाणेन सह विरोधः । किं च—

"न च देहपरित्यागः कार्यो [3]दुःखेऽप्युपस्थिते[4] ।"

इति **चर्यापादे**[5] वक्ष्यमाणश्रुतिविरोधश्च ।

नैष दोषः । यस्मादेवंविध[6]विध्याचरणपूर्वकमारब्धकार्यकर्मभोगतः[7] किल दीक्षितानामविघ्नतो दीक्षाफलावाप्तिहेतुः । नान्यथा । यद्वक्ष्यति **दीक्षाप्रकरणे**[8]—

"इत्युच्यमानसत्कर्मन्युत्क्रमापायलक्षणे[9] ।
[10]शाक्तानां साधनं मुक्तेर्विधानमिदमीरितम् ॥" इति

येषां तु वृद्धबालाबलादीनामक्षमत्वान्निर्बीजैव [11]दीक्षा कृता तेषां नायं [12]बन्ध इति वक्ष्यामः । एवं च यथा [13]दाहः सत्यरूपस्तथा [14]शुद्धशरीरोत्पत्तिरपि सत्यैवेति न काचित्क्षतिः । यथोक्तं श्रीमत् **किरणे**[15]—

"कुर्यान्मन्त्रात्मकं कायमष्टत्रिंशत्कलात्मकम्" इति ।

यस्तु **स्वायंभुवाद्**ाविह चात्मवधनिषेधः स दुःखितव्यमूढविषयो न तु [16]दहनोत्प्लावनादिकदेहशुद्धिनिराकरणपरः ।

[17]"दहेत्पाशात्मकं कायं प्रणवेनाग्निना ततः ।"

इति शुध्यवसरे तत्रैवोक्तत्वात् । यदि च काल्पनिकं सर्वमकरणेन तुल्यं तदिह दीक्षादौ शिष्यचैतन्यादिग्रहणात्म[18]स्थिरीकरणतत्स्थत्वापादनादिकस्य मनोयागादेश्च क्रियाकलापस्याकरणमेव[19] प्राप्तम् । सर्वस्यास्य[20] काल्पनिकत्वादित्यलमनेन ।

[1] C : अनुष्ठेय । our अनुष्ठान
[2] C : ननु च
[3] C : दुःखोऽप्युपस्थितः
[4] cf. *Svāyambhuvāgama*, 31, 1
[5] C : चर्यापादवक्ष्यमाण
[6] C : विध्यन्तराचरण
[7] C : भोगः pour भोगतः
[8] cf. *Kriyāpāda, paṭala* 8, *śloka* 137
[9] C : रक्षणे
[10] C : शक्तानां
[11] C : दीक्षिता तेषां
[12] C : पन्था
[13] C : देहः
[14] C : शरीरान्तरोत्पत्तिरपि
[15] cf. *Kiraṇāgama*, II, 2, 7
[16] B : दहनोप्लवनादिक . . .
[17] cf. *Svāyambhuvāgama, kriyāpāda, paṭala* 7, *śloka* 2.
[18] B : स्थिरीकरणात्मतास्थित्यापादनादिकस्य
[19] C : मरणमेव pour अकरणमेव
[20] C : सर्वस्याप्यस्य

ततस्तु[1] [**शाक्तेन**] परशक्तिक्षोभोद्भूतेन शुद्धेन **वायुना तद्भस्म** [**अपनीय**] अपास्य [**दिन-कृन्मण्डलाकारं**] उद्यद्दिनकरसहस्रभास्वरं [2]**चित** आत्मनो **दृक्क्रियामण्डलं** ज्ञानक्रियात्मकं[3] स्वरूप-मपगतबन्धनत्वादुद्दीप्यमानम् **अवलोकयेत्** ॥ ४ - ५ ॥

अथैवं बन्धकदेहदाहान्निष्कले स्वात्मन्युत्तरक्रिया नोपपन्ना । नहि [4]शरीरादिविरहिण्यवबोधः करणं वा युक्तिमदित्यत आह[5]—

[6]**तदेव वपुरस्यैतद्** ।

यद् **एतद्** [7]अप्रतिबन्धस्वरूपं[8] दृक्क्रियामण्डलं **तदेव अस्य** आत्मनो वपुरिव **वपुः** वपुषा [9]निर्वर्त्यस्य तस्य तस्य कार्यस्य [10]कर्तुं क्षमत्वात् ॥

यद्येवं षट्त्रिंशत्कलात्मकं वपुःकल्पनं किमर्थमागमेषु श्रूयत [11]इत्यत आह—

**अव्यक्ताङ्गमसाधकम् ।**
**दृष्टमित्यत्र मन्त्राणि तानि मूर्धादितः स्मरेत् ॥ ६ ॥**

एवंरूपमप्येतद् दृक्क्रियामण्डलम् [12]**अव्यक्ताङ्गं** सद् अभिप्रेतस्य पूजाध्यानादेः **असाधकं** असं-पादकं **दृष्टम्** । यावत्किल न तत्र संविभक्तावयवं[13] शार्वशरीरमारोप्यते तावदर्चनध्यानादि न घटत **इति** अतः **तानि** अङ्गानि, **अत्र** इति पूजादिकर्मसु तस्य **मूर्धादितो मन्त्राणि स्मरेत्** ॥ ६ ॥

[14]तथाहि—

**ऊर्ध्वप्राग्दक्षिणादीनि पञ्चेशानेन कल्पयेत् ।**
**उत्तमाङ्गानि वक्त्रेण वक्त्राम्बुजचतुष्टयम् ॥ ७ ॥**

[**ईशानेन**] ईशानकलापञ्चकेन [**ऊर्ध्वप्राग्दक्षिणादीनि पञ्च उत्तमाङ्गानि**] ऊर्ध्वपूर्वदक्षिणपश्चि-मोत्तरशिरःपञ्चकं कल्प्यम् । [**वक्त्रेण**] तत्पुरुषकलाचतुष्टयेन [**वक्त्राम्बुजचतुष्टयं**] मुखाब्जचतुष्कम् ।

[1] C : स्व pour तु
[2] C : चिदात्मनो
[3] C : ज्ञानक्रियात्मकस्वरूपम्
[4] C : शरीरादिके अवबोधकरणं
[5] C : इत्याह pour इत्यत आह
[6] B : तदेवं
[7] B : प्रतिबन्ध pour अप्रतिबन्ध
[8] C : स्वरूप pour स्वरूपं
[9] B : निर्वर्तितस्य
[10] C : कर्तुमक्षमत्वात्
[11] C : इत्याह
[12] C : अव्यक्ताङ्गकं
[13] B : अवयव pour अवयवं
[14] C omet तथाहि

पञ्चमस्य त्वीशानवक्त्रस्योर्ध्वस्थितस्य[1] शिर:कल्पनयैव निष्पत्तिर्बोद्धव्या न तु चतुर्वक्त्रत्वं परमेश्वरमूर्तेर्ज्ञेयम् । दशभुजत्वोक्त्या [2]पञ्चवक्त्रत्वस्यैवेष्टत्वात् । ननु [3]चतुर्वक्त्रत्वस्य श्रुत्यैव तावन्निश्चय: । ततश्च दिग्भुजत्वेन दिशामष्टसंख्या[4]लक्षकत्वादष्टभुजत्वे[5] सत्यदोष: । नैवम् । " [6]खड्गखेटधनुर्बाण " इत्यादिना [7]दशभुजत्वमेवात्र मूर्तेर्भविष्यति ॥ ७ ॥

[8]तत:—

गलांसोर:स्थलं[9] [10]पृष्ठहृदयोदरनाभिकम् ।
बहुरूपेण[11] वामेन कट्युपस्थगुदस्फिच:[12]॥ ८ ॥
पार्श्वोरू जानुनी जङ्घे सद्येन चरणौ भुजौ ।
पाणिनासा[13]शिरश्चेति कलाभेदेन कल्पयेत् ॥ ९ ॥

[**गलांसोर:स्थलं**] कण्ठं[14] स्कन्धौ वक्ष: [**पृष्ठहृदयोदरनाभिकं**] पृष्ठं हृदयं उदरं [15]नाभिं चाष्टौ [**बहुरूपेण**] अष्टाभिरघोरकलाभि: कल्पयेत् । [**कट्युपस्थगुदस्फिच:**] श्रोणी लिङ्गं गुदं स्फिचौ [**पार्श्वोरू**] पार्श्वौ ऊरू **जानुनी जङ्घे** चेति [**वामेन**] वामदेवकलात्रयोदशकेन । [**चरणौ**] पादौ [**भुजौ**] बाहू [**पाणी**] करौ **नासा शिरश्चेति** [**सद्येन**] सद्योजातकलाष्टकेन[16]। इत्थं **कलाभेदेन** अष्टत्रिंशत्कलामूर्तिं कल्पयेत् ॥ ८ - ९ ॥

तस्याश्च रक्षार्थमङ्गन्यासमाह—

ततो हृच्छिरसी[17] चूडां स्वेषु स्थानेषु कल्पयेत् ।
रक्षाङ्गानि बलं मूर्तौ [18]पाणावस्त्रं [19]सुभास्वरम् ॥ १० ॥

[1] C : ऊर्ध्वस्थस्य pour ऊर्ध्वस्थितस्य
[2] C : पञ्चवक्त्रस्य pour पञ्चवक्त्रत्वस्य
[3] C : चतुर्वक्त्रस्य
[4] C : लक्षण pour लक्षक
[5] C : भुजे pour भुजत्वे
[6] cf. *śloka* 52
[7] C : दशभुजत्वस्यैवात्र
[8] B : यत:
[9] A et D : गळांसोरस्तलं
[10] C : पृष्ठं
[11] D : बहुरूपेषु
[12] D : स्थित: pour स्फिच:
[13] B : नास pour नासा
[14] C : कण्ठस्कन्धौ
[15] B : नाभिमघोरकलाभि:
[16] B : सद्योजाताष्टकेन
[17] B : हृच्छिरसि
[18] B : पाणिवस्त्रं
[19] B et D : सुभासुरम्

[ततः] पश्चाद् [हृच्छिरसी चूडां] हृदयशिरःशिखामन्त्रान् [स्वेषु स्थानेषु] हृदयादिस्थानेषु [रक्षाङ्गानि कल्पयेत्] रक्षाङ्गत्वेन न्यसेत्। न तु हृदयादिकल्पनार्थम्। कलान्यासेनैव तत्कल्पनायाः सिद्धत्वात्। कवचावकुण्ठितस्यानभिभाव्यत्वादव्याहतबलत्वम। अतो [1]बलशब्दः कवचे रूढः। ततश्च मूर्तौ वपुषि [बलं] कवचं न्यस्य [पाणौ] दक्षिणहस्ते [सुभास्वरं] दीप्तम् अस्त्रं न्यसेत॥ १०॥

अन्तर्यागार्थमाह—

ततः साधारणं रूपमन्यद्वा [2]पारमेश्वरम्।
ध्यात्वा हृत्पङ्कजे देवं वक्ष्यमाणवदर्चयेत्॥ ११॥

ततः अनन्तरं "[3]शिवीभूय शिवं यजेद्" इति श्रुतेः पारमेश्वरं साधारणं सदाशिवात्मकं रूपम् अन्यद्वा विशिष्टं विशेषदर्शनाम्नातं कृत्यानुगुणं भैरवादि [4]स्वस्वमूर्तौ ध्यात्वा [5]तत्तत्स्वरूपतामालम्ब्येत्यर्थः, देवं [वक्ष्यमाणवद्] वक्ष्यमाणक्रमेण [हृत्पङ्कजे] स्वहृत्पद्ममध्ये [अर्चयेत्] पूजयेत्॥ ११॥

कथमित्याह—

[6]मण्डलत्रितयप्रान्ते [7]दत्त्वा हृद्यासनं प्रभोः।
मूर्तावावाहनं कुर्यान्मन्त्रान्तात्सृष्टिवर्त्मना॥ १२॥

[हृदि] हृत्पद्मे सूर्यादिमण्डलान्तं [8]पृथिव्यादिशक्त्यन्तं ततः पञ्चत्रिंशद्रूपपद्माकृति प्रभोः आसनं दत्त्वा। यथोक्तं श्रीमत् किरणे[9]—

" चतुर्युगमहापादं पृथिवीतत्त्वकन्दकम्।
[10]कालतत्त्वान्तनालैकं पञ्चाशद्भावकण्टकम्[11]॥
[12]मायातत्त्वबृहद्ग्रन्थि[13] शुद्धविद्याब्जशोभितम्।
विद्येश्वरदलाक्रान्तं[14] शक्तिकेसरसंयुतम्॥

[1] B : बलिशब्दः
[2] C : परमेश्वरम्
[3] cf. *paṭala* 3, *śloka* 1
[4] C : स्वमूर्तौ
[5] B : तत्स्वरूपताम्
[6] A : मण्डलवितयं प्रान्ते
[7] A : तत्त्वहृद्यासनं
[8] C : पृथिव्यादिशक्त्यन्तान् पञ्चविंशपञ्चविंशद्रूपपद्माकृति
[9] cf. *Kiraṇāgama*, II, 2, 19b–22 a.
[10] C : कला pour काल
[11] *Kiraṇāgama :* भावकर्णिकम् ou बीजकर्णिकम् pour भावकण्टकम्
[12] *Kiraṇāgama :* मायातत्त्वं
[13] C : महाग्रन्थि
[14] *Kiraṇāgama :* च्छन्नं pour आक्रान्तं

शिवशक्तिद्वयारब्ध[1]कर्णिकाबीजराजितम्[2] ।
पीठमेवंविधं कल्प्यमशेषाध्वविनिर्मितम्[3] ॥" इति

तदनन्तरं [**मण्डलत्रितयप्रान्ते**] मण्डल[4]त्रितयान्तर्वर्तिन्यां वक्ष्यमाणस्वरूपायां **मूर्तौ** [**मन्त्रान्तात्**] मन्त्रोच्चारणोदितनादान्ते विश्रान्त्यास्पदाद् द्वादशान्तात् [**सृष्टिवर्त्मना**] सृष्टिक्रमेण **आवाहनं कुर्यात्** ॥ १२ ॥

ततश्च—

**नवार्कतेजसोऽङ्गानि विधायावाहमुद्रया ।**
**स्थापन्या स्थापनं कुर्याच्छाक्तविग्रहसंश्रये ॥ १३ ॥**
**प्रणत्या संनिधीकृत्य [5]निरुन्ध्याद्रोधमुद्रया ।**

तस्य च भगवतः [**नवार्कतेजसः**] प्रथमोदितसहस्रकररुचो वपुषि मूर्तौ [**अङ्गानि**] हृदाद्यङ्गानि यथास्थानं कल्पयेत् । आवाहनाङ्गन्यासौ [6]कथं कार्यावित्याह—**आवाहमुद्रयेति** । वक्ष्यमाणया आवाहन्या तु [**शाक्तविग्रहसंश्रये**] शाक्तशरीराधारे **स्थापन्या स्थापनं**, [**प्रणत्या**] नमस्कारमुद्रया संनिधीकरणं, [**रोधमुद्रया**] निरोधन्या निरोध इति । एवं च **शाक्तशरीरसंश्रयशब्देन**[7] निर्लिङ्गा दण्डाकारा विद्यामूर्तिः सलिङ्गा च शिवमूर्तिरत्राभिप्रेता । नवार्कतेजोरूपा तु विलक्षणतेजःकरणाकृतिः प्रथमा [8]मूर्तिरिति मूर्तित्रयमुक्तम् । पाठक्रमोऽनपेक्ष्यश्चात्रार्थ[9] एव क्रमोपन्यासोऽनुसर्तव्यः ॥

**ततः पादद्वये पाद्यं रूपं कृत्यात्मकं स्मरन् ॥ १४ ॥**
**मूर्धस्वर्घ्यं मुखाब्जेषु दद्यादाचमनीयकम् ।**

ध्यानप्रकरणवक्ष्यमाणं साधारणं विशिष्टं वा **रूपम्** ईप्सितकार्यानुगुण्येन **स्मरन् पादद्वये** [**पाद्यं**] पाद्यार्थमुदकम् । **दद्यात्** इत्येकैकमभिसंबध्यते । [**मूर्धसु**] शिरस्सु पञ्चसु **अर्घ्यं** शिवाख्यम् । यद्वक्ष्यति **दीक्षाप्रकरणे**[10]—

[1] *Kiraṇāgama* : आरब्धं pour आरब्ध  [2] *Kiraṇāgama* : रक्षितम् pour राजितम्
[3] ibid : मातृकाबीजसंभवम् pour अशेषाध्वविनिर्मितम् ; C : अशेषार्थनिर्मितम्
[4] C : त्रय pour त्रितय  [5] A : निरुध्याद्योतमुद्रया
[6] B omet कथं  [7] C : शब्दो pour शब्देन
[8] C : प्रथमा आत्ममूर्तिरिति
[9] B : अत्रार्थ एव क्रमो विन्यासोऽनुसर्तव्यः ; C : अत्र एव क्रमोपन्यासेन तु समर्थव्यः
[10] cf. *Kriyāpāda, paṭala* 7 (*adhivāsanavidhi*), *śloka* 12 b.



Dhūpa



Cāmara



Vyajana



Tālavṛnta



Dīpa



Ātapatra



Dhvaja

" शिवाभिधानं पूजान्ते पाद्ये वाचमनीयके ।" इति ।

[**मुखाब्जेषु**] मुखपद्मेषु तु [**आचमनीयकं**] आचमनीयार्थकं[1] जलम् ॥

**स्नानवस्त्रोपवीतानि धूपगन्धविलेपनम ॥ १५ ॥**
**सर्वाभरणजातं च चामरं दीपदर्पणम् ।**
**दिव्यायुधानि माल्यं च ताम्बूलं पानभोजने ॥ १६ ॥**
**वितानमातपत्रं च ध्वजं चोन्नतमुज्ज्वलम् ।**
**[2]हृदोद्गीथेन वा दद्याद्यागाङ्गमनुनापि वा ॥ १७ ॥**

**स्नानवस्त्रादीनि**[3] सितोन्नतध्वजान्तानि [**हृदा**] हृन्मन्त्रेण अथवा [4]**उद्गीथेन** प्रणवेन **दद्यात्** । **यागाङ्गमनुनापि वा** इति[5], यागाङ्गतया संहितान्तरेषूक्तो यो मनुर्मन्त्रः तेन वा दद्यात् । यथोक्तं श्रीमन्मतङ्गे[6]-

" यस्मिन्यस्मिन्न मन्त्रोक्तं तस्मिंस्तस्मिन्सदा भवेत् ।
गायत्री कर्मणि श्रेष्ठा ॥" इति ।

**गन्धः** अगरुतुरुष्कादयः । **विलेपनानि** कुङ्कुमकर्पूरचन्दनादीनि । शेषं सुबोधम् ॥ १५ - १७ ॥

वक्त्रविन्यासमाह ---

**ततः [7]शङ्खेन्दु[8]कुन्दाभमजातं पश्चिमे दले ।**
**लोहितं वाममौदीच्येऽघोरं दक्षिणतोऽसितम् ॥ १८ ॥**
**नरं पौरन्दरे पीतमीशानं स्फटिकप्रभम् ।**
**कर्णिकेशानभागस्थं यजेदावाह्य पूजयेत् ॥ १९ ॥**

[**ततः**] पश्चात् [**शङ्खेन्दुकुन्दाभं**] सितद्युति **पश्चिमे दले** [**अजातं**] सद्योजातम् । [**औदीच्ये**] उदग्दले **लोहितं** [**वामं**] वामदेवम । [**दक्षिणतो**] दक्षिणे [**असितं**] कृष्णम **अघोरम** । [**पौरंदरे**]

1 C : आत्मकं pour अर्थकं
2 A et D : हृदोद्गीतेन ; B : हृदुद्गीतेन
3 C : ajoute च
4 B : उद्गीतेन
5 B omet इति
6 cf. *Matangapārameśvara*, *kriyāpāda*, *arcanāvidhipaṭala*, ms. p. 58.
7 B : शक्र pour शङ्ख
8 B : कुन्त pour कुन्द

पूर्वे [पीतं] हेमाभं [नरं] तत्पुरुषम् । कर्णिकायामीशानभागे [स्फटिकप्रभं] स्फटिकविशदम् ईशानं प्राग्वद् आवाह्य [अर्चयेत्] पूजयेत् ॥ १८ - १९ ॥

अथाङ्गन्यासमभिधत्ते—

आग्नेये हृदयं दीप्तं शिरो धूम्राभमैश्वरे[1] ।
कृष्णां तु नैर्ऋते चूडां वायव्ये [2]हरितं बलम् ॥ २० ॥
दिक्ष्वस्त्रं प्रलयार्काभं प्रान्तेषु मनसार्चयेत् ।

वह्नीशाननिर्ऋतिवायुदिक्षु हृदादीन्युक्तरूपाणि [मनसा] मनसाभिध्यायन्[3] [अर्चयेत्] पूजयेत् । बलं कवचम् । [4]हरितमिति नीलं [दिक्षु प्रान्तेषु] प्राच्यादिदिक्पत्रपर्यन्तेषु [प्रलयार्काभं] प्रज्वलद् अस्त्रम् ॥

विद्येश्वरावरणपूजार्थं तद्ध्यानमभिधातुमाह—

हेमानलतमालालि[5]हिमनीहारसंनिभाः ॥ २१ ॥
प्राच्यादिषु महेशानाश्चरमौ रक्तपाण्डरौ ।

[6]महेशाना विद्येश्वरा अनन्तादयः [प्राच्यादिषु] पूर्वादिदिगष्टके यथासंख्यं हेमादिवर्णाश्चिन्त्या इत्यप्रस्थितेनाभिसंबन्धः[7] । चरमौ पश्चिमौ श्रीकण्ठशिखण्डिनौ ॥

गणा नन्दिमहाकालगजवक्त्रवृषाबलाः ॥ २२ ॥
स्कन्दोमाचण्डनामानो[8] विद्येशानुगतत्विषः ।
एवमाशाभृतोऽपि स्युः किं तु वज्रादिपाणयः ॥ २३ ॥
[9]गजादिगा मनुभृतः पद्मस्थाः पद्मधारिणः ।

[10]एवं द्वितीयावरणे प्रागादिदिगष्टकनिविष्टा अनन्तरोक्तविद्येश्वरवर्णा नन्दीश्वरादयो गणाः । गजवक्त्रो गणेशः । अबलो निर्मांसदेहत्वाद् भृङ्गी । [एवम्] एतद्वर्णास्तृतीयावरणे [आशाभृतः] शक्रा-

[1] A et D : ईश्वरे pour ऐश्वरे
[2] C : रहितं
[3] C : अभिध्याय
[4] C : रहितमिति
[5] B : यम pour हिम
[6] B : महेशानविद्येश्वरा
[7] cf. *śloka* 26 a
[8] B : नामानौ
[9] A : गजादिका
[10] C omet एवं

दयो लोकपालाः । ते पुनः [**वज्रादिपाणयः**] वज्रशक्तिदण्डखड्गपाशध्वजगदात्रिशूलायुधाः [**गजादिगाः**] द्विरद[1]शुकमहिषनिशाचरझषहरिणनिधिपवृषासनासीना[2]श्चिन्त्याः । [**मनुमृताः**] विद्येश्वरास्तु [**पद्मस्थाः**] [3]पद्मासनाः [**पद्मधारिणः**] पद्मपाणयश्च ॥

**गणा [4]विमानगास्त्र्यक्षास्तेषूमा दर्पणोद्वहा ॥ २४ ॥**

**शक्तिदन्तधरौ स्कन्दगणेशौ शूलिनोऽपरे ।**
**[5]वृषादृते हरौ [6]देवी स्कन्दो वा शिखिसंश्रयः ॥ २५ ॥**

**महेशाभिमुखाः सर्वे चिन्त्याः कामार्थतोऽपि वा ।**

**गणाः** पुनः **त्र्यक्षाः** [**विमानगाः**] विमानस्थाश्च । [**तेषु**] तेषां मध्याद् [**उमा**] भगवती [**दर्पणोद्वहा**] आदर्शधारिणी । [7]कुमारः शक्तिहस्तः । विनायको दंष्ट्रपाणिः । [**वृषादृते**] [8]वृषभवर्जम् [**अपरे**] अन्ये [**शूलिनः**] शूलभृतः । [**हरौ देवी**] सिंहस्था गौरी । [**स्कन्दः**] कुमारः पद्मासनः [**शिखिसंश्रयः**] मयूरस्थोऽपि **वा** । अन्ये पद्मासनाः । [**महेशाभिमुखाः**] परमेश्वरसंमुखाः । **कामार्थतोऽपि वा** इति । अभिप्रेतकार्यानुगुण्यात प्रशान्तरूपा उग्ररूपा वा **सर्वे** पूज्याः ॥

वक्ष्यमाणलक्षणानां[9] मुद्राणां विनियोगमाह—

**ततः प्रदर्शयेन्मुद्राः[10] पूरणाय क्रियाविधेः ॥ २६ ॥**

**ताः स्रुङ्मकरशूलाब्जसुरभ्यो ब्रह्मणां प्रभोः ।**
**मनोरथा तदन्येषां नतिः सांनिध्यकारिका ॥ २७ ॥**

**ततः** अनन्तरं [**क्रियाविधेः पूरणाय**] क्रियाक्रमपूरणार्थं [**प्रभोः**] परमेश्वरस्य [**मनोरथा**] मनोरथाख्या मुद्रा दर्शयितव्या । [**स्रुङ् - मकर - शूल - अब्ज - सुरभ्यः**] शक्ति - मकर - त्रिशूल-

[1] B ajoute ici en note : मेष इति शिवार्चनचन्द्रिका
[2] C : वृषभासीना
[3] C : पद्मासीनाः
[4] A : विमानकाः pour विमानगाः ; C : विनायकाः ; D : विमानगः
[5] A : विषादृते
[6] A : देवः स्कन्दो वा ; D : देविस्कन्दो वा
[7] C : दण्डहस्तः कुमारः
[8] C : वृषवर्जम्
[9] cf. *Kriyāpāda, paṭala* 5
[10] A : मुद्रां pour मुद्राः

पद्म - धेनुमुद्राः [ब्रह्मणां] सद्योजातादिब्रह्मपञ्चकस्य । तदन्येषां [नतिः] नमस्कारमुद्रा । परिपूर्णक्रियत्वाल्लब्धावकाशं[1] विघ्नौघं मुद्रयन्ति न तु [2]स्वातन्त्र्यं कुर्वन्तीति मुद्राः[3] ॥ २७ ॥

**कृत्वैवमर्चनं प्रान्ते संमुखीनं वषट्कृतम् ।**
**[4]दत्त्वार्घ्यं च ततो जप्त्वा शिवमन्यद्दशांशकम् ॥ २८ ॥**

[एवम् ] इत्थम् [अर्चनं] पूजां [कृत्वा] विधाय [प्रान्ते] तत्समाप्तौ [संमुखीनं] सांमुख्यहेतुं [वषट्कृतं] वषट्कारयुक्तं [5]वक्ष्यमाणार्घ्यमध्याद् [अर्घ्यं] शिवार्घ्यं दद्यात् । " शिवाभिधानं पूजान्त[6] " इति श्रुतेः । जपं च [अन्यद् दशांशकं] मूलमन्त्राद् दशमांशेन अङ्गब्रह्मादीनां[7] कृत्वा ॥ २८ ॥

ततः किं कुर्यादित्याह—

**निवेदयेद्धृदाद्यन्तयुतं[8] कामं विना [9]नतः ।**
**तुभ्यं निवेदयामीति संप्रदानप्रयोगतः ॥ २९ ॥**
**मुमुक्षुः साधकः[10] काममभिसंधाय[11] निक्षिपेत् ।**
**भगवन् पालयस्वेति [12]संख्यायुक्तं दिने दिने ॥ ३० ॥**

[13]तं च जपं प्रत्यहं [हृदा] हृन्मन्त्रेण [आद्यन्तयुतम् ] आद्यन्तयोर्युक्तं [कामं विना] निष्कामः [नतः] प्रणतः सन् तुभ्यं निवेदयामीति [संप्रदानप्रयोगतः] संप्रदानप्रयोगेण शिवाय [मुमुक्षुः] मुक्त्यर्थी निवेदयेत् । [साधकः] सिद्ध्यर्थी [14]कामम् अभिवाञ्छितम् अभिसंधाय [दिने दिने] प्रत्यहं [भगवन् ] [15]प्रभो [संख्यायुक्तं] संख्यासहितं जपं [पालयस्व] पालय इति भगवति निक्षिपेत् ॥ २९ - ३० ॥

[1] B : परिपूर्णकीयत्वालब्धावकाशं ; C : परिपूर्णक्रियत्वलब्धावकाशं

[2] B : स्वतन्त्र्यं

[3] cf. *Kriyāpāda, paṭala* 5, *śloka* 2 et le commentaire : " विघ्नौघमुद्रणान्मुद्राः " एताः किल भगवतः शक्तयो विघ्नसंघातानां मुद्रणाद् अस्वतन्त्रीकरणाद् मुद्रा इत्युच्यन्ते ।

[4] B : दत्वा शिवं pour दत्वार्घ्यं च ; D : दत्त्वा शिवार्घ्यं

[5] C : वक्ष्यमाणार्घ्यपात्रत्रयमध्यान्

[6] cf. *Kriyāpāda, paṭala* 7, *śloka* 12b.

[7] B : दशमांशोनमङ्गब्रह्मादीनां

[8] A : अभ्यन्तर्युतं pour आद्यन्तयुतं ; C : आद्यन्तं युक्तं ; D : आद्यान्तयुतं

[9] A : ततः pour नतः

[10] D : साधकं

[11] B : अभिसंध्याय

[12] A : सख्या युक्तं

[13] B omet तं च जपं

[14] C : कामी मम pour कामम्

[15] C : प्रभो ममैनं जपं पालयेति

**ततः समुदितां पूजां कृत्वार्घ्यं प्रतिलोमतः ।**
**मन्त्रान् शिवाश्रयान् कृत्वा संधाय बहिरारभेत् ॥ ३१ ॥**

[**ततः**] पश्चात् [**समुदितां पूजां**] मूलाङ्गादिसमुदित[1]मन्त्रार्चनम् **अर्घ्यं** च **कृत्वा** [**प्रतिलोमतः**] [2]पूजाप्रातिलोम्येन [**मन्त्रान्**] सर्वमन्त्रान् [**शिवाश्रयान्**] परमेश्वराभिमुखान् [**कृत्वा**] विधाय तेषां च [**संधाय**] नाडीसंधानादिकं कृत्वा [**बहिः**] बहिर्यजनं [**आरभेत्**] उपक्रमेत् । यद्वा—**समुदितां** [**पूजां**] [3]मन्त्रार्चनां **कृत्वा** [**प्रतिलोमतः अर्घ्यं**] विलोमार्घ्यं दत्त्वा [4]समनन्तरवक्ष्यमाणबाह्यार्चनवत् **शिवाश्रयान्** मूलमन्त्रनिलीनान् **मन्त्रान्** [**कृत्वा**] विधाय, ततः[5] **संधाय** इति शिवस्य [6]मन्त्रात्मनश्च पृथग्रूपतामालम्ब्य [**बहिरारभेत्**] बहिर्यागं कुर्यात् । तदुक्तम्—

"भुक्त्यै मुक्त्यै शिवीभूय यजेत शिवमादरात् ।
ज्ञानक्रियाशक्तिवशान्मन्त्री मन्त्रात्मकः स्थितः ॥" इति ।

तत्रार्घ्यपात्रकरणार्थमाह—

**[7]हैमाद्यन्यतमं [8]पात्रमस्त्रशुद्धं[9] घनावृतम् ।**
**पूरयेदम्भसा [10]वस्त्रपूतेनोद्गीथ[11]मुच्चरन् ॥ ३२ ॥**
**ततोऽजातायुतान्ताणून्न्यस्यापाद्यामृतं परम् ।**
**प्रोक्षयेद्यजनाङ्गानि योग्यतागुणसिद्धये ॥ ३३ ॥**

[**हैमाद्यन्यतमं**] स्वर्णरजतताम्रादिकं [12]वा **पात्रम्** [**अस्त्रशुद्धं**] अस्त्रशोधितं [**घनावृतं**] कवचावकुण्ठितं **वस्त्रपूतेन** [**अम्भसा**] जलेन [**उद्गीथमुच्चरन्**] ओंकारमुच्चार्य[13] **पूरयेत्** । तस्मिन् **सद्योजातायुतान्ताणून्**] सद्योजातादिमन्त्रान् शिवास्त्रान्तान् [**न्यस्य**] विन्यस्य बिन्दुस्थानात्प्रसरत्सुधारसस्रुतिना वामनाडीवाहिना रेचकेन कराङ्गुलिदशकाभिमुखनाडीदशकस्रवदमृतया[14] धेनुमुद्रया [15]वौषट्कारेणास्य

[1] C : समुत्थित pour समुदित
[2] C : पूजोक्त pour पूजा
[3] C : मन्त्रार्चा
[4] B : समनन्तरं
[5] C : ततश्च
[6] B : मन्त्रस्य चात्मनो pour मन्त्रात्मनश्च
[7] A et C : हेम pour हैम
[8] D : प्राप्तम् pour पात्रम्
[9] A : अस्त्रं शुद्धं pour अस्त्रशुद्धं ; D : अस्त्रशुद्ध
[10] D : वस्त्रं pour वस्त्र
[11] A et B : उद्गीत pour उद्गीथ
[12] C : धर्मपात्रं pour वा पात्रं
[13] C : उच्चरन् pour उच्चार्य
[14] B : अमृतवत्तया pour अमृतया
[15] C : वषट् pour वौषट्

[**अमृतं परं**] परामृतरूपताम् **आपाद्य**[1]। **तत** इति तस्माद् **यजनाङ्गानि** [**योग्यतागुणसिद्धये**] योग्यताख्यं गुणं पावित्र्यम् उत्पादयितुं [**प्रोक्षयेत्**] अभ्युक्षेत् ॥ ३२ - ३३ ॥

ततः पितामहस्थाने चानिलादिषु पूजयेत् ।
गणेशकमलास्वामिपादुकाः[2] कुसुमादिभिः ॥ ३४ ॥

[**ततः**] तस्मादर्घ्यपात्रात् **कुसुमादिभिः** [**पितामहस्थाने**] ब्रह्मस्थाने स्थित्वा गणपतिम् [**अनिलादिषु**] वायव्यदिग्भागादारभ्य उत्तरस्यां दिशि [3]लक्ष्मीं गुरुपादुके च **पूजयेत्** ॥ ३४ ॥

तेभ्यः प्रणम्य [4]भूमिष्ठस्थिरजानुः कृताञ्जलिः ।
[5]प्रार्थयेदभ्यनुज्ञानं परमेशार्चनं प्रति ॥ ३५ ॥

[6]गणनाथाम्बिके स्वामिपादुके मां [7]जगद्गुरुम् ।
यजन्तमनुजानीत यथासंपन्नकारकम् ॥ ३६ ॥

**तेभ्यः** सकाशात् [**प्रणम्य**] नत्वा [**भूमिष्ठस्थिरजानुः**] क्षितितलनिहितनिश्चलजानुः [**कृताञ्जलिः**] बद्धाञ्जलिः [**परमेशार्चनं**] शिवार्चनं [**प्रति अभ्यनुज्ञानं प्रार्थयेत्**] [8]एकैकामन्त्रणपूर्वकम् अभ्यर्थयेत् । यथा—**मां** [**यथासंपन्नकारकं**] यथाशक्त्युपहृतो[9]पकरणं [**जगद्गुरुं यजन्तं**] जगद्गुरुयजनोद्यतम् [**अनुजानीत**] आज्ञापयत[10] इति ॥ ३५ - ३६ ॥

ततः शक्त्यादिरुद्रान्ते पीठे वपुषि शंकरम् ।
पूजयेत्प्राग्वदावाह्य [11]मन्त्रचक्रपरिच्छदम् ॥ ३७ ॥

**तत** इति, आज्ञानुग्रहणानन्तरं [**मन्त्रचक्रपरिच्छदं**] मन्त्रचक्रं परिच्छदः परिवारो यस्य तं [**शंकरं**] परमेश्वरं **वपुषि** इति लिङ्गादिमूर्तौ **प्राग्वदावाह्य पूजयेत्** । क्व आवाह्येत्याह—**शक्त्यादिरुद्रान्ते पीठे** इति । आधारशक्तेरारभ्य मण्डलत्रयान्तःस्थवह्निमण्डलाधिपरुद्रभट्टारकान्तव्यापिके[12] पीठे । यथोक्तं श्रीमत् **किरणे**[13]—

[1] C : आपाद्यत इति
[2] C : पादुकां
[3] B : लक्ष्मीगुरुपादुके पूजयेत्
[4] A : भूमिष्ठः स्थिरजानुः ; C : भूमिषु स्थिरजानुः
[5] A : प्रार्थयेदभ्यनुज्ञातः ; C : प्रार्थयेदभ्यनुज्ञातं
[6] A : गणनाथाम्बिकास्वामिपादुके
[7] A : जगद्गुरो
[8] C : एकैकं मन्त्रपूर्वकम्
[9] C : उपाहृत pour उपहृत
[10] B : आज्ञापय
[11] D : मन्त्रयन्त्रपरिच्छदम्
[12] C : व्यापिके
[13] cf. *Kiraṇāgama*, II, 2, 19

" कल्पनीयं ततः पीठमशेषाध्वविनिर्मितम् ।
चतुर्युगमहापादं पृथिवीतत्त्वकन्दकम् ॥ " [1]इत्यादि ।

तस्मिन् स्थितं तद्वपुः मूर्तिः तत्रस्थं भगवन्तमर्चयेत् । [2]**पीठे वपुषीति** व्यधिकरणे सप्तम्यौ । **ततश्चार्थवशान्मूर्त्यादिमन्त्राणां लिङ्गादौ पूजा, आधाररूपाणां तु पीठ इति स्थितम् । यथोक्तं श्रीमन्मये—**

" पीठमन्त्रान्न्यसेत्[3] पीठे मूर्त्यादीन् लिङ्गविग्रहे । " इति ॥ ३७ ॥

**तृतीयार्घ्यस्य विरतौ कृत्वा शिवगतानणून् ।**
**हृदा [4]गृह्यासुमार्गेण स्वहृदब्जे निवेशयेत् ॥ ३८ ॥**

**तृतीयस्य** विद्यातत्त्वव्याप्त्या कृतस्य [**अर्घ्यस्य**] रोधार्घ्यस्य **विरतौ** तत्प्रदानान्ते । **यद्वक्ष्यति** " [5]आवाहने विसर्गे च रोधार्घ्यमुपयुज्यते[6] । " इति । [**अणून्**] समप्राप्तपरिवारमन्त्रान् [**शिवगतान्**] परमेश्वराश्रयान् **कृत्वा** [**हृदा**] हृन्मन्त्रेण [**असुमार्गेण**] [7]प्राणवर्त्मना लयमुद्रया तं [**गृह्य**] गृहीत्वा [**स्वहृदब्जे निवेशयेत्**] स्वहृत्पद्मस्थं कुर्यात् । तथा चोक्तम्—

" विद्युद्वपुःस्थितान्ध्यात्वा स्वस्थानेषु लयं नयेत् ।
मूलमन्त्रेऽपरान्मन्त्रान्भोगस्थानव्यवस्थितान् ॥
मूलमन्त्रं ततो ध्यायेत्स्फुरद्बिन्दौ लयं गतम् ।
बिन्दोरेव लयो नादे नादो विज्ञानशक्तिगः ।
ज्ञानशक्तिः परे लीना यो हृद्व्योम्नि व्यवस्थितः ।
यस्मात्प्रजायते मन्त्रस्तत्रैव प्रविलीयते ॥ " इति ॥ ३८ ॥

किं कृत्वैतत्कार्यमित्याह—

**प्राग्वद्ध्यात्वाभिसंधाय[8]**

[**प्राग्वत्**] हृद्यागोक्तवत् [**ध्यात्वा**] परिवारसहितस्य प्रभोः ध्यानं कृत्वा **ततस्त्वभिसंधाय** शिवाभि[9]मुख्येनावस्थापयितुं [10]पूर्वपूजनोक्त[11]क्रमप्रातिलोम्येनावरणार्चित[12]मन्त्रसंधानं विधाय तृतीयार्घ्यदानादिकं कार्यमित्ययमत्र क्रमः ॥

[1] C : इति
[2] C omet पीठे वपुषि
[3] B : यजेत् pour न्यसेत्
[4] D : गृह्य सुमार्गेण
[5] cf. *Kriyāpāda*, *paṭala* 7, *śloka* 12a : निरोधान्ते विसर्गे च रोधार्घ्यमुपयुज्यते ।
[6] C : उपचर्यते pour उपयुज्यते
[7] C : प्रणवात्मना
[8] C ajoute इति
[9] B : मुखेन pour मुख्येन
[10] C omet पूर्व
[11] C omet क्रम
[12] C : अर्चन pour अर्चित

[1]ततः स स्वहृदब्जनिवेशितमन्त्रः किं कुर्यादित्याह—

तत्त्वसंहृतिवर्त्मना ।

विशेदनामयं तत्त्वं साधकः साध्यविग्रहम् ॥ ३९ ॥

[**तत्त्वसंहृतिवर्त्मना**] ब्रह्मादिकारणेशाधिष्ठितेभ्यो हृत्कण्ठताल्वादिस्थेभ्यः [2]क्ष्मादितत्त्वेभ्यः कारणत्यागक्रमेणाधस्तनमुत्तरस्मिन्[3] संहृत्य द्वादशान्तोर्ध्ववर्त्यनादिदोषविनिर्मुक्तम् [**अनामयम्**] अमलं [**तत्त्वम्**] शिवतत्त्वं **विशेत्** तल्लयं भजेत् । **साधकः साध्यविग्रहम्** इति । **साधकस्तु** प्राग्वदेव पूजाध्यानादिमन्त्रसमर्पणान्तं कृत्वाधस्तनतत्त्वोपसंहारेण **साध्यविग्रहं** साध्यदेवताविशेषमूर्तिं **विशेत्** [4]**तदैक्यमात्मनश्चिन्तयेत्** । तस्य सिद्ध्यर्थत्वेन निष्कलस्वरूपानुपपत्तेरिति[5]। [6]प्रसङ्गाद्वक्ष्यमाणसाधकात्मनोऽपि पूजाध्ययनमन्त्रसंधानविसर्जनादीनि लाघवार्थमतिदिष्टानि ॥ ३९ ॥

ध्यात्वेति प्रागुद्दिष्टमनुस्मृत्य[7] प्रश्नयति

तद्रूपचिन्तनं ध्यानं [8]तत्कृत्यानुगुणं प्रभोः ।

साधारणं विशेषं वा [9]ब्रूहि लक्षणतो हरे ॥ ४० ॥

हे **हरे** ! इन्द्र तस्यानन्तरोक्तस्य **प्रभोः** यद् **रूपचिन्तनं** तत्किल **ध्यानम्** । तच्चास्य [**कृत्यानुगुणं**] काम्यानुगुणं **साधारणविशेषा**दिभेदभिन्नं च [**लक्षणतो**] लक्षणेन **ब्रूहि** आदिश ॥ ४० ॥

अत्रोत्तरम्—

वपुषोऽविद्यमानत्वाद्यद्यत्कृत्यं करोति सः ।

तत्र तत्रास्य [10]तत्कर्तृवपुषानुकृतं वपुः ॥ ४१ ॥

वपुश्च रूपवत्त्वेन रूपं कृत्यात्मकं प्रभोः[11] ।

तत्साधारणमन्यच्च तन्त्रेऽस्मिन्कथ्यते बुधैः ॥ ४२ ॥

[1] B : तत्त्व pour ततः स स्व

[2] C : क्ष्मादिभ्यस्तत्त्वेभ्यः

[3] B : उक्तमस्मिन् pour उत्तरस्मिन्

[4] C : तदैक्यापत्तिमात्मन

[5] B : स्वरूपानुत्पत्तेरिति

[6] C : प्रसङ्गादिति वक्ष्यमाण

[7] C : अनुसृत्य pour अनुस्मृत्य

[8] D : तच्च कृत्यानुगुणं प्रभोः

[9] A : लक्षणं द्विविधं हरे

[10] C : यत्कर्तृ pour तत्कर्तृ ; D : तत्कर्तृतन्मन्त्रानुकृतं

[11] C : विभो ; D : प्रभो

परमार्थतस्तावन्निर्मूर्तिरेव भगवान्। तस्य च सर्वकर्तृत्वं प्रागुक्तयुक्तिभिरुपपादितम्। [1]अशरीरस्य कार्यनिष्पत्त्यदर्शनात् **[यद्यत्कृत्यं]** यत्किंचित्कार्यं **[करोति]** विधत्ते [2]**तत्र तत्र [तत्कर्तृवपुशानुकृतं]** तत्कार्यकर्तृशरीरस्य सदृशम् **अस्य तद्**[3] **वपुः**। [4]प्रसादादौ प्रसन्नरूपम्। क्रोधादौ सक्रोधम्। आप्यायनादावमृतस्यन्दि ध्यानिभिश्चिन्तनीयम्। यथोक्तं **सर्वस्रोतःसंग्रहसारे**—

"येन येन हि रूपेण साधकः संस्मरेत्सदा।
तस्य तन्मयतां याति चिन्तामणिरिवेश्वरः॥" इति।

**तच्च वपुः [रूपवत्त्वेन]** यस्माद्रूपयुक्तम्, अवश्यं हि देहिनो देहस्तत्तद्रूपयुक्तो भवति ततो हेतोः **[कृत्यात्मकं]** कामनिश्चयवस्तुवत् **तत्** [5]तस्मात् **[साधारणं]** सामान्यम् **[अन्यच्च]** विशिष्टं वा शान्तघोरादि [6]रूपमस्य **अस्मिन् [तन्त्रे]** शास्त्रे **[बुधैः]** विद्वद्भिस्तन्त्रावतारकैः **[कथ्यते]** यथाश्रुतमभिधीयते॥ ४१-४२॥

तदेवाह—

**प्रसन्नत्वं यदीशस्य [7]स्तैमित्यं [8]पुरुषस्य वा।**
**चण्डत्वं बहुरूपस्य मुक्तिस्थित्यन्तहेतुकम्॥ ४३॥**

**[ईशस्य]** [9]ईशानभट्टारकस्यानुग्रहप्रवृत्तत्वात् **प्रसन्नत्वं** ध्येयम्। **[पुरुषस्य]** तत्पुरुषस्य **स्तैमित्यं**[10] स्तिमितता। ऐन्द्रत्वेन [11]निश्चलरूपत्वाद् **बहुरूपस्य** अघोरनाथस्य **चण्डत्वम्**। तदेतत्त्रयं यथाक्रमं **[मुक्तिस्थित्यन्तहेतुकं]** मुक्तिस्थित्यन्तहेतुः[12]। स्वार्थे [13]कप्रत्ययः। यदीशस्य प्रसन्नत्वं तन्मुक्तिहेतुः। यच्च तत्पुरुषस्य स्तैमित्यं निश्चलत्वं तत्स्थितिनिमित्तम्। स्तम्भनादिकृते यत्पुनश्चण्डत्वं बहुरूपस्य तदन्तहेतुः क्षयादिकारणम् आदानाख्यकृत्यकारित्वात्[14]॥ ४३॥

[15]इत्थमनुग्रहस्थित्यादानाख्यं कृत्यत्रयमुक्त्वा वामदेवस्य सद्योजातस्य चावशिष्टद्वयं वक्तुमाह—

**विलोभनत्वं वामस्य [16]ध्यायित्वं यदजस्य च।**

[1] C : अतः शरीरस्य
[2] C : ततः pour तत्र तत्र
[3] C omet तद्
[4] B : प्रासादादौ
[5] C omet तस्मात्
[6] C : रूपस्य pour रूपमस्य
[7] B : स्तैमित्वं
[8] C : वपुषेऽपि वा
[9] C : ईशानभट्टारकानुग्रह
[10] C ajoute ध्येयं
[11] C : निश्चलस्वरूपत्वाद्
[12] C : हेतुकम् pour हेतुः
[13] B : कन्प्रत्ययः
[14] C : कारणात् pour कारित्वात्
[15] B : इति pour इत्थम्
[16] D : ध्यायिमु

**तिरोभावोद्भवार्थं तत्**

**वामस्य** वामदेवस्य **विलोभनत्वम्**। स हि सांसारिकेषु भोगेषु जनितगर्तान् पुंसोऽवमत्य यो निक्षिपति। तथा चोक्तम्—

"शुचितत्त्ववृत्तयोऽपि हि भवसुखगर्ते परत्वमिन्धानाः[1]।
[2]वश्याश्चामी पत्युस्तिरस्कृता वामविभवेन॥" इति।

**ध्यायित्वं** ध्यानैकनिष्ठत्वम् [**अजस्य**] **तद्** एतद् द्वयं प्राग्वद्यथाक्रमं [**तिरोभावोद्भवार्थं**] तिरोभावार्थमुद्भवार्थं च। तिरोभावो यथेष्टाद्भोगादप्रच्यावः संरक्षणाख्ययान्यत्रोक्तः। तदर्थं वामदेवस्य [3]विलोभनत्वं ध्येयम्। उद्भवो नानाविधदेहोत्पादः। तन्निमित्तं सद्योजातस्य ध्यायित्वं ध्यातव्यम्॥

एवमेकैकस्य पृथक् पृथग् रूपचिन्तनं तत्तत्कार्यार्थमुक्त्वा युगपत्सर्वेषां चिन्तनस्य च[4] सर्वार्थसाधकत्व[5]माह—

**सर्वार्थं [6]सामुदायिकम्॥ ४४॥**

यदेतद्वक्त्रपञ्चकस्य रूपमुक्तं तत् [7]**सामुदायिकम्** अपृथग्भावस्थितं **सर्वार्थं** सर्वकृत्यसंपादनाय चिन्तनीयम्॥ ४३-४४॥

अत एवाह

**[8]तच्च साधारणं रूपं वैशेषिकमतोऽन्यथा[9]।**

**अतोऽन्यथे**ति वक्ष्यमाणवदेतस्मादन्यादृशं **वैशेषिकम्**॥

तदाह—

**मुक्त्यर्थं स्फटिकाकारं प्रसन्नं चेतसा स्मरेत्॥ ४५॥**
**ईषत्प्रहसितं पीतं गर्वितं स्तम्भनादिषु।**
**करालमसितं [10]पिङ्गजटामकुटभूषितम्॥ ४६॥**
**क्षयादिषु तिरोभावे रक्त[11]चार्वङ्गमण्डनम्[12]।**

[1] B : परत्वमिंधना
[2] B : पाश्याश्चामी पत्युस्तिरस्कृता
[3] B : लोभनत्वं
[4] C omet च
[5] D : साधक pour साधकत्व
[6] D : सामुदायकम्
[7] C : साधकं pour सामुदायिकं
[8] A : तदसाधारणं
[9] B : अथोन्यथा
[10] A : पिण्डं pour पिङ्ग
[11] B et D : सर्वाङ्ग pour चार्वङ्ग
[12] A, B et D : मण्डलम् pour मण्डनम्

जनने सर्वभावानां ध्यानासक्तमनुस्मरेत् ॥ ४७ ॥

[मुक्त्यर्थं] मुक्तिनिमित्तं [स्फटिकाकारं] स्फटिकस्वच्छं [प्रसन्नं] सुप्रसन्नं परमेश्वरमीशानरूपमेव स्मरेत्। सैन्यस्तम्भनादौ प्रागुक्तनैमित्ययुक्तं तत्पुरुषरूपं [गर्वितं] सगर्वं [ईषत्प्रहसितं] सस्मितं पीतं च चिन्तयेत्। क्षयार्थं [असितं] कृष्णाकारं करालं [पिङ्गजटा-मकुट-भूषितं] पिङ्गलजटमुण्डभुजङ्गभूषणं भैरवाकारमघोरं स्मरेत्। तिरोभावो वश्याकर्षणात्मकः। तदर्थं [रक्तम्] उज्ज्वलं [चार्वङ्गमण्डनं] रमणीयावयवप्रसाधनं [1]वामदेवाकारं स्मरेत्। सर्वभावानां [2]स्थावरजङ्गमानां जनने [3]उत्पत्तिनिमित्तं ध्यानासक्तं सद्योजातात्मकं भगवतो रूपं [अनुस्मरेत्] चिन्तयेत् ॥ ॥ ४५-४७ ॥

त्र्यक्षं सर्वात्मकं सर्वसिद्ध्यै साधारणं चितः।

चितो मन्त्रस्य [सर्वसिद्ध्यै] सर्वकार्याणामुद्दीपनार्थानाम्[4] इन्धिकादीनां निष्पत्तये त्र्यक्षं सर्वात्मकं सद्योजातादिपञ्चकमूर्तिं भगवन्तं ध्यायेत् ॥

किं च—

[5]दीक्षायां [6]नैत्यके चैव सर्वव्यतिकरेषु च ॥ ४८ ॥
ध्यायेत्साधारणं रूपं [7]काम्ये कामानुगं मुने।
श्वेतबभ्रुपिशङ्गाभ[8]कृष्णादि

साधारणं यद्भगवतो रूपं संप्रतिन्यायतः प्रागादिवक्त्रवर्णादिवक्ष्यमाणायुधं दीक्षायां [नैत्यके] नित्यकर्मणि च ध्यायेत्। सर्वव्यतिकरेषु चेति, अन्येष्वपि कर्मसु काम्ये वस्तुन्याप्यायनसंतापनोच्चाटनमारणादौ [कामानुगं] [9]तदनुगुणवर्णमेव यथासंख्यं [श्वेत-बभ्रु-पिशङ्गाभ-कृष्णादि] श्वेतारुणकपिलकृष्णवर्णं [10]देवं ध्यायेत्। आदिग्रहणान्नीलश्याममाञ्जिष्ठकपोतादिवर्णं तेषु तेष्वभिचारेषु।

अथ [11]तत्साधारणं रूपं वर्णयति—

असितमूर्धजम[12] ॥ ४९ ॥

[1] B : वामदेवाकारप्रसाधनं
[2] B : जगत्स्थावरजङ्गमानां
[3] B : इत्युत्पत्तिनिमित्तं
[4] B : उद्दीपनार्थानाम् pour उद्दीपनार्थानाम्
[5] A : दीक्षया
[6] D : नैमित्तिके
[7] B : कामे
[8] B : भुजङ्गाभ pour पिशङ्गाभ
[9] C : तत्तद् pour तद्
[10] C omet देवं
[11] B : तत्साधारणरूपं
[12] C : मूलजम्

हेमालिहिमरक्ताभवक्त्राम्बुजचतुष्टयम् ।
गले नीलं पृथुस्कन्धं सुवृत्तायतदिग्भुजम् ॥ ५० ॥

पृथुपीनोन्नतोरस्कं सुपार्श्वोदरनाभिकम्[1] ।
सुवस्त्रच्छन्नमध्याङ्गं पीनवृत्तोरुयुग्मकम् ॥ ५१ ॥

[2]सुजानुजङ्घमागुल्फं श्वेतं रक्ताङ्घ्रिपाणिकम् ।
[3]खड्गखेटधनुर्बाणखट्वाङ्गनृकहस्तकम्[4] ॥ ५२ ॥

[5]कमण्डल्वक्ष[6]स्रङ्मालावराभयकरं परम् ।
रूपं भूतेशवर्यस्य [7]ध्यायेद्धोमेऽर्चने जपे ॥ ५३ ॥

कर्मस्वन्येषु [8]चेष्टाप्त्यै परेषामात्मनोऽपि वा ।

**[भूतेशवर्यः]** भूतेशाः चतुर्दशविधभूतवर्गस्याधिष्ठातारः ब्रह्मेन्द्रादयः, तेषां वर्यो [9]वरणीयः आराध्यः शिवनाथः । तदीयमिदं [10]साधारणं **रूपं** [11]साधारणमेव **[होमेऽर्चने जपे]** [12]होमजपार्चनादिषु **अन्येषु च कर्मसु ध्यायेत्** । किमर्थम्—**आत्मनो [परेषाम्]** अन्येषां च **[इष्टाप्त्यै]** अभिप्रेतसिद्ध्यै । कीदृक् **परं** सर्वातिशायि । **असितमूर्धजं** [13]कृष्णशिरोरुहम् । तथा **हेमालिहिमरक्ताभे**त्यादि । **[हेम-अलि-हिम-रक्ताभं]** पीत-कृष्ण-सितारुणं **[वक्त्राम्बुजचतुष्टयं]** प्राच्यादिवक्त्रचतुष्टयम् । पञ्चमस्येशानवक्त्रस्य [14]सितरूपस्य [15]सितमूर्तित्वेनोऽनुक्तस्यापि सिद्धत्वात् । **[सुवृत्तायतदिग्भुजं]** सुष्ठु वृत्ता आयताश्चानुशोभिनो दिक्संख्यालक्षिता दशभुजा यस्य तत् । **[सुवस्त्रच्छन्नमध्याङ्गं]** शोभनेन वस्त्रेण छन्नं छादितं प्रावृतं मध्यमङ्गं श्रोण्याख्यं यस्य । च्छन्नसर्वाङ्गमिति[16] क्वचित्पाठः । तत्र चोत्तरीयेण श्रोण्यंशुकेन च पूर्वापरकाययोः संवृतत्वात् च्छन्नसर्वाङ्गम् । जङ्घा पादसंधिः [**आगुल्फं**

[1] C : नाभिकम् .
[2] B : सजानु
[3] B : खंग
[4] D : श्रीमहस्तकम्
[5] D : कमण्डलाक्ष
[6] C : सन्माला pour स्रङ्माला
[7] B : ध्यायेद्धोमार्चने
[8] B : चेष्टान्यै ; C : चेष्टासु
[9] C : परमरमणीयः
[10] B : साधारणरूपं
[11] C : साधारण एव
[12] C : होमजपार्चनादावन्येषु च
[13] B : कृष्णसरोरुहम्
[14] C omet सितरूपस्य
[15] C : सितमूर्तित्वतो
[16] C : च्छन्नसर्वाङ्ग इति

श्वेतं] गुल्फः तदन्तं [1]यावच्छ्वेतम्। [रक्ताङ्घ्रिपाणिकं] रक्तावरुणावङ्घ्री पाणयश्च[2] यस्य तत्। नृकशब्देन पुरुषोत्तमाङ्गम्। शेषं सुगमम् ॥ ५० - ५३ ॥

तदेवं [3]ध्यानान्तं स्थण्डिलपूजाविधिमुक्त्वा लिङ्गादावाधारे तदुपदेष्टुमाह—

एवं व्यक्तादिलिङ्गेषु किं तु संहृत्य तानणून् ॥ ५४ ॥
भोगस्थानस्थितान्मूर्तौ [4]निदध्यान्नोपसंहरेत् ।

एवमिति [5]उक्तप्रकारेण [व्यक्तादिलिङ्गेषु] व्यक्ताव्यक्तोभयात्मकेषु वक्ष्यमाणेषु लिङ्गेषु पूजाध्यानादि कार्यमिति शेषः। इयांस्तु विशेषो [6]यदुत तान् पूजितान् [अणून्] मन्त्रान् भोगस्थानस्थान् पूजान्ते संहृत्य लिङ्गादिपूजितायां परमेश्वरमूर्तौ [निदध्यात्] निवेशयेत्[7]। [नोपसंहरेत्] न तु स्थण्डिलयागवत् [8]तेषामात्मन्येवोपसंहारं कुर्यात् ॥

अत एव च—

परोऽ[9]र्घ्यस्तेष्वियत्तायै [10]पूजायां न विसृष्टये ॥ ५५ ॥

तेषु व्यक्तादिलिङ्गेषु पूजायां परः तृतीयो योऽर्घ्यो न [विसृष्टये] विसर्जनार्थं देयः। किं तु [इयत्तायै] इयदसदीयमर्चनमिति पूजायाः समाप्तौ निरोधार्थत्वेन[11] ॥ ५० - ५५ ॥

ननु—[12]“आवाहने विसर्गे च रोधार्घ्यमुपयुज्यते” इति वक्ष्यमाणश्रुत्या [13]रोधनार्घ्येण विसर्जनं यदि [14]न क्रियते तदावाहनस्याप्यकरणमित्याह—

आवाहनं न [15]संनिध्यै पूजानुज्ञप्तयेऽन्वहम् ।

[1] C : यावच्च नरं
[2] B : रक्तावरुणावङ्घ्रिपाणयस्य
[3] C : ध्यातं
[4] A : निरुध्यात् pour निदध्यात्
[5] C : उक्तेन प्रकारेण
[6] B : यदुदितः
[7] B : निवेदयेत्
[8] C : तेषां स्वात्मन्येवोपसंहारं
[9] D : घ्य pour र्घ्य
[10] C : पूजा यागेन
[11] C : निरोधार्घ्येण
[12] cf. *Kriyāpāda, paṭala* 7, *śloka* 12 : निरोधान्ते विसर्गे च रोधार्घ्यमुपयुज्यते
[13] B : रोधनार्घ्येण ; C : रोधार्घ्येण
[14] C omet न
[15] A et D : सांनिध्ये

लिङ्गादौ आवाहनं क्रियत एव । तत्तु न [संनिध्यै] संनिधानार्थमाकल्प्यम्[1] । प्रतिष्ठाया-मेव संनिधानस्याभ्यर्थितत्वात् । किं तु [पूजानुज्ञप्तये] पूजनोद्यतं [2]मामनुजानीहीत्येवमर्थम् आवाह-नार्घ्यदानम् [अन्वहं] प्रत्यहं कर्तव्यम् ॥

न परं स्थण्डिलादावेव मन्त्रार्चनं कार्यं यावद् विद्यापीठेऽपीत्याह—

विद्यापीठेऽपि मत्वैवमेकोच्चारेण पूजयेत् ॥ ५६ ॥

स्रग्गन्धधूपनैवेद्यैः समासरुचिरीश्वरम् ।
सूर्येन्दुमण्डले व्योम्नि गुरौ तत्पादुकासु च ॥ ५७ ॥
जले तेजसि मूर्ध्नि स्वे श्रद्धावान्कल्मषच्छिदे[3] ॥ ५८ ॥

एवम् इत्याधारशक्त्याद्यासनचिन्तनम् [एकोच्चारेण] सकृदुच्चारणेन मत्वा बुद्ध्यानुसंधाय विद्यापीठे स्रगादिभिः [समासरुचि] संक्षेपेच्छुः [ईश्वरं] परमेश्वरं [पूजयेत्] अर्चयेत् । तथा [सूर्येन्दुमण्डले] [4]सूर्येन्द्वोर्मण्डले व्योम्नि आकाश एवाष्टमूर्तेर्मूर्तिभूते तथा [गुरौ] आचार्यमूर्तौ तदीयपादुकासु च [जले] अप्सु च [तेजसि] वह्नौ च [स्वे मूर्ध्नि] स्वमूर्तौ वा [कल्मषच्छिदे] अघौघविघातार्थं [श्रद्धावान्] भक्तिपरः पूजयेत् ॥ ५६ - ५८ ॥

उपसंहर्तुमाह

इति [5]विलयहुताशानन्तपर्यन्तवर्ति-[6]
द्युतिविभवनिमित्तस्यार्चनं लेशतस्ते[7] ।
गदितमतुलमस्यान्यत्फलं तावदास्तां
सपदि पतिसमत्वं साध्यसाम्यादुपैति ॥ ५९ ॥

इति उक्तक्रमेण विलयहुताशनात् कालाग्नेरारभ्य अनन्तपर्यन्त आसने वर्तते यो द्युति-विभवः[8] [9]वामादिशक्तिमहिमा[10] तस्य पूजनप्रवणेषु अनुग्राह्येष्वभिव्यञ्जनाय यो निमित्तं हेतुः

[1] B : आकल्पं pour आकल्प्यम्
[2] C : मामनुजानीहि भगवन्नित्येवमर्थम्
[3] A : कल्मषोज्झिते ; D : कल्मषोच्छिदे
[4] B : सूर्येन्द्वोर्मण्डले ; C : जलेन्द्वोर्मण्डले
[5] A et C : विलयहुताशनानन्तपर्यन्त : B : विलयहुताशनपर्यन्त
[6] A : पङ्क्ति pour वर्ति
[7] B : स्थे pour स्ते
[8] C : विभागः pour विभवः
[9] C : वामदेवादि pour वामादि
[10] C : शक्तिमभितः pour शक्तिमहिमा

परमेश्वरः तस्य **अर्चनं** [**लेशतः**] संक्षेपात् [**ते**] तव [**गदितं**] मयोक्तम् इति **हारीतो मुनिः** स्वशिष्यं ब्रूते। **अस्य** [1]चैवंविधस्यार्चनस्य [**अन्यत् फलं**] सामान्यं **तावद्** भुक्तिमुक्तिलक्षणं [2]**फलम्** **आस्तां** तिष्ठतु। [**सपदि**] तत्क्षणात्पुनः पूजयिता **साध्यसाम्यात्** [3]मन्त्रात्मकशरीरकरणपूर्वकपर-भावावजम्बनात्[4] [**पतिसमत्वं**] परमेश्वरसमानताम् [**उपैति**] प्राप्नोति। तदुक्तम्—

"भुक्त्यै मुक्त्यै शिवीभूय यजेत शिवमादरात्।
ज्ञानक्रियाशक्तिवशान्मन्त्री मन्त्रात्मकः स्थितः॥" इति॥ ५०.

[5]इति श्रीभट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ [क्रियापादे]
अर्चनाप्रकरणं [तृतीयं] समाप्तम्

[इति तृतीयः पटलः]

[1] C: रविसन्ध्यार्चनस्य
[2] B: उक्तम् pour फलम्
[3] B: मन्त्रात्मशरीर
[4] C: आलम्बनात् pour अवलम्बनात्
[5] A: इति श्रीमन्मृगेन्द्रेऽर्चनाविधिपटलस्तृतीयः: D: इति श्रीमृगेन्द्रे क्रियापादेऽर्चनापटलः षोडशः
B: अर्चनाप्रकरणं समाप्तम्.

## [अथ चतुर्थः पटलः]

### [साध्यपूजाप्रकरणम्]

इदानीमनन्तरोपसंहृतप्रकरणान्ते साध्यपदसूचितं साध्यमन्त्रार्चनं वक्तुमारभ्यत इति प्राकरणिकादिसंबन्धपञ्चकमादिवदूह्यम्[1]। 'दृष्ट्वा शिवं यजेत्साध्यम्[2]' इति [3]साधकप्रकरणवक्ष्यमाणेनोपलक्षितं[4] यत्साध्यार्चनं तत्र यदि पृथक्प्रयत्नेनोच्यते तदा ग्रन्थगौरवं स्यादितीहैव वक्ति—

**अथाभ्यर्च्य महेशानं साध्यमन्त्रं यजेच्छ्रियै।**
**सर्वथा सर्वदा गुप्तं साधको वक्ष्यमाणवत् ॥ १ ॥**

**अथ** अनन्तरम्। 'स्वमन्त्रं योजयेन्मन्त्री न क्वचित्काम्यकर्मणि' इति श्रुतेः तत्तत्काम्यविधिसाधनेच्छुः **साधकः** प्राग्वत् [**महेशानं**] परमेश्वरं लिङ्गादौ **अभ्यर्च्य श्रियै** इति पूजाद्युपयोगिशुद्ध-[5]द्रव्यसंपादनाविर्भावनाय यथेष्टं **साध्यमन्त्रं यजेत्**। कीदृशम्—**वक्ष्यमाणवदि**ति चर्यापादाभिधास्यमानक्रमेण[6] क्षेत्रपरिग्रहकरणादिना **सर्वथा** सर्वेण प्रकारेण **सर्वदा च गुप्तं** कृतरक्षम्। यद्वा **सर्वदा सर्वथा च यजे**दिति यजनक्रियाभिसंबन्धनीया[7] ॥ १ ॥

अथ[8] क कीदृशं तं पूजयेदित्याह—

**याम्याब्जपत्रे [9]प्राक्पश्चाद्भागयोः स्त्रीनृविग्रहम् ।**
**[10]अघोरलोचनज्योतिर्मध्ये नान्यत्र कुत्रचित् ॥ २ ॥**

[**याम्याब्जपत्रे**] याम्यं दक्षिणं यदब्जस्य परमेश्वरासनस्य पत्रं [11]तत्र [**प्राक्पश्चाद्भागयोः**] **यौ पूर्वापरौ** भागौ तयोर्यथासङ्ख्यं [**स्त्रीनृविग्रहं**] देवीवाचकमीश्वरवाचकं वार्चयेत्। [12]यदा हि साध्य-

1 C : अभ्यूह्यम् pour ऊह्यम्
2 cf. *Caryāpāda, paṭala* 1, *śloka* 75
3 C : वासक pour साधक
4 B : अपेक्षितं pour उपलक्षितं
5 C : गव्य pour द्रव्य
6 C : ग्रहेण pour क्रमेण
7 B : अभिसंबन्धनीयः ; C : संबन्धनीयः
8 C : का pour अथ
9 B : प्राक्पश्चाद्भागादौ स्त्रीन्नृविग्रहम्
10 A et D : अघोरलोचनं ज्योतिर्मध्ये
11 C : तत्र तत्र
12 C : यदि

मन्त्रो देवीमूर्तिस्तदा पद्मपत्रस्य पूर्वभागे पूज्यः। अथ देवविग्रहस्तदा [1]पश्चिमभागे। इत्थं च [**अघोरलोचनज्योतिर्मध्ये**] दक्षिणपत्रपूजितस्याघोरनाथस्य यल्लोचनत्रयं वामदक्षिणोर्ध्वात्मकं तदीयस्य तेजसो मध्ये निरतिशयवीर्योत्कर्षसंपत्त्यर्थं साध्यमन्त्रमर्चयेत्। **न तु अन्यत्र कुत्रचिद्** इति केषांचिदाशयेन। यतः [2]स्त्रीनृविग्रहमिति व्यस्तसमस्तत्वेन मन्त्रविशेषणं ज्ञेयम्। स्त्रीविग्रहं[3] वामलोचने पुरुषं दक्षिणनेत्रे स्त्रीपुंसविग्रहं गौरीश्वरादिवाचकं मध्ये ॥ २ ॥

अन्यथा हि—

**प्रयाति भस्मसान्मध्ये बहिर्यस्माद्विलुप्यते ।**

**यस्माद् मध्ये** [4]कर्णिकायाः साध्यमन्त्रं [5]पूजयन् साधको [**भस्मसात्**] भस्मभावं [**प्रयाति**] गच्छति [6]तत्पद्मपत्रेभ्यश्च **बहिः** अभ्यर्चयन् **विलुप्यते** व्याहतसिद्धिर्भवति। अतः प्रोक्त एव स्थाने तं पूजयेदिति। अन्ये त्वघोरं सौम्यं यल्लोचनस्य हरनेत्रस्य संबन्धि ज्योतिस्तन्मध्ये शिवासनाब्जस्य दक्षिणे दले साध्यार्चनमिच्छन्ति। तथा चोक्तम्—

"यथासनाब्जं देवस्य तस्य दक्षिणपत्रके।
हरनेत्रस्फुरज्ज्योतिःपुञ्जे साध्यं सदार्चयेत्॥" इति॥

**तत्र [7]स्वाध्वान्तमम्भोजं[8] प्रणवेन निवेशयेत् ॥ ३ ॥**
**तेजोरूपेण शार्वेण हृदा गुप्तं स्वसंश्रये ।**
**[9]संनिधायाङ्गिनं कृत्वा पूजयेदुक्तवर्त्मना ॥ ४ ॥**

**तत्र** अघोरलोचनज्योतिर्मध्ये। **स्वाध्वान्त**मिति यस्य वाच्यरूपस्य [10]साध्यस्य यावत्यध्वनि व्याप्तिः [11]तत्पर्यन्तम् [**अम्भोजं**] पद्मं प्राग्वदासनरूपं **प्रणवेन** [**निवेशयेत्**] न्यसेत्। ततश्च तं साध्यमन्त्रं **शार्वेण** [**हृदा**] हृन्मन्त्रेण [**तेजोरूपेण**] स्फुरत्तेजःपुञ्जेन **गुप्तं** संपुटितं **स्वसंश्रये** स्वाम्नायोक्त आधारे अभिप्रेतवृषभादौ [**संनिधाय**] सम्यग्निधाय [**अङ्गिनं कृत्वा**] अङ्गैर्हृदादिभिः [12]संहितम् [**उक्तवर्त्मना**] प्रागुक्तार्चनक्रमेण **पूजयेत्** ॥ ३ - ४ ॥

[1] B : पश्चिमे भागे
[2] C : तन्वविग्रहमिति
[3] C : स्त्रीविग्रहरूपं
[4] C : कण्ठिकाया
[5] B : पूजयेत्
[6] C omet तत्
[7] D : स्वाधान्तम्
[8] B : अम्बोजं
[9] B : संधियानाङ्गिनं
[10] B omet साध्यस्य
[11] C : तत्तत् pour तत्
[12] B : संहितः

परतस्तु—

**मानसादिविभागेन जप्त्वान्ते सिद्ध्यपेक्षया ।**
**संहृत्य जाग्रतीशेऽ[1]सिवर्मगुप्तं [2]हृदा न्यसेत् ॥ ५ ॥**

**अन्ते** पूजासमाप्तौ[3] **सिद्ध्यपेक्षया मानसादिविभागेन** [जप्त्वा] जपं[4] कृत्वा । उत्तममध्यमापरसिद्धिषु मानसोपांशुभाष्यभूतो[5] जपोऽपि संहितान्तरेषूपदिष्टः । तथा चोक्तं श्रीमत् **पराख्ये**—

"क्षुद्रसिद्ध्यै[6] जपः कार्यो भाष्योऽन्यश्रवणात्मकः ।
उपांशुर्मध्यसिद्ध्यादौ स्वसंवेद्यलघुध्वनिः ॥
श्रेष्ठः श्रेष्ठतमे कार्यसिद्ध्यादौ मानसो जपः ॥" इति ।

क्वचित्तु साध्यमन्त्रस्योत्तममध्यमापरत्वेन मानसोपांशुभाष्यभेदाज्जपनियम इष्टः । [7]यथोक्तं श्रीमत्**पौष्करे**—

"उत्तमान्मानसान्मन्त्रान्मध्यमानप्युपांशुना ।
अधमानपि मन्त्रांस्तु भाष्येणेह जपेद्बुधः ॥" इति ।

तं च[8] जपं [9]**हृदा** इति हृन्मन्त्रेण [**संहृत्य**] उपसंहृत्य आद्यन्तस्थेन हृन्मन्त्रेण संपुटीकृत्य [**असिवर्मगुप्तम्**] असिवर्मभ्यामस्त्रकवचाभ्यां रक्षितं **जाग्रति** आदानव्यापारोद्युक्ते [**ईशे**] भगवति **न्यसेत्** न्यासीकुर्यात् । उक्तं च—

"अस्त्रेण वर्मणा हृद्वयं संपुटीकृत्य चार्पयेत् ।
जपं प्रणम्य देवाय तथा स्याद्रक्षितो हि सः ॥" इति ।

समर्पणप्रयोगश्च पूर्वमिहैवोक्तः—

"[10]तुभ्यं निवेदयामीति संप्रदानप्रयोगतः ।
[11]स्वजपं साधकः काममभिसंधाय निक्षिपेत् ॥" इति ॥ ५ ॥

अथैवं पूजितस्य साध्यस्य मन्त्रस्य प्रत्यहं विसर्जनायाह—

[1] D : अस्य pour असि
[2] A, B et D : हृदि pour हृदा
[3] C ajoute च
[4] C : जपं तन्मध्यमापरसिद्धिषु
[5] C : भेदेन pour भूतो
[6] C : सिद्धो pour सिद्ध्यै
[7] C : यथा चोक्तं
[8] B omet च
[9] B : हृदि
[10] cf. *Kriyāpāda, paṭala* 3, *śloka* 29b - 30a.
[11] *ibid.* मुमुक्षुः pour स्वजपं ; C : स्वरूपं

ततो भगवताक्रम्य[1] तद्रूपवपुषा नयेत् ।
[2]एकीभूया[3]ण्वधिष्ठानमासिद्धेस्तत्त्ववर्त्मना ॥ ६ ॥

यस्यान्यस्य प्रधानमन्त्रस्य दक्षिणदिग्भागे साध्यमन्त्रः पूजितः तेन [4]**भगवता । तद्रूपवपुषेति** तस्य साध्यदेवताविशेषस्येव रूपवपुषी यस्य तेन तथाविधेन तदाकृतिना तत्कान्तिना च तं साध्यमन्त्रम् **आक्रम्य** अधिष्ठितं कृत्वा । **एकीभूये**ति उक्तवदधिष्ठितसाध्यमन्त्रेण परमेश्वरेण सहात्मन एकीभावं विचिन्त्य [**तत्त्ववर्त्मना**] मुख्यपूजाप्रकरणोक्ततत्त्वक्रमेण प्रत्यहम् **आसिद्धेः** सिद्धिपर्यन्तं यावत् । **अण्वधिष्ठानम्** इति साध्यमन्त्रास्पदं **नयेत्** । यावत्यध्वनि साध्यमन्त्रस्य व्याप्तिस्तदन्ते तं लीनं भावयेदित्यर्थः । न [5]त्वस्य [6]परतत्त्वे लयः कार्य इति दर्शितं प्राक् ॥ ६ ॥

अमुमेव क्रममभिषिक्ताचार्यव्रते स्वपररक्षादौ मन्त्रसिद्धिजिज्ञासायां चातिदेष्टुमाह—

कुर्यादेवं देशिकोऽप्यल्पकालं
हित्वा रोधं [7]मान्त्रिकं तद्व्रतस्थः ।
क्षेमाद्यर्थं कस्यचित्स्वात्मनो[8] वा
जिज्ञासुर्वा [9]मुद्रिताशेषरन्ध्रः ॥ ७ ॥

**एवम्** [10]इत्युक्तविधानं **देशिकोऽपि** [11]आचार्यव्रतस्थो [**अल्पकालं**] नातिचिरं **कुर्यात्** । साधकापेक्षया[12]चार्यस्याल्पकालत्वम् । तथा ह्यग्रे "[13]देशिकोऽपीदमातिष्ठेद्" इत्युपक्रम्य वक्ष्यति—

"कुर्यात् त्रिपञ्चसप्ताहदशरात्रद्विसप्तकम् ।
मासार्धमेकविंशाहं मासं न च परं ततः ॥" इति ।

किं कृत्वा [**मान्त्रिकं रोधं**] [14]मन्त्रसंरोधं **हित्वा** । साध्यस्य[15] परमेश्वरेणाक्रमणं संचिन्त्यात्मना सहैकीकृत्य [16]स्वव्याप्त्यन्ते लय उक्तः । [17]तथाचार्यव्रतादौ मन्त्रस्य न कार्यः । किं तु तदाक्रमणानपेक्ष

[1] A : भगवता काम्य
[2] A : एकीभूत pour एकीभूय
[3] C : अण्ड pour अणु
[4] B : भगवते
[5] C : त्वेतस्य
[6] C : परे तत्त्वे
[7] A : मान्त्रिकः
[8] C : स्वार्थतो
[9] C : मोदित pour मुद्रित
[10] C : उद्युक्त pour इत्युक्त
[11] B : आचार्यीय व्रतस्थो ; C : प्राचार्यव्रतस्थो
[12] C : चास्य pour आचार्यस्य
[13] cf. *Kriyāpāda, paṭala* 8, *śloka* 238b, 239b et 240a.
[14] C : मन्त्रस्थरोधं
[15] C ajoute यथा
[16] C omet स्व
[17] C : तथा चाचार्यव्रतादौ

एवेत्यर्थः । **कस्यचित्** स्वसुतादेः शिष्यादेर्वा **क्षेमाद्यर्थम्**, आदिग्रहणादाप्यायनादिनिमित्तं, [1]**कुर्याद्** इत्येवमभिसंबध्यते । **स्वात्मन** एव [2]श्रेयोऽर्थम् । उपस्थिते ह्युपसर्ग एवंविधयजनक्रमेण क्षेममुत्पद्यते । यद्वक्ष्यति—

"[3]देशिकोऽपीदमातिष्ठेद्विधानं शान्तिकादिषु ।
विधेयेषूपसर्गादौ परेषामात्मनोऽपि वा ॥" इति ।

**[जिज्ञासुः]** मन्त्रसिद्धिं [4]वा ज्ञातुमिच्छुः कुर्यादेवमिति[5] स्थितम् । [6]कीदृश इत्याह— **मुद्रिताशेषरन्ध्र** इति । [7]मुद्रितानि वक्ष्यमाणाभिः मुद्राभिः कृतरक्षाणि अशेषाणि रन्ध्राणि अखिलानि क्रियाछिद्राणि येन सः । [8]एवं च तत्र क्रियावसरेषु मुद्राप्रयोगतः[9] प्रतिहतच्छिद्रः सन्नेवं कुर्यादि- : ॥ ७ ॥

[10]इति भट्टविद्याकण्ठात्मजभट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ [11] क्रियापादे साध्यपूजाप्रकरणं [12]तुरीयं समाप्तम्

[ इति चतुर्थः पटलः ]

[1] C : कुर्यादेवेत्यभिसंबध्यते
[2] C : श्रेयो समुपस्थितेऽप्युपसर्गेण
[3] cf. *Kriyāpāda, paṭala* 8, *śloka* 238b - 239a.
[4] B : आज्ञातुम् pour वा ज्ञातुम्
[5] B : कुर्यादित्येवमिति
[6] B : कीदृशमित्याह
[7] C : मुद्रिताभिः
[8] C : एवं कृतं तत्क्रियावसरेषु
[9] C : प्रयोगः pour प्रयोगतः
[10] A : इति श्रीमन्मृगेन्द्रे क्रियापादे साध्यमन्त्रार्चनविधिपटलश्चतुर्थः ; B : साध्यपूजाप्रकरणं समाप्तम् ; D : इति मृगेन्द्रे क्रियापादे साध्यमन्त्रार्चनपटलः सप्तदशः
[11] C omet क्रियापादे
[12] C omet तुरीयं

# [अथ पञ्चमः पटलः]

## [मुद्राप्रकरणम्]

साध्यमन्त्रार्चनोपसंहारे "मुद्रिताशेषरन्ध्र" इत्यनेन मुद्रालक्षणमाक्षिप्तमधुनाभिधीयत इति प्रकरणसंबन्धः ।

**अथ मुद्राः क्रियाङ्गत्वादुच्यन्ते ताश्च नामतः ।**
**[1]गदिता एव [2]परिघाकृष्टितालघटादृते ॥ १ ॥**

**अथ** इति सांप्रतं **मुद्रा** अधिक्रियन्ते[3] यतस्ताः [**क्रियाङ्गत्वात्**] क्रियाणामावाहन[4]स्थापननिरोधानामङ्गानि तस्माद् [**उच्यन्ते**] अभिधीयन्ते तल्लक्षणानभिज्ञस्यानुष्ठातुः सर्वाङ्गानां निश्छिद्रक्रियानिष्पत्तेः । **ताश्च** मुद्राः पूर्वमर्चनप्रकरणे [**नामतः**] लुङ्मकराद्यभिधानेन [**गदिताः**] उक्ता **एव** [**परिघाकृष्टितालघटादृते**] परिघाकर्षणीतालघटमुद्रावर्जितम् ।

नन्वावाहनस्थापननिरोधिन्योऽप्यनुद्दिष्टसंज्ञाः । तत्कथं परिघाकृष्टितालघटादृत इति परिगणनम् । सत्यम् । तास्त्वावाहन्यादयो[5] यथावसरमुद्दिष्टा एव । तदुक्तं प्राक्—

"[6]नवार्कतेजसोऽङ्गानि विधायावाहमुद्रया ।
स्थापन्या स्थापनं कुर्यात्" "[7]निरुन्ध्याद्रोधमुद्रया ॥" इति ॥ १ ॥

इदानीं मुद्राशब्दस्यान्वर्थतामाह—

**[8]विघ्नौघमुद्रणान्मुद्राः कथ्यन्ते हरशक्तयः ।**
**यतो न [9]वस्तुनोऽन्यस्य [10]श्रूयते कृत्यमीदृशम् ॥ २ ॥**

एताः किल [**हरशक्तयः**] भगवतः शक्तयो [**विघ्नौघमुद्रणात्**] विघ्नसंघातानां मुद्रणाद् अस्वतन्त्रीकरणात् **मुद्रा** इति [**कथ्यन्ते**] उच्यन्ते । [**यतो न कृत्यमीदृशं**] यस्मान्नैवंविधं कार्यं तच्छक्तिभ्यो-

[1] D : जगतां ये च
[2] B : परिखा
[3] C ajoute इति
[4] C : आवाह pour आवाहन
[5] C : तास्त्वावाहनादयो
[6] cf. *Kriyāpāda, paṭala* 3, *śloka* 13.
[7] cf. *Kriyāpāda, paṭala* 3, *śloka* 14a
[8] A : विघ्नौघमुद्रणा मुद्राः
[9] D : वस्तुतोऽन्यस्य
[10] A, B, C et D : श्रूयन्ते

ऽन्यस्य **वस्तुनः श्रूयते**। ततश्च न कराङ्गुलिसंनिवेशमात्रं मुद्राः किं तु परमेश्वरशक्तय एव ज्ञेयाः ॥ २ ॥

## [ स्रुङ्मुद्रा ]

प्रथममुद्दिष्टायाः स्रुङ्मुद्रायास्तावल्लक्षणमाह—

**कन्यसां कन्यसाङ्गुल्या गृह्यानन्तरयोस्ततः ।**
**व्यस्तयोर्मध्यमाङ्गुल्यौ सार्योपर्यग्रसंगते ॥ ३ ॥**
**[1]अथोर्ध्वमासां संसक्ते तर्जन्यङ्गुष्ठयुग्मके ।**
**[2]षण्णां [3]स्रुगेषा जातस्य मुद्रा शक्तिप्ररोचनी[4] ॥ ४ ॥**

अञ्जलिरूपावुभौ हस्तौ कृत्वा तयोरन्तरे [**कन्यसां कन्यसाङ्गुल्या गृह्य**] परस्परावष्टब्धं कनिष्ठाद्वयं विधाय। **अनन्तरयोरिति,** तयोः कनीयस्योर्ये अनन्तरे अव्यवहिते अनामिके तयोः। [5]**व्यस्तयोरिति** असंसक्तयोर्वामहस्ततले प्रसृता दक्षिणानामिका दक्षिणे वामानामिकेति [6]विपर्ययेण स्थितयोः **अग्रसंगते** अन्योन्यसंश्लिष्टाग्रे **मध्यमाङ्गुल्यौ उपरि** [**सार्य**] प्रसार्य ऊर्ध्वप्रसृते कृत्वा **अथ** अनन्तरम् **आसां षण्णां** कनिष्ठानामिकामध्यमानां [**तर्जन्यङ्गुष्ठयुग्मके**] तर्जनीयुग्मके अङ्गुष्ठयुग्मके च **ऊर्ध्वं संसक्ते** उपरि श्लिष्टे सति [**स्रुक्**] स्रुक्संज्ञा[7] **मुद्रा** व्यज्यते। एवं चाङ्गुष्ठावुच्छ्रितौ[8] [9]मध्यमे मध्यमलग्नप्रान्ते [10]तर्जन्यावाकुञ्चिते मध्यमापृष्ठलग्नप्रान्ते अस्याः शक्त्याकृतेः [11]प्रणालानुकरणार्थं विरलान्तरयोः सक्तयोरुपरि पृष्ठे **अग्रसंगते** प्रान्तसंसक्ते **मध्यमाङ्गुल्यौ** मध्यमे द्वे [**सार्य**] प्रसार्य संश्लेष्य। अथेत्यनन्तरमेतासां[12] कनिष्ठामध्यमानामिकानां **षण्णाम्** [13]अधःस्थितानाम् [14]उपरिष्टान्मूलभागे च वलयाकृतितर्जन्यौ परिवर्तुलवृतधारानुकारार्थं कार्ये। तयोरप्यङ्गुष्ठौ किंचिदाकुञ्चितौ स्वस्थानस्थावेव। एवं च **तर्जन्यङ्गुष्ठयुग्मके संसक्ते** सति [15]इति सतिसप्तमी ज्ञेया। कुर्यादित्यध्याहारेण [16]द्वितीयापि। **एषा स्रुगाख्या मुद्रा** [**जातस्य**] सद्योजातनाथस्य **शक्तिप्ररोचनी** शक्त्युद्दीपनी ॥ ३ - ४ ॥

[1] A : अधोर्ध्वमासां
[2] D : क्षणान्
[3] A : स्रगेषा
[4] D : प्ररेचनी
[5] C omet व्यस्तयोः
[6] B : पर्यायेण
[7] B : संख्या pour संज्ञा
[8] C : चाङ्गुष्ठद्वितौ
[9] C : मध्यमा
[10] B omet तर्जन्यावाकुञ्चिते मध्यमापृष्ठलग्नप्रान्ते
[11] C : प्रणवानुकरणार्थं
[12] C : एव तासां pour एतासां
[13] C : मध्यस्थितानां
[14] B : उपरिष्ठानां pour उपरिष्टात्
[15] C : तत्सप्तमी pour इति सति सप्तमी
[16] C : द्वितीयाविषया pour द्वितीयापि एषा

[मकरी मुद्रा]

[1]स्रुगेवाधोर्ध्वसंकोचप्रसारणविभागतः ।
मकरी वामदेवस्य कुञ्चिते तर्जनीद्वये ॥ ५ ॥

[**स्रुगेव**] स्रुङ्मुद्रैव **तर्जनीद्वये** स्वाभिमुख्येन मकराकारानुकरणाय किंचित् **कुञ्चिते** सति [**अधोर्ध्वसंकोचप्रसारणविभागतः**] अधःस्थितपरस्पराश्लिष्टा[2]ङ्गुष्ठद्वयस्य तथोर्ध्वस्थिततर्जनीद्वयस्य च संकोचने प्रसारणे च विभागाद्धेतोः **वामदेवस्य** [3]**मकरी**नाम भवति । अस्यामपि वामदक्षिणकनिष्ठे व्यत्ययेन [4]प्रसार्य दंष्ट्राकारे कार्ये ।

यथोक्तं [5]जयद्रथाधिकारे—

" उभयोर्हस्तयोरेव ज्येष्ठाङ्गुलिनिपीडिते ।
पृष्ठतोऽनामिके कार्ये तर्जन्यौ तिर्यगानने[6] ॥
अङ्गुष्ठौ च सुसंश्लिष्टावास्याकारप्रमाणितौ ।
दंष्ट्राकारान्तरे कार्ये अङ्गुष्ठौ तु कनिष्ठिके ॥
मकरी नाम मुद्रैषा सर्वविघ्नप्रभक्षणी[7] ।" इति ॥ ५ ॥

[शूलमुद्रा]

शूलमुद्रामाह—

पार्श्वयोर्बहुरूपस्य त्रिशूलं[8] दुष्टदारणम् ।
स्थितयोर्मध्ययोः प्राग्वत् किं तु षट्पिण्डगर्भयोः ॥ ६ ॥

उन्मुखयोरन्योन्यान्तरिताङ्गुल्योर्हस्तयोः परस्परं संश्लिष्टोच्छ्रितं मध्यमाद्वयं कनिष्ठाद्वयमङ्गुष्ठद्वयं च कृत्वा तर्जन्यनामिकाचतुष्टयं हस्तपृष्ठनिर्लीनं विधाय त्रिशूलाख्यां मुद्रां दुष्टदमनीमघोरनाथस्य दर्शयेदिति तात्पर्यम् । अक्षरार्थस्तु [**षट्पिण्डगर्भयोः मध्ययोः**] षण्णामङ्गुलीनां पिण्डः समाहारः षट्पिण्डं तद्गर्भभूतं तत्पिण्डवर्तिन्यौ ये मध्यमे द्वे अङ्गुल्यौ तयोः । **प्राग्वदिति** [9]मकरीवत्स्पृष्टत्वेन **स्थितयोः**

[1] A : स्रक् pour स्रुक्
[2] C : श्लिष्ट pour आश्लिष्ट
[3] B : मकरीनाम नाम
[4] C omet प्रसार्य
[5] B : जयद्राधिकारे
[6] C : तिर्यगागते
[7] C : प्रभक्षिणी
[8] D : त्रिशूलदृष्टदारुणम्
[9] C : मकरवत्

तिष्ठन्त्योः सत्योः [**दुष्टदारणं**] [1]दुष्टनाशिनी **बहुरूपनाथस्य** [**त्रिशूलं**] त्रिशूलमुद्रा प्रदर्शनीयेति शेषः । **किं तु** इति प्राक्तनलक्षणाद्विशेषः । एवं च षण्णामङ्गुलीनां विनियोगादङ्गुष्ठद्वयस्य कनिष्ठाद्वयस्य च पारिशेष्यात् पार्श्वद्वयवर्त्यपराश्रितद्वयानुकरणार्थं विनियोगमाह—**पार्श्वयोः स्थितयोरिति** । व्यवहितसंबन्धः । पार्श्वशब्देन तात्स्थ्यादङ्गुष्ठद्वयं कनिष्ठाद्वयं च लक्षणयोक्तम् । तयोः स्थितयोरित्युच्छ्रितयोरिति । अस्याः श्री**मालिनीतन्त्रे** त्रिशिखीमुद्रा इति व्यपदेशः । यदुक्तं तत्र—

"करावूर्ध्वमुखौ कार्यावन्योन्यान्तरिताङ्गुली ।
अनामे मध्यपृष्ठस्थे तर्जन्यौ मूलपर्वगे ॥
मध्यमे तूत्थिते कार्ये कनिष्ठापुरुषावपि ।
तर्जन्यौ मध्यपार्श्वस्थे विरले परिकल्पिते ।
मुद्रात्रिशिखो ह्येष [2]क्षणदावशकारकः ।" इति ॥ ६ ॥

## [ पद्ममुद्रा ]

पद्ममुद्रोच्यते—

**अ ष्ठगर्भकौ[3] पाणी पङ्कजं विस्तृताङ्गुलि[4] ।**
**सक्तोपबाहुकं वक्त्रमन्त्रशक्तिप्ररोचनम् ॥ ७ ॥**

कर्णिकानुकरणार्थमङ्गुष्ठौ [5]गर्भे ययोस्तौ [6]**अङ्गुष्ठगर्भकौ** [**पाणी**] हस्तौ कृत्वा [**विस्तृताङ्गुलि**] विरलाङ्गुल्यष्टकानुकृतदलाष्टकं [7]**पङ्कजं** [8]पद्मं भवतीति शेषः । कीदृक्-**सक्तोपबाहुकमिति** । सक्तौ श्लिष्टावुभयमणिबन्धौ नालानुकरणार्थं यस्मिन् तादृक् । एवं च [**वक्त्रमन्त्रशक्तिप्ररोचनं**] वक्त्रमन्त्रस्येति तत्पुरुषमन्त्रस्य [**शक्तिप्ररोचनं**] शक्त्युद्दीपनम् ॥ ७ ॥

## [ धेनुमुद्रा ]

धेनुमुद्रामाह—

**विदध्यात्पाणी[9] संयोज्य[10] तर्जनीमध्यमेऽपि वा ।**
**कन्यसानामिके चैषा [11]धेनुरीशप्रदर्शिनी ॥ ८ ॥**

[1] C : दुष्टनाशिनी
[2] C : क्षणदावेशकारकः
[3] A et B : अङ्गुष्ठगर्भगौ
[4] A : विस्तृताङ्गुली ; B : विसृताङ्ली
[5] C : गर्भकौ यथोक्तौ
[6] B : अङ्गुष्ठगर्भौ
[7] B omet पङ्कजं
[8] C omet पद्मं
[9] A, B, C et D : पाणि pour पाणी
[10] D : संशोध्य
[11] D : धनु pour धेनु

**[पाणी संयोज्य]** परस्परान्तरिताङ्गुली हस्तौ कृत्वा **[तर्जनीमध्यमे]** वामतर्जनीं दक्षिणमध्यमया दक्षिणतर्जनीं वाममध्यमया **मिथ** इति अन्योन्यं **संयोज्य** तद्वच्च **[कन्यसानामिके]** दक्षिणकनिष्ठां वामानामिकया दक्षिणानामिकां च वामकनिष्ठया संयोज्य **[एषा]** सेयम् **[ईशप्रदर्शिनी]** ईशानभट्टारकसंनिधापनी[1] **[धेनुः]** धेन्वाख्यमुद्रा ॥ ८ ॥

## [ मनोरथमुद्रा ]

अथ मनोरथा—

[2]वलिते मध्यमाङ्गुल्यौ यवीयस्यौ च हस्तयोः ।
तदन्तरे स्वतलगे तर्जन्यौ संगते [3]पुरः ॥ ९ ॥
[4]तन्मूलपर्वणोरग्रे निधायाङ्गुष्ठयोरियम्[5] ।
मुद्रा मनोरथा[6] नाम प्रभोः[7] सान्निध्यकारिका ॥ १० ॥

उत्तानयोर्**हस्तयोः** **[वलिते]** [8]परस्परावेष्टिते **[यवीयस्यौ]** कनिष्ठिके[9] **मध्यमाङ्गुल्यौ** मध्यमे [10]चाङ्गुल्यौ कृत्वा । **तदन्तरे** इति मध्यमाकनिष्ठयोरन्तरालवर्तिन्यौ अनामिके **[स्वतलगे]** [11]स्वहस्ततलनिविष्टे विधाय । **पुर** इत्यग्रे [12]**तर्जन्यौ** **[संगते]** [13]संमेल्य **तन्मूलपर्वणोः** तयोः तर्जन्यो**र्ये** **मूलपर्वणी** [14]उद्वर्तितसंधी तत्र **[अङ्गुष्ठयोः अग्रे]** [15]अङ्गुष्ठद्वयसंबन्धिनी द्वे अग्रे **[निधाय]** संयोज्य **मनोरथा नाम मुद्रा** **[प्रभोः सांनिध्यकारिका]** परमेश्वरसान्निध्यहेतुः प्रदर्श्या ॥ ९ - १० ॥

## [ नमस्कारमुद्रा ]

[16]नमस्कारमुद्रां वक्ति—

प्रगुणावुदरश्लिष्टौ [17]न्यस्ताङ्गुष्ठौ करौ नतिः ।

[1] B : संनिधानी pour संनिधापनी
[2] A, B et D : चलिते
[3] A : परः
[4] D : यन्मूल pour तन्मूल
[5] D : निधायाङ्गुष्ठयोदितम्
[6] A : मनोरथो
[7] D : प्रभो pour प्रभोः
[8] B : परस्परचेष्टिते
[9] C : कनिष्ठ
[10] C : वा pour च
[11] C : स्वस्व pour स्व
[12] C : तर्जन्योः
[13] B : संमील्य तयोः ; C : संमीलितयोः
[14] B : उद्वर्तिसंधी
[15] B : अङ्गुष्ठद्वये अग्रे
[16] C : नमस्कृतिमुद्रां
[17] A : न्यस्ताङ्गुष्ठकरो

**निरुक्तानुक्तमन्त्राणां[1] सान्निध्यकरणी[2] परा ॥ ११ ॥**

**उदरश्लिष्टौ** श्लिष्टोदरौ स्पृष्टौ [**प्रगुणौ**] स्वस्थानस्थौ **न्यस्ताङ्गुष्ठौ** कुर्वता [**नतिः**] नतिमुद्रा प्रदर्शयितव्या । एषा च [**निरुक्तानुक्तमन्त्राणां**] [3]कथिताकथितानां मन्त्राणां [**परा सांनिध्यकरणी**] प्रकृष्टं सान्निध्यं करोति ॥ ११ ॥

## [ आवाहनमुद्रा ]

आवाहनीमाह—

**हस्ताभ्यामञ्जलिं कृत्वा कनिष्ठामूलसंगतौ ।**
**अङ्गुष्ठौ सर्वमन्त्राणामियमावाहकर्मणि ॥ १२ ॥**

शुक्तिपुटाकाराभ्यां **हस्ताभ्याम् अञ्जलिं कृत्वा** [**कनिष्ठामूलसंगतौ अङ्गुष्ठौ**] कनिष्ठाबुध्ने ऽङ्गुष्ठौ संश्लेषयेदिति **इयम्** आवाहनी **सर्वमन्त्राणां** सर्वेषां मन्त्राणाम् **आवाहकर्मणि** आवाहनकर्मणि योज्या ॥ १२ ॥

## [ स्थापनी मुद्रा निरोधनी मुद्रा च ]

स्थापनीरोधन्यावुच्येते—

**मुष्टी समुन्नताङ्गुष्ठौ [4]स्थापन्यङ्गुष्ठगर्भगौ[5] ।**
**तौ [6]निष्ठुरा निरोधाय सर्वाणूनामिहागमे ॥ १३ ॥**

अन्योन्याभिमुखौ [**समुन्नताङ्गुष्ठौ**] उदग्राङ्गुष्ठौ **मुष्टी** कुर्यात् । एषा **स्थापनी** नाम मुद्रा । [**तौ**] तावेव तु मुष्टी **अङ्गुष्ठगर्भगा**विति अङ्गुष्ठौ गर्भगौ ययोस्तौ तथाविधौ कुर्यात् । एवं च **निष्ठुरा**-ख्येयं सर्वमन्त्रसंरोधनी **इह** अस्मिन् **आगमे** प्रोक्तेत्यध्याहारः ॥ १३ ॥

## [ परिघामुद्रा ]

अथ [7]परिघामुद्रामाह—

**मध्यमाङ्गुष्ठपर्यन्तं मुष्टौ[8] सति कृते स्मृता ।**

[1] C : करणानां pour मन्त्राणां
[2] A : करिणी pour करणी
[3] C omet कथिता
[4] A et B : स्थापिनी pour स्थापनी
[5] B : गर्भकौ pour गर्भगौ
[6] B : निष्ठुरौ
[7] B: परिखा pour परिघा
[8] A et B : मध्यमाङ्गुष्ठपर्यन्तमुष्टौ

तर्जनी [1]परिघश्चण्डो विघ्नसंघातनाशनः[2] ॥ १४ ॥

मध्यमाङ्गुलिनिविष्टाङ्गुष्ठे प्रसारिततर्जनीके **मुष्टौ कृते सति** [**चण्डः परिघः**] उदग्रपरिघो[3] नामायुधविशेषो [**विघ्नसंघातनाशनः**] विघ्नौघविघातकृत् प्रदर्शितो भवति ॥ १४ ॥

## [आकर्षणी मुद्रा]

आकर्षणीं कथयति—

[4]स्वपर्वकुञ्चिताः कर्मपाण्योरङ्गुष्ठकेतराः ।
कृतेन शाखामुद्रेयं कर्षणी सर्वकृष्टिषु[5] ॥ १५ ॥

[**स्वपर्वकुञ्चिताः**] [6]स्वेषु स्वेषु पर्वसंधिषु वक्रीकृताः [**अङ्गुष्ठकेतराः**] कनिष्ठादिक्रमेणाङ्गुष्ठवर्जिताङ्गुलीः [**कर्मपाण्योः**] उभयोः हस्तयोः कुर्यात् । सा **इयं** [7]**कर्षणी** [8]आकर्षणी नाम [**सर्वकृष्टिषु**] सर्वाकृष्टिनिमित्तं प्रदर्श्या । कर्मपाण्योरिति क्वचिद्दक्षिणः कर्महस्तः [9]क्वचिद्वाम इति कृत्वा योऽसौ यत्राम्नातस्तेनैवैषा[10] [**शाखामुद्रा**] लयमुद्रा संपाद्या इत्यर्थः ॥ १५ ॥

## [ घटमुद्रा ]

घटमुद्रामाह—

[11]संहताङ्गुलिकौ पाणी पृष्ठार्धेन्दूदराहितौ ।
[12]सुश्लिष्टमूलावङ्गुष्ठौ [13]तर्जन्यङ्गुष्ठपर्वगौ ॥ १६ ॥
घटमुद्रा समाख्याता स्नानादिविधिपूरणी ।

1 B : परिख pour परिघः
2 D : नाशकः pour नाशनः
3 C : उदग्रपरिघा
4 A : सुपर्व pour स्वपर्व
5 A : तुष्टिषु pour कृष्टिषु ; C : कर्षिषु
6 C : सर्वेषु pour स्वेषु स्वेषु
7 C omet कर्षणी
8 B omet आकर्षणी
9 C : क्वचिच्च वाम
10 C : इष्टा pour एषा
11 B : द्वौ संमताङ्गुलौ पाणी ; C : संगताङ्गुलिकौ पाणी ; " द्वौ वामदक्षिणौ पाणी " इति व्याख्यात्रभिप्रेतः पाठ इति भाति .
12 A : संश्लिष्ट pour सुश्लिष्ट
13 " तर्जन्यङ्गुष्ठमूलगौ " इति व्याख्यात्रभिप्रेतः पाठ इति भाति .

पृष्ठमर्धेन्दुवद्ययोस्तौ पृष्ठार्धेन्दू । [1]पृष्ठार्धेन्दू उदराहितौ च **पृष्ठार्धेन्दूदराहितौ** अर्धचन्द्रवत्कुटिल-पृष्ठौ परस्परोदरनिहितौ [**पाणी**] करौ कार्यौ । तयोश्चाङ्गुष्ठौ **सुश्लिष्टमूलौ** सुष्ठु [2]अतिशयेन परस्पर-संमिलितमूलौ यथाक्रमं च वामदक्षिणौ [3][**तर्जन्यङ्गुष्ठपर्वगौ**] तर्जन्यङ्गुष्ठमूलनिलीनाग्रौ कुर्यादितीयं **घटमुद्रा** [**स्नानादिविधिपूरणी**] अभिषेकादिविधिपूरणी [**समाख्याता**] उक्ता ॥

[ **तालमुद्रा** ]

विघ्नप्रशमनाय तालाख्यमुद्रामभिधत्ते—

[4]तालस्त्रिराहतिः पाण्योः साट्टहासोऽन्तरायनुत्[5] ॥ १७ ॥

[**पाण्योः**] हस्ततलयोः [**त्रिः**] त्रीन्वारान् [**आहतिः**] परस्परमाहननं [**साट्टहासः**] सशब्द-हास्यसहितः [**तालः**] तालाख्यः [**अन्तरायनुत्**] विघ्नापहो भवति ॥ १६ - १७ ॥

उपसंहर्तुमाह—

एता मुद्रा मानसेज्योपहारे
सांनिध्यार्थे वाङ्मनोभ्यां विधेयाः ।
देहे भूमावर्घ्यपात्रे चलादौ
प्रोक्तैरङ्गैरग्निकार्ये च सद्भिः ॥ १४ ॥

[6]**एताः** स्रुगादयस्तालान्ताश्चतुर्दश **मुद्राः** [**मानसेज्योपहारे**] मानसपूजोपहरणकाले [**सांनिध्यार्थे**] सन्निधिनिमित्तं **वाङ्मनोभ्यां** [**विधेयाः**] निष्पाद्याः । न बहिर्बन्धनीयाः । यदा तु [**देहे**] स्वदेहे [**भूमौ**] स्थण्डिले **अर्घ्यपात्रे** [**चलादौ**] चललिङ्गे आदिग्रहणात् स्थिरलिङ्गे [7]चित्राकृतौ विद्यापीठे च एतासां प्रयोगस्तदानीम् [**अग्निकार्ये**] [8]वह्निहवनावसरे च **प्रोक्तैरङ्गैः** विधेयाः । तत्तदाकृतिमन्त्रपरमेश्वरशक्तित्वस्मरणादिभिरङ्गैरङ्गिन्यः कार्या इत्यर्थः ॥ १८ ॥

[9]इति भट्टविद्याकण्ठात्मज भट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ
[10]क्रियापादे मुद्राप्रकरणं पञ्चमं समाप्तम् ।

[ इति पञ्चमः पटलः ]

[1] C omet पृष्ठार्धेन्दू

[2] B : कृतिर्येन pour अतिशयेन

[3] तर्जन्यङ्गुष्ठमूलगौ ?

[4] B : तालस्थिराहति

[5] A : नुत् pour नुत्

[6] B : ताः pour एताः

[7] B : चित्रकृतौ

[8] C : वह्निभगवतावसरे

[9] A : इति श्रीमन्मृगेन्द्रे क्रियापादे मुद्राविधिपटलः पञ्चमः ; B : मुद्राप्रकरणं समाप्तम् ; D : इति मृगेन्द्रे क्रियापादे मुद्राविधिपटलोऽष्टादशः ।

[10] C omet क्रियापादे



Avahanamudra



Sthapanamudra
(selon Mrgendragama)



Nisthuramudra
(selon Mrgendragama)



Parighamudra



Lavamudra



Ghatamudra (devant)
(selon Mrgendragama)

# [अथ षष्ठः पटलः]

## [अग्निकार्यप्रकरणम्]

अनन्तरप्रकरणोपसंहारे सूचितमग्निकार्यमभिधातुमाह—

[1]अथाग्निकार्यं विदुषा विधेयं विहितं यतः।
तदुच्यमानं संक्षेपान्निबोध द्विजसत्तम ॥ १ ॥

**विदुषा** तद्विधिज्ञेन **यतः** शास्त्रविहितम् **अग्निकार्यं विधेयं** विधातुं शक्यते न त्वज्ञेन [**तत्**] तस्मात्कारणात् [**संक्षेपात्**] संक्षेपतः [**उच्यमानं**] कथ्यमानं [**द्विजसत्तम**] मुनिश्रेष्ठ [**निबोध**] अवधारयेति भरद्वाजमुनिमवबोधयति [2]स्वर्पतिः ॥ १ ॥

मरुद्दैत्ययमाशाभ्योऽन्यत्र [3]नाभ्याद्यलंकृते।
कुण्डे हस्तमिते वृत्ते वेदाश्रे [4]वास्त्रशोधिते ॥ २ ॥

उत्कीर्णे पूरिते नीते समतां सुदृढीकृते।
[5]सिक्ते [6]व्युदस्तरजसि प्रलिप्ते वज्रलक्ष्मणि ॥ ३ ॥

साक्षपाटचतुर्मार्गे[7] हृदा संधाय विष्टरम्।
देवीमावाहयेद्विद्यां[8] विधिवद्विश्वमातरम् ॥ ४ ॥

[**मरुद्दैत्ययमाशाभ्योऽन्यत्र**] वायव्यनैर्ऋतयाम्यदिक्त्रयं मुक्त्वा[9] प्राच्यादि[10]दिक्पञ्चके [**नाभ्याद्यलंकृते**] वक्ष्यमाणाभिः [11]नाभ्योष्ठमेखलाभिः शोभिते [**हस्तमिते**] [12]हव्याल्पत्वबहुत्वापेक्षया

[1] D omet ce *ślokā*
[2] C : स्वःपतिः
[3] A et D : नासाद्यलंकृते
[4] D : हस्तशोधिते
[5] A et D : सिक्तोऽप्युदस्तरजसि
[6] C : व्यक्त pour व्युदस्त
[7] A : मार्गैः pour मार्गे
[8] A : विद्वान् pour विद्यां
[9] C : दिक्त्रयींमुक्त्वा pour दिक्त्रयं मुक्त्वा
[10] C omet दिक्
[11] C : नाहोभ्यांऽष्टमेखलाभिः
[12] C : हव्यसापेक्षया

हस्तेन हस्ताभ्यां हस्तैर्वा मिते तावत्प्रमाणोपपन्ने [**वृत्ते**] वर्तुले [**वेदाश्रे**] चतुरश्रे **वा कुण्डे अस्त्र-शोधिते** इति, [1]उत्सारितविघ्ने, [2]अस्थिशल्यादिदोषनिवृत्त्यर्थं च मनसा कृतोत्कीरण[3]पूरणसमीकरण-[4]दार्ढ्यापादनसेकरजोव्युदासप्रलेपनोल्लिखितवज्राङ्किते च । [5]यथोक्तं श्रीमत्**स्वतन्त्रे**—

"वज्रीकरणमस्त्रेण[6] रेखास्तिस्रस्तु पूर्वगाः ।
याम्यसौम्यमुखा त्वेका वज्रमेतत्प्रकीर्तितम् ॥" इति ।

[**हृदा**] हृन्मन्त्रेणासनार्थं [**विष्टरं**] दर्भविष्टरं [**संधाय**] निवेश्य [**विद्यां देवीं**] विद्याख्यां शक्तिं [**विश्वमातरं**] जगतो जनयित्रीं [**विधिवत्**] [7]शास्त्रोक्तेन क्रमेण **आवाहयेद्** इति संबन्धः । समान्तादुत्थितैः कुशैः कुण्डस्य परिष्करणम् **अक्षपाटः** । **चतुर्मार्गस्**तु मध्ये प्रागुदङ्मुखैः दर्भैश्चतुष्पथः । तथा चोक्तं [8]**पौष्करे**—

"प्रागग्रैश्चोदगग्रैश्च कुशैः कुण्डे चतुष्पथम् ।" इति ॥ २ - ४ ॥

ततश्च—

**श्यामामृतुमतीं ध्यात्वा सद्वासोमाल्यभूषणाम् ।**
**प्रसन्नवदनां पद्मपत्राभनयनप्रभाम्[9] ॥ ५ ॥**
**तां पाद्यादिभिरभ्यर्च्य जातवेदसमाहरेत् ।**

कीदृशमित्याह—

**[10]कान्तारणिजदावाख्यवैद्युतान्यतमं हृदा ॥ ६ ॥**
**लौकिकं वा द्विजगृहात्सत्पात्र[11]द्वयसंपुटे ।**
**[12]शोध्यावकुण्ठ्य संपूज्य हृदा बीजत्वसन्धितम् ॥ ७ ॥**
**प्रत्यालभ्यामृतीकृत्य भ्राम्य[13] [14]त्रिः कुण्डबाह्यतः[15] ।**

[1] C : उत्साधित् pour उत्सारित
[2] C : अविदितालपत्वनिवृत्त्यर्थं
[3] C : उत्किरण pour उत्कीरण
[4] B : दार्ढ्यादान pour दार्ढ्यापादन
[5] C : तथोक्तं
[6] C : वज्रीकरणमन्त्रेण
[7] C : शास्त्रेण क्रमेण
[8] C : श्रीमत्पौष्करे
[9] C : नयम् pour प्रभाम्
[10] C : कान्ताराणिज
[11] C : पाद्य pour पात्र
[12] C : शोध्य प्रवृत्य
[13] D : प्रगम्य pour भ्राम्य
[14] B : त्रिकुण्डबाह्यतः
[15] D : पार्श्वतः pour बाह्यतः

योनौ विनिक्षिपेद्विद्वान्विद्यायाः[1] शिवमुच्चरन् ॥ ८ ॥

**कान्तः** सूर्यकान्तः। सन्ति पदेषु [2]पदैकदेशाः। सत्यभामा [3]भामा भीमसेनो भीम इति। **अरणिः** अग्न्युद्भवकाष्ठं वक्ष्यमाणलक्षणम्। [4]**दावो** वनदाहः। **वैद्युतो** मेघजः। सूर्यकान्ताद्युद्भवेभ्यो मध्याद् **अन्यतमम्** अग्निम्, एषां [5]चाभावे **लौकिकं** [**द्विजगृहात्**] द्विजानां ब्राह्मणादीनां त्रयाणां गृहादाहृत्य [**हृदा**] हृन्मन्त्रेण [**सत्पात्रद्वयसंपुटे**] ताम्रादिशोधितपात्रद्वयसंपुटे[6] कृत्वा [**शोध्य**] अस्त्रमन्त्रेण शोधितं कवचेन **अवकुण्ठ्य** [**बीजत्वसन्धितं**] पारमेश्वरबीजत्वेनाभिसंधाय [**हृदा संपूज्य**] हृन्मन्त्रेणाभ्यर्च्य [**प्रत्यालभ्य**] मूलमन्त्रेणाभिजप्य बिन्दुस्थानात्प्रसृत[7]परामृत[8]निर्झरेण कराङ्गुलिदशकाभिमुखनाडीदशकप्रवाहिणा धेनुमुद्रारूपेण **अमृतीकृत्य** [**त्रिः**] त्रीन् वारान् [**कुण्डबाह्यतः**] कुण्डस्य बहिः [**भ्राम्य**] भ्रामितं [**शिवं**] शिवमन्त्रम् [**उच्चरन्**] जपन् [**योनौ**] वागीश्वरीयोनौ [**विनिक्षिपेत्**] निक्षिपेत् ॥ ७ - ८ ॥

ततश्च—

दर्भैराच्छाद्य संस्कारान्कुर्याद्बद्धास्त्रकङ्कणः[9] ।

तमग्निममृतीकृतं परमेश्वरपरबीजस्वरूपं [10]गर्भे निहितं रक्षार्थवज्रपञ्जरकाल्पैः [11]**दर्भैः** [**आच्छाद्य**] संछाद्य [**संस्कारान्**] गर्भाधानादिसंस्कारान् **कुर्यात्**। कीदृशः सन्—[12]**बद्धास्त्रकङ्कणः** वागीश्वर्या गर्भरक्षार्थं बद्धोऽस्त्रजप्तः कङ्कणो येन स तथा। यदुक्तं श्रीमत्**स्वतन्त्रे**—

"सप्तवारास्त्रजप्तेन दर्भेणैवास्त्रकङ्कणम्।
बध्नीयाद्दक्षिणे हस्ते [13]मन्त्रमस्त्रमनुस्मरन् ॥

रक्षार्थमस्त्रगर्भस्य[14]" इति।

[1] A : विद्यायां ; D : विद्यया
[2] C : पदैकादेशाः
[3] C : भामाभावात्। अरणिः
[4] B : दवो
[5] C : तु pour च
[6] C : पात्रद्वयं संपुटे
[7] C : प्रसरता pour प्रसृत
[8] B : निर्जरेण
[9] En ms. C on trouve ensuite les demi-*śloka* 19b et 20a
[10] C : रूपं pour स्वरूपं
[11] B : दर्भैश्च
[12] B : बध्द्वास्त्रकङ्कणः
[13] C : मन्त्रमन्त्रमनुस्मरन्
[14] C : अग्निगर्भस्य pour अस्त्रगर्भस्य

[1]ततश्च-

ततः सद्यादिभिर्मन्त्रैर्गर्भाधानादिसिद्धये ॥ ९ ॥
पञ्च पञ्चाहुतीर्दद्याद्धृदार्चनसमन्वितम्[2] ।

[सद्यादिभिर्मन्त्रैः] सद्योजातादिब्रह्मपञ्चकेन [गर्भाधानादिसिद्धये] [3]गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मवक्त्रोद्घाटननाडिशोधननामधेयाख्यसंस्कारसंपत्त्यै पञ्च पञ्चाहुतीः [दद्यात्] जुहुयात्। एकैकस्मिंश्च संस्कारे [हृदार्चनसमन्वितं] हृन्मन्त्रेणाग्नेरर्चनं[4] कुर्यात् ॥

इति सामान्येनोक्त्वा विशेषेणाह—

किं तु पुंसवने [5]बिन्दुमपां दर्भेण निक्षिपेत् ॥ १० ॥
[6]जीवमित्यभिसंधाय ब्रूयाद्भव पुमानिति ।

[पुंसवने] पुंसवननिमित्तं दर्भेण [अपां बिन्दुं] जलकणं [जीवमित्यभिसंधाय] चैतन्याभिसंधानेन [7]गर्भस्थस्याग्नेः पुमान् भव इति वदन् दद्यात् ॥

[8]वपुस्त्रिसीम सीमन्ते दर्भेण[9] प्राक् प्रकल्पयेत् ॥ ११ ॥
ततः कलाभिर्निष्पाद्यं समुदायत एव वा ।

[सीमन्ते] सीमन्तोन्नयननिमित्तं प्राग् इति आहुतिदानादर्चनाच्च[10] पूर्वम्, [11]प्रागारभ्य मुखहृदयपादव्यक्त्यै[12] पूर्वमध्यापरभागेषु, त्रिसीम इति, आत्मविद्याशिवाख्यतत्त्व[13]त्रयविभागयुक्तं वपुः [14]प्रकल्पयेत् कल्पयेत्। यथोक्तं श्रीमत्स्वतन्त्रे—

"पूर्वमध्यापरे वह्नेस्त्रीन्भागान्संप्रकल्पयेत्।
मुखहृत्पाददेशे तु त्रितत्त्वाहुतिभिः क्रमात् ॥" इति ।

[1] B omet ततश्च
[2] B : समन्विताः pour समन्वितम्; C : समन्वितः
[3] B : गर्भादान pour गर्भाधान
[4] B : अग्नावर्चनं pour अग्नेरर्चनं
[5] D : बीजम् pour बिन्दुम्
[6] D : शिवम् pour जीवम्
[7] B : गर्भस्तस्याग्नेः
[8] A et B : वपुस्त्रीसीम
[9] A omet ण dans दर्भेण
[10] B : आहुतिदानाद्यर्चनाच्च ; C : आहुतिदानार्चनाच्च
[11] C : प्राक्त आरभ्य
[12] C : व्यतिरिक्त्यै pour व्यक्त्यै
[13] C omet त्रय
[14] B omet प्रकल्पयेत्

**ततः** अनन्तरं पूजाप्रकरणोक्तवदष्टत्रिंशत्**कलाभिः** तद्वपुः **निष्पाद्यम्** । अथवा **समुदायत** इति ईशानमूर्धतत्पुरुषवक्त्राघोरहृदयवामदेवगुह्यसद्योजातमूर्तित्वेन तद्देहं संपादयेदिति सीमन्तोन्नयनम् ॥

जातकर्मणि निष्पन्ने वक्त्रोद्घाटनशोधने[1] ॥ १२ ॥
विधायास्त्रेण तद्धाम प्रोक्षयेत्सूतकच्छिदे[2] ।

[3]**जातकर्मणि** [4]जातकर्मनाम्नि संस्कारे शास्त्रान्तरोक्तवदस्त्रबीजेन [5]वीजनसंपूजनात्मके [**निष्पन्ने**] [6]निर्वृत्ते । यदुक्तं तत्रैव—

"अस्त्रेण वीजयेद्वह्निमस्त्रेणैव तु पूजयेत् ।
[7]त्रिराहुतिप्रयोगेण जातकर्म कृतं भवेत् ॥" इति ।

[**वक्त्रोद्घाटनशोधने**] [8]वक्त्रोद्घाटनं वक्त्रविदारणं तद्विशोधनं वक्त्राभिघारणाख्यम् एते द्वे कर्मणी विधाय । **अस्त्रेणैव** [**तद्धाम**] कुण्डं [**सूतकच्छिदे**] सद्यःसूतकनिवृत्त्यर्थं [**प्रोक्षयेत्**] अभ्युक्षयेत् । तत्राप्युक्तम्—"अस्त्रेण प्रोक्षयेत्कुण्डं सद्यः सूतकशुद्धये ।" इति ॥

ततः सुरेशवरुणप्रेतनक्षत्रभर्तृषु ॥ १३ ॥
[9]मेखलांशेषु रक्षायै ब्रह्मादीन्क्रमशोऽर्चयेत्[10] ।

**ततः** अनन्तरं जातस्याग्नेः [**रक्षायै**] [11]संरक्षणार्थं [**सुरेश-वरुण-प्रेत-नक्षत्रभर्तृषु**] इन्द्र-वरुण-यम-सोम-स्थानेषु प्राक्पश्चिम[12]दक्षिणोत्तरेषु [**मेखलांशेषु**] मेखलाभागेषु [**ब्रह्मादीन्**] ब्रह्मविष्णु[13]रुद्रान् [**क्रमशः**] क्रमेण [**अर्चयेत्**] पूजयेत् । **प्रेतनक्षत्रभर्तृषु** इत्यत्र भर्तृशब्द उभयोः काकाक्षिवद्योज्यः । प्रेतानां [14]च नक्षत्राणां च भर्तारौ यमसोमौ । [15]तात्स्थ्यात् सुरेशादिभिर्दिशोऽत्र लक्षिताः ॥

किंच—

नितम्बमेखलासक्तविष्टरेषु चतुर्ष्वपि ॥ १४ ॥

[1] C : शोधिते
[2] D : च्छित्ते pour च्छिदे
[3] B omet जातकर्मणि
[4] C omet जातकर्म
[5] C omet वीजन
[6] C : निवृत्ते
[7] C : त्रिरात्रिकप्रयोगेण
[8] C : वक्त्रविदारणतद्विशोधनं च
[9] C : मेखलां श्रेयरक्षार्थं
[10] D : यजेत् pour अर्चयेत्
[11] C : संरक्षार्थं
[12] C : पश्चाद् pour पश्चिम
[13] B : रुद्रेश्वरान् pour रुद्रान्
[14] C omet च
[15] B : तस्मात् pour तात्स्थ्यात्

**शिवास्त्रं प्रलयार्काभं लोकपालांस्ततो बहिः ।**

[**नितम्बमेखलासक्तविष्टरेषु**] कुण्डस्य नितम्बो [1]बुध्नभागस्तृतीया मेखला । तदासक्तेषु प्रागादिदिक्चतुष्टयस्थेषु[2] [3]चतुर्ष्वपि विष्टरेषु [**प्रलयार्काभं**] कल्पान्ततपनप्रभं [**शिवास्त्रम्**] [4]अस्त्रं [**ततो बहिः**] तद्बहिश्च [**लोकपालान्**] इन्द्रादीन् पूजयेत् ॥

**क्षेत्रं दशाङ्गुलं [5]त्यक्त्वा कलाः परिधिविग्रहाः[6] ॥ १५ ॥**

**[7]बैन्दव्यो विघ्नरोधार्थं [8]बहिरस्त्रकुशान् स्तरेत् ।**

लोकपालेभ्यो **बहिः** समन्ताद् **दशाङ्गुलं क्षेत्रं त्यक्त्वा** [**परिधिविग्रहाः**] क्षीरवृक्षशाखापरिकल्पितपरिधिरूपाः प्रागादितो [**विघ्नरोधार्थं**] विघ्नरक्षार्थं **बैन्दव्यो** बिन्दुसम्बन्धिन्यो निवृत्तिप्रतिष्ठाविद्या[9]शान्त्याख्याः **कलाः** कल्प्या इति शेषः । तथा चोक्तं प्राक्—" [10]बिन्दौ निवृत्त्यादिकलेश्वराः " इति । [**बहिः**] तद्बहिः [**विघ्नरोधार्थं**] विघ्नरक्षार्थमेव[11] [**अस्त्रकुशान्**] अस्त्रजप्तकुशान् [**स्तरेत्**] तदनन्तरं[12] कुर्यात् ॥

**[13]ततस्त्रयीप्रणेतारं यज्ञाध्यक्षतया यजेत् ॥ १६ ॥**

**याम्यभागे परिध्यन्ते सदर्भे शुष्कगोमये ।**

[14][**ततः**] तदनन्तरं [**सदर्भे**] कुशसहिते [**शुष्कगोमये**] शुष्कगोशकृत्पिण्डे [**त्रयीप्रणेतारम्**] ऋग्यजुःसाम्नां प्रवर्तकं ब्रह्माणं [**यज्ञाध्यक्षतया**] यज्ञाध्यक्षत्वेन [**याम्यभागे परिध्यन्ते**] दक्षिणदिक्स्थितपरिधिनिकटे [**यजेत्**] अर्चयेत् ।

[1] C : बुध्नभागीयाकृतिमेखला
[2] C ajoute च
[3] C omet चतुर्ष्वपि विष्टरेषु
[4] C : मन्त्रं pour अस्त्रं
[5] D : नासां pour त्यक्त्वा
[6] A : विग्रहम् pour विग्रहाः ; D : विग्रहौ
[7] A : बैन्दव्यविघ्नरोधार्थं
[8] A et D : बहिरस्त्रैः कुशांस्तरेत् ; B et C : बहिरस्त्रकुशांस्तरेत्
[9] C : शान्त्यः pour शान्त्याख्याः
[10] cf. *Mṛgendrāgama, Vidyāpāda, adhvaprakaraṇa, śloka* 162a, p. 420 (édition de Devakoṭṭai)
[11] C ajoute अत्र
[12] C : स्तरदानं pour तदनन्तरं
[13] A et D : तत्र pour ततः
[14] B omet ततः à शुष्कगोशकृत्पिण्डे

[1]तथोदग्वारिसंपूर्णे [2]पात्रे यज्ञारिसूदनम् ॥ १७ ॥
नारायणं सुरश्रेष्ठं[3] स्वनाम्ना कुसुमादिभिः ।

[तथोदग्वारिसंपूर्णे] तदुत्तरपरिधिसमीपे जलपूर्णे [4]पात्रे चमसादौ [यज्ञारिसूदनं] [5]मखरिपुध्वंसिनं [नारायणं] हरिं [कुसुमादिभिः] पुष्पाद्यैर्यजेदिति प्रागुक्तेन संबन्धः ॥

इष्ट्वा प्रणम्य विज्ञाप्य [6]मुक्त्वा कङ्कणकं करात् ॥ १८ ॥
ततः शिवाग्निरित्यग्नेर्नाम [7]कृत्वा गुरूत्तमः ।
हृदा वक्त्राणि संदध्यात्तद्योगाच्छम्भुना परम् ॥ १९ ॥

तौ ब्रह्मविष्णू **इष्ट्वा** अभ्यर्च्य [**प्रणम्य**] नत्वा [8]च 'आरब्धकर्मनिष्पत्तिपर्यन्तं यावत्संनिहितौ भवत' इति **विज्ञाप्य** वागीशीं च पुनः **इष्ट्वा प्रणम्य** कङ्कणमोक्षार्थं **विज्ञाप्य** [**करात्**] तत्पाणितः [**कङ्कणकं**] कङ्कणं **मुक्त्वा अग्नेः 'शिवाग्निः** त्वम्' **इति** [**हृदा**] हृन्मन्त्रेण नाम्नि **कृते** सति **वक्त्राणि संदध्याद्** इति प्रागुक्तवक्त्रोद्घाटनलालापनोदनादौ कर्मणि कृते द्वयं द्वयमेकं कुर्यात् । यथोक्तं श्रीमन्**मतङ्गे**—

"प्रभोरस्त्रेण दीप्तेन वक्त्रोद्घाटनमीप्सितम् ।
वक्त्राघारश्च कर्तव्यः श्लेषयित्वा द्वयं द्वयम् ।
सद्योजातेन वामेन घोरेण पुरुषेण च ।" इति ।

**इति** [**हृदा**] हृन्मन्त्रेण तत्कार्यम् । हृच्छब्दस्य स्वतन्त्रेण न्यायेनोभयार्थतया तत्र प्रयुक्तत्वात् । **तद्योगाद्** अनन्तरं **परम्** उत्तममीशानवक्त्रं **शम्भुना** शिवेनैकीकुर्यात् । यदुक्तं तत्रैव—

"[9]ईशानशिवमन्त्राभ्यां वक्त्रसंपादनं परम् ।" इति ॥ १८ - १९ ॥

ततश्च—

देवीं संतर्प्य [10]संहृत्य [11]हुत्वेध्माः षोडशादितः ।

[1] A : ततोदग्वारिसंपूर्णे ; D : ततोर्ध्वद्वारि संपूर्णे
[2] A et D : यजेद् pour पात्रे
[3] A : ज्येष्ठं pour श्रेष्ठं
[4] C omet पात्रे
[5] C : मघ pour मख
[6] A : हित्वा
[7] C : गुप्त्वा
[8] En ms. C le folio nº 138 manque ce qui supprime le passage "च आरब्धकर्म à "पर्यग्निकरणार्थं परिभ्राम्य" (cf. commentaire sur *śloka* 21b - 22a)
[9] B : ईशानशिवमन्त्राभ्यां
[10] D : संसृत्य
[11] A et D : हुत्वेध्मान् षोडशादिभिः

[**देर्वीं संतर्प्य संहृत्य**] तर्पणपूर्वकं वागीश्वरीविसर्जनं कृत्वा अग्नेराप्यायनार्थं चन्द्रकलाख्यया [**हुत्वेध्माः षोडश**] षोडशेध्महोमं कुर्यात् । [1]**आदित** इति अकारमादौ कृत्वा विसर्गान्तेन षोडशकेनेत्यर्थः । **इध्मा**शब्दोऽयं स्त्रीलिङ्गः । इध्मा स्फुटिता इत्यग्रे तथा प्रयोगदर्शनात् । अन्तत इति पाठे विसर्जनान्त इति व्याख्येयम् ॥

स्रुक्स्रुवौ वारिणास्त्रेण प्रोक्ष्यावृत्य प्रतापयेत् ॥ २० ॥
त्रिरग्रमूलमध्यांशैः [2]कौशैस्तेष्वेव संस्पृशेत् ।
प्रत्यंशमस्त्रमन्त्रेण गन्धादिप्रोक्षणान्वितम् ॥ २१ ॥
[3]विधायावाङ्मुखौ स्थाप्यौ सव्यतः कुशविष्टरे ।

वक्ष्यमाणलक्षण**स्रुक्स्रुवौ अस्त्रेण वारिणा** [**प्रोक्ष्य**] अभ्युक्ष्य [**आवृत्य**] कवचेनावकुण्ठ्य [**प्रतापयेत्**] तापयेत् । [**त्रिः**] त्रीन्वारान् [**कौशैः**] दर्भसंबन्धिभिः [**अग्रमूलमध्यांशैः**] अग्रमूलमध्यभागैः । **तेष्वेव** इति अग्रमध्यमूलांशेषु तौ **संस्पृशेद्** इति अग्रेणाग्रं मध्येन मध्यं मूलेन मूलं हं हिं हां शिवविद्यात्मतत्त्वव्याप्त्या स्पृशेदित्यर्थः । भुक्त्यर्थिनश्चायं क्रमो ज्ञेयः । मुमुक्षोस्तु मूलमध्याग्रेषु । **प्रत्यंशम्** इति अंशमंशं प्रति प्रत्यंशं मूलमध्याग्रव्यापिषु तेषु आत्मविद्याशिवेषु [**गन्धादिप्रोक्षणान्वितं**] समालेपनादिप्रोक्षणयुक्तं [**विधाय**] कृत्वा [**सव्यतः**] दक्षिणतः [**कुशविष्टरे**] कुशविष्टरोपरिष्टाद् [**अवाङ्मुखौ स्थाप्यौ**] अधोमुखौ तौ स्थापयेत् ॥

[4]सर्पिरस्त्रोक्षितं गुप्तं धर्मेशदिशमाश्रितम् ॥ २२ ॥
[5]त्रिरुद्भास्य पवित्रेण विहितोत्प्लवसंप्लवम् ।
कुशाग्निरोचिषा [6]पूतं वीक्ष्य संहितयालभेत् ॥ २३ ॥

[**सर्पिः**] आज्यम् अधिश्रयणादिसंस्कारसंस्कृतम् [**अस्त्रोक्षितं**] अस्त्रमन्त्रेण प्रोक्षितं [**गुप्तं**] कवचावृतं **त्रिरुद्भास्य** इति, त्रीन्वारान् कुण्डस्य बहिः प्रदक्षिणं पर्यग्निकरणार्थं परिभ्राम्य । **धर्मेशदिशं**

[1] B : अदित इति
[2] B : कौशैस्तेष्वव संस्पृशेत्
[3] A : पिधाय pour विधाय
[4] A : सर्पिरस्त्रोक्षित
[5] A : द्वि pour त्रिः
[6] D : पूर्वं

[1]याम्यदिग्भागम् **आश्रितं** कुर्यात् । ततस्तु कुण्डसंबन्धिन्या [2]योनेः पृष्ठे वा स्थाप्य **पवित्रेण** [**विहितोत्प्लवसंप्लवं**] विच्छिन्नाग्रेण मध्यग्रथितदर्भद्वयात्मना विहितम् उत्प्लवोऽग्न्यभिमुखेन प्रेरणं संप्लवश्च [3]स्वसांमुख्योन्नयनं यस्य तत्तथा । [**कुशाग्निरोचिषा**] [4]दर्भाग्निज्वालया [**पूतं**] पवित्रीकृतं [5]कृतावद्योतं [**वीक्ष्य**] नीराजीकरणवीक्षणाख्येन संस्कारेण संस्कृत्य **संहितया** [**आलभेत्**] अभिजपेत् ॥ २२ - २३ ॥

**अमृतीकृत्य दर्भेण दर्शितांशद्वयं गुरुः ।**
**जुहुयादग्नये स्वाहेत्यथ सोमाय चक्षुषोः ॥ २४ ॥**
**तयोः समस्तयोर्मध्ये कृष्णपक्षे विलोमतः ।**

प्रागुक्तक्रमेण धेनुमुद्रया [6]वषट्कारप्रयोगेण आज्यम् **अमृतीकृत्य दर्भेण** मध्यनाडीरूपेण विभज्य [**दर्शितांशद्वयं**] दर्शितं मध्यनाड्युभय[7]पार्श्वस्थमंशद्वयमग्नीषोमात्मकं[8] यस्मिन् तत्तथाविधं सत् **गुरुः चक्षुषोः** आप्यायनाय **जुहुयात्** । एवं चात्मनो दक्षिणभागस्थमाज्यं स्रुवेणोद्धृत्य अग्नेर्दक्षिणभागे 'ओम् **अग्नये स्वाहा**' इति शुक्लपक्षे होम्यम् । ततः स्ववामभागात् स्रुवमापूर्य वह्नेर्वामभागे 'ओं **सोमाय** स्वाहा इति, **मध्ये** तु [**समस्तयोः**] 'ओम् अग्नीषोमाभ्यां स्वाहा' इति मध्यादेव जुहुयात् । **कृष्णपक्षे** [9]तु **विलोमत** इति [10]विपर्यासेन । तदानीं चन्द्रमसः क्षीयमाणतेति कृत्वा प्रथमं [11]तदाप्यायनाय [12]सोमभागादाज्यमादाय सोमस्तर्प्यः । ततो दक्षिणभागात्स्रुवमापूर्य वह्निः । तदनन्तरं मध्यभागगृहीतेनाज्येन सोमाग्निभ्यां स्वाहेति मध्यहोमः ॥

**इत्युक्तकृतसंस्कारं पृथक्कुण्डे हुताशनम् ॥ २५ ॥**
**[13]चर्वादिसिद्धये विद्वा[14]न्निदध्याद्वर्मरक्षितम्[15] ।**

[**इत्युक्तकृतसंस्कारं**] इत्थम् उक्ताः [16]कृताः संस्कारा यस्य तं [**हुताशनं**] वह्निं मूलकुण्डादुद्धृत्य **पृथग्** अन्यत्र **कुण्डे** चुल्ल्यादौ [**वर्मरक्षितं**] कवचावकुण्ठितं [**चर्वादिसिद्धये**] चरुपुरोडा-

[1] C : याम्यदिग्भागाश्रित
[2] C omet योनेः
[3] C : स्वसांमुख्येनानयनं
[4] C : दर्भाग्रज्वालया
[5] C : कृतावद्योतनं
[6] B : वषट्कारेण प्रयोगेण
[7] B : पार्श्वस्थं द्वयम् ; C : पार्श्वपक्षस्थमंशद्वयम्
[8] C : अग्नीषोमीयात्मकं
[9] C omet तु
[10] C : विपर्ययेन
[11] B : तथा pour तद्
[12] C : सोमभागाज्यमादाय
[13] D : चार्वादि
[14] A, B, C et D : विदध्याद् pour निदध्याद्
[15] D : रक्षितः pour रक्षितम्
[16] C omet कृताः

शादिपक्त्यै[1] [विद्वान्] एतत्क्रमज्ञो गुरुरनाहूत[2]शिवं निदध्यात्। यदुक्तं श्रीमत्पौष्करे—

"पाच्याश्चरुपुरोडाशाः पञ्चसंस्कारसंस्कृते।
अनाहूतशिवे वह्नौ होमस्त्वावाहिते[3] भवेत्।" इति॥

**प्रत्यहं वा क्रियाहेतोः सामासिकविधौ स्थितः॥ २६॥**
**न [4]संहृते शिवे यस्मादग्नौ [5]चण्डेतरा क्रिया।**
**[6]अनाहूतशिवं रक्षेत्प्रत्यहं [7]त्वविसर्जितम्[8]॥ २७॥**

'[9]स्वल्पहोमजपेज्याभिरलुप्तनियमोऽन्वहम्' इति वक्ष्यमाणनियमात् [प्रत्यहं] प्रतिदिनं यः [सामासिकविधौ] संक्षिप्तविधौ [क्रियाहेतोः] स्थितः [10]क्रियाप्रवृत्तः सामग्र्यभावादसंभवद्विभवविस्तरश्च[11] सकृदेवंविधसंस्कारसंस्कृतमग्निं पृथक्कुण्डे निदध्यादिति पूर्वेण संबन्धः। यस्मात् [संहृते] विसर्जिते [शिवे] भगवति [चण्डेतरा क्रिया] चण्डेश्वरहोमादृतेऽन्यक्रिया [अग्नौ] [12]वह्नौ न कार्या [13]तस्मान्नियतहोमकर्मणि संस्कृतमग्निम् [अविसर्जितम्] अकृतविसर्जनं रक्षेत्॥ २४ - २७॥

**ततस्तद्विग्रहं नाड्या प्रविश्य हृदि शंकरम्।**
**[14]इष्ट्वा संधाय यागोक्त्या तर्पयेच्छक्तितः क्रमात्॥ २८॥**

ततः अनन्तरं [तद्विग्रहं] तस्य कृताखिलसंस्कारस्य अग्नेर्विग्रहं [नाड्या] मध्यनाड्या प्रविश्य [हृदि] तदीयहृदये शंकरं [15]परमेश्वरं [यागोक्त्या] अर्चनप्रकरणोक्तासनावरणादिकल्पनक्रमेण इष्ट्वा [संधाय] मन्त्रसंधानादि च कृत्वा। क्रमाद् इति, [16]मूलाद्दशांशेनाङ्गब्रह्मादीनामिति स्थित्या, सहस्रेण पञ्चभिः शतैः [शक्तितः] यथाशक्त्या वा प्रत्यहं तर्पयेत्। [17]विसर्जनावसरे [18]नित्यश इति श्रुतेः।

[1] D : पक्ते pour पक्त्यै; C : पक्त्ये
[2] C : अनाहूय pour अनाहूत
[3] C : आवाहितो pour आवाहिते
[4] A et D : संभृते
[5] A, C et D : चण्डेतराः क्रियाः
[6] A : अनाहतः शिवं ; B : अनाहूतः शिवं ; D : अनाहता शिवं
[7] D : त्वविवर्जितम्
[8] ce demi-*śloka* manque en C.
[9] cf. *paṭala* 8, *dīkṣāvidhi*, *śloka* 216b.
[10] B : क्रियाप्रवृत्याः ; C : क्रियाप्रवृत्तसामग्र्यभावाद्
[11] B : असंभवद्विस्तारश्च
[12] B et C : वह्नेर्न कार्या
[13] C : तस्मिन् pour तस्माद्
[14] A : इष्टा ; D : इष्टया
[15] C : परमेश्वरेऽर्चनक्रमेण इष्टा
[16] B : मूलाद्दशांशोङ्गब्रह्मादीनामिति ; C : मूलाद्दशांशेन ब्रह्मादीनामिति
[17] C : विसर्जनादावसरे
[18] cf. *śloka* 31a

पाश्चात्यस्य [1]प्रत्यहंशब्दस्यानुवृत्तिरवश्यं कर्तव्या । नित्यकर्मणि[2] च कुण्डलक्षणं वक्ष्यति । तत्रापि प्रत्यहं होमकर्मेदं बोद्धव्यम् ॥ २८ ॥

'यागोक्त्या तर्पयेद्' इत्युक्तम् । अतोऽर्चनवत्तर्पणमपि नमस्कारेण मा भूदिति विशेषयितुमाह—

किंतु स्वाहापदप्रान्तैर्मन्त्रैः श्रद्धासमन्वितः ।
[3]प्रायश्चित्ताहुतीरष्टौ [4]हुत्वास्त्रेणोपसंहरेत् ॥ २९ ॥

[स्वाहापदप्रान्तैः] स्वाहेतिपदप्रान्तैः, तथाविधैः मन्त्रैः तर्पणं [श्रद्धासमन्वितः] श्रद्धावान् कुर्यात । ततश्च[5] [अस्त्रेण] अस्त्रमन्त्रेण [प्रायश्चित्ताहुतीः अष्टौ] प्रायश्चित्तार्थमाहुत्यष्टकं हुत्वा वषट्कारेण पूर्णाहुतिदानपूर्वकम् उपसंहरेद् इति वह्नेर्भगवन्तं विसर्जयेत् ॥ २९ ॥

पूर्णावसाने चण्डेशं तर्पयेदनु शक्तितः ।
शतेनार्धेन पादेन दशाष्टतिसृभिः परम् ॥ ३० ॥

अनु इति पश्चात् शक्तितः अर्थसामर्थ्यानुसाराद् यदि च क्रियाविस्तारं प्रति श्रद्धालुता स्यात्तदाग्नेर्विसर्जनं[6] चिकीर्षुः [चण्डेशं] चण्डेश्वरं तस्मिन्वह्नौ [पूर्णावसाने] [7]पूर्णाहुत्यन्ते तर्पयेत् । चण्डेश्वरस्यापि तर्पणं [8]पूर्णाहुत्यन्ते कुर्याद् इत्यर्थः । शक्त्यपेक्षया च शतेन [अर्धेन] पञ्चाशता [पादेन] पञ्चविंशत्या दशाष्टतिसृभिर्वाहुतिभिः, परम् इति तिसृभ्योऽन्यूनाभिस्तर्पयेत्[9] ॥ ३० ॥

ततः [10]सदग्नौ निर्वाणे भस्म संहृत्य नित्यशः ।
[11]निर्माल्यवदगाधासु [12]क्षिपेदप्स्ववटेऽपि वा ॥ ३१ ॥

ततः अनन्तरं सदग्नौ इति जीर्णहव्यत्वाद्दीपितम्, अतोऽग्नौ [निर्वाणे] उपशान्ते तदीयंभस्म [संहृत्य] उद्धृत्य [नित्यशः] सर्वदा निर्माल्यवद् इति [अगाधासु अप्सु] अगाधे निस्तले अम्भसि

[1] B : प्रत्यहशब्दस्य
[2] C : नित्यकर्माणि
[3] C omet *śloka* 29b
[4] A : हत्वा
[5] C ajoute le demi-*śloka* 29b après ततश्च
[6] B : विसर्जन pour विसर्जनं
[7] B et C : पूर्णाहुत्यन्तं
[8] B et C : पूर्णाहुत्यन्तं
[9] C ajoute : चण्डेश्वरस्यापि तर्पणम्
[10] B : सदाग्नौ
[11] A : निर्माल्यपदगन्धाम् ; C omet le demi-*śloka* 31b et ततः à नित्यश इति
[12] D : क्षिपेदप्सु घटेऽपि वा

[अवटे] श्वभ्रे वा शुद्धे [क्षिपेत्] निक्षिपेत् । नित्यश इति संक्षेपरुचेर्विसर्जनमेव वह्नेः कथितम् । यस्तु विस्ताररुचिः[1] [2]सः प्रत्यहमावाहन[3]विसर्जने वह्नेः कुर्यात् ॥ ३१ ॥

तदाह—

**संस्कारयोग्यतामेति कुण्डं मृद्गोमयाम्बुभिः[4] ।**
**[5]माषादिरजसा सोष्णवारिणा स्रुक्स्रुवादिकम् ॥ ३२ ॥**

निर्माल्ययोगादशुद्धस्य [**मृद्गोमयाम्बुभिः**] मृद्गोशकृज्जलैः शुद्धिर्भवति । [**स्रुक्स्रुवादिकं**] स्रुक्स्रुवप्रणीताज्यपात्रादिकं तु [**माषादिरजसा**] माषमसूरादिचूर्णेन [**सोष्णवारिणा**] उष्णाम्बुयुक्तेन[6] [**संस्कारयोग्यतामेति**] [7]संस्कारार्हं [8]भवति । द्रव्यशुद्धिभिः सामान्यसंस्कारतया शुद्धस्य[9] स्रुक्स्रुवकुण्डादेर्विशिष्टसंस्कारार्हत्वं नान्यथा ॥ ३२ ॥

अथ मुनिर्भरद्वाजः [10]स्रुक्स्रुवकुण्डादेर्लक्षणजिज्ञासया [11]पृच्छति—

**स्रुवस्रुगनलागार[12]मर्यादा[13]सनबर्हिषाम् ।**
**[14]पवित्रार्घ्यादिपात्राणामरणेरनलस्य च ॥ ३३ ॥**

**सप्रयोगप्रमाणानामाहुतीनां च लक्षणम् ।**
**प्रब्रूहि भगवन् यच्च नाविदित्वा प्रचोदितम्[15] ॥ ३४ ॥**

[**स्रुव-स्रुग्- अनलागार-मर्यादा-आसन-बर्हिषां**] स्रुवस्य स्रुचः, अनलागारस्य अग्न्याश्रयस्य कुण्डस्य, तथा मर्यादानां परिधीनाम् आसनानां विष्टराणां, बर्हिषां च दर्भाणाम्, [**पवित्रार्घ्यादिपात्राणां**] पवित्रस्य चाज्यसंस्काराङ्गस्य अर्घ्यार्थानाम् आदिग्रहणात्पञ्चगव्यतिलाद्यर्थानां पात्राणाम्, **अरणेः** अग्न्युद्भवकाष्ठस्य [**अनलस्य**] अग्नेश्च [**सप्रयोगप्रमाणानां**] [16]सप्रयोगाणां सप्रमाणानां **च आहुतीनां**

[1] C : रुचिरः pour रुचिः
[2] B et C : तस्य pour सः
[3] B omet न dans आवाहन
[4] C : मृद्गोमयं बहिः
[5] A : भासादि pour माषादि ; D : मुष्णादि
[6] C : प्रयुक्तेन pour युक्तेन
[7] C : संस्कारार्हतां
[8] C : भगवति
[9] C ajoute स्रुक्स्रुवप्रणिताज्यपात्रादिकं तु
[10] C : स्रुक्स्रुवाग्निकुण्डादिलक्षण
[11] C : प्रश्नयति
[12] A : आकार pour आगार
[13] A : परिधि pour मर्यादा
[14] A : पवित्रार्घ्यपवित्राणाम्
[15] D : अनुचोदितम्
[16] C : संप्रयोगाणां

**लक्षणं भगवन्** [**प्रब्रूहि**] कथय। **यच्च** अन्यद् [**अविदित्वा**] अबुद्ध्वा मया [**न प्रचोदितं**] न पृष्टं तदपि वह्निकार्योपयोगि कथय॥ ३३ - ३४॥

इति पृष्ट इन्द्रः प्रथमप्रश्नितं [1]स्रुवलक्षणं तावदाह---

**ब्रह्माश्वत्थशमी[2]पर्णि[3]शिंशपादिमहीरुहात्।**
**द्व्यङ्गुष्ठपर्वगोऽङ्गुष्ठदण्डो हस्तायतिः स्रुवः॥ ३५॥**
**गोष्पदाभार्धविष्कम्भः [4]कर्षाधारावटः श्रियै।**
**विपर्ययेऽधिकन्यूनव्यङ्गवक्रवपुर्मतः[5]॥ ३६॥**

[**ब्रह्म-अश्वत्थ-शमी-पर्णि-शिंशपादि-महीरुहात्**] ब्रह्मवृक्षात् पलाशाद् अश्वत्थात् पिप्पलात् शमीवृक्षात् श्रीपर्णिशिंशपाभ्यां च वृक्षाभ्याम, **आदि**ग्रहणाद्विकङ्कतदेवदारुखदिरादितरोश्च **हस्तायतिः** चतुर्विंशत्यङ्गुलायामः **स्रुवः** कार्य इति शेषः। कीदृगित्याह -[6]**द्व्यङ्गुष्ठपर्वगोऽङ्गुष्ठदण्ड** इति। अङ्गुष्ठवत् स्थूलो दण्डो यस्यासावङ्गुष्ठदण्डः। तथा द्व्यङ्गुष्ठप्रमाणकयोः पर्वणोः संध्योरन्तेऽग्रे च गतो द्व्यङ्गुष्ठपर्वगः। दण्डमूलाग्रयोरङ्गुष्ठद्वयमानकं गण्डिकाद्वयमस्य कुर्यादित्यर्थः। तदुक्तं श्रीमन्**मये**---" दण्डमूलाग्राहितगण्डिक " इति। अस्यैव मुखवर्तनमाह---**गोष्पदाभार्धविष्कम्भ** इति। गोष्पदाभो गोष्पदप्रतिबिम्बाकृतिः अर्धविष्कम्भः अर्धकृतवक्त्रविस्तारः। तथा [7]**कर्षाधारोऽवटः** [8]खातं यस्य सः स्रुवस्तादृक्[9]स्थितस्पष्टोन्नतमध्यरेखान्वितः[10] क्रमनिम्न इति यावत्। यदि [11]तु [**अधिक-न्यून-व्यङ्ग-वक्रवपुः**] न्यूनाधिकोऽङ्गहीनो [12]वक्राकृतिर्वा निष्पाद्यते तदा [**विपर्यये**] विपर्यस्ते हि [13]प्राणातिपातनिमित्तं तथाविधो **मतः** इष्टः। तस्माद्यथोपदिष्ट एव कार्य इति तात्पर्यम॥ ३५-३६॥

[14]स्रुचमिदानीमाह---

**षडङ्गुलायतिरष्टाङ्गुलसवेद्येककन्धरा।**
**[15]पञ्चत्र्यद्रिमुखा हस्तकन्यसा पृथुनिर्गमा[16]॥ ३७॥**

[1] B : स्रुक्स्रुवलक्षणं
[2] A, B, C et D : पर्ण pour पर्णि
[3] A : शिंशुप pour शिंशप
[4] A : कर्षाधारावटश्रियै ; B : कर्षधारावटश्रियै
[5] A : मतम् pour मतः
[6] B : अङ्गुष्ठ pour द्व्यङ्गुष्ठ
[7] C : अक्ष pour कर्ष
[8] B : खननान्तं यस्य ; C : खनं यस्य
[9] C omet स्थित
[10] B : रेखान्वितं
[11] B omet तु
[12] C : कुटिलाकृतिः pour वक्राकृतिः
[13] B : प्रणिपातनिमित्तं
[14] C : स्रुवम् pour स्रुचम्
[15] A : पञ्चत्वद्रिमुखा ; C : पञ्चचन्द्रमुखा ; D : पञ्चकद्रिमुखा
[16] D : निर्गतिः pour निर्गमा

वेदवृत्तादिपृथुता संस्थितिस्त्रिकलावटा ।
भागार्ध[1]मेखला शेष[2]च्छिलपत्रादिभूषणा ॥ ३८ ॥
[3]वेद्यर्धसंमिताशाश्रगण्डिकासक्तवेदिका ।
षण्णाहृदण्डभागार्ध[4]निर्वृत्तकलशोद्गता ॥ ३९ ॥
स्रुग्वराञ्जलिगोकर्णप्रणालाभपरिस्रुतिः[5] ।

एवं[6]विधप्रमाणलक्षणोपपन्ना **स्रुग् वरा** श्रेष्ठा भवतीति शेषः। तत्किंभूतेत्याह—**[षडङ्गायतिः]** षट्संख्यायतेत्यङ्गस्य तावत्संख्योपलक्षितसंख्यमङ्गमभिलिखेत्। एवं षट्त्रिंशत्[7]प्रतिपादकः षडङ्गो भवति। तावदङ्गुलायतिरायामो [8]दैर्घ्यमेव [9]यस्यास्तथा। **[अष्टाङ्गरसवेदी]** अष्टभिरथवा अङ्गसंख्यैः सप्तभिर्यद्वा रसैः षड्भिरङ्गुलैर्वेदी घृतकोशस्य पुष्कराभिधानस्य चतुरश्रा [10]आधारस्थालिका। **[एककन्धरा]** एकेनाङ्गुलेन कन्धरा [11]कण्ठो यस्याः। **[पञ्चर्त्वद्रिमुखा]** पञ्चभिरथवा ऋतुसंख्यैः षड्भिः [12]अद्रिसंख्यैः[13] सप्तभिरङ्गुलैर्वा[14] मुखं प्रणालभागो यस्याः सा। तथा यथाक्रमं[15] षट्सप्ताष्टाङ्गुलवेदिका नित्यनैमित्तिककाम्यापेक्षया कनिष्ठामध्यमाज्येष्ठतया स्रुक् कथिता। तस्याः स्वानुसारेणैव पञ्चषट्सप्ताङ्गुलमुखदैर्घ्यप्रमाणं कार्यमित्यर्थः। एवं च षट्त्रिंशदङ्गुलत्वे त्रिविधाया अपि स्थिते कनिष्ठायाः [16]पञ्चाङ्गुलं मुखम् एकाङ्गुलः [17]कण्ठः [18]षडङ्गुला वेदी चतुर्विंशत्यङ्गुलो दण्डः। मध्यमायाः षडङ्गुलं मुखम् एकाङ्गुलः कण्ठः सप्ताङ्गुला वेदी द्वाविंशत्यङ्गुलो दण्डः। ज्येष्ठायाः सप्ताङ्गुलं मुखं पुनरेकाङ्गुलः कण्ठोऽष्टाङ्गुला वेदी विंशत्यङ्गुलश्च दण्ड इति [19]व्यवस्थितम्। यदि वा मध्यमायाः [20]कनिष्ठायाश्च [21]दण्डे दैर्घ्याद् द्वे द्वे अङ्गुले पातनीये। एवं च कनिष्ठा द्वात्रिंशदङ्गुलप्रमाणा भवति। यथोक्तं श्रीमत्-**स्वायंभुवे**—"द्वात्रिंशदङ्गुला-

[1] A : अर्थ pour अर्ध
[2] A : शेषं pour शेष
[3] A : वेद्यर्थ समता pour वेद्यर्धसंमिता
[4] C : निवृत्त pour निर्वृत्त
[5] A : परिस्रुतिः ; B : परिश्रुतिः
[6] C omet विधप्रमाण à प्रतिपादकः
[7] B : प्रतिपादकोऽङ्गो भवति
[8] C : दैर्घ्य एव
[9] B : यस्यास्तयथा
[10] C : आधरा स्थालिका
[11] B omet कण्ठो
[12] B : आदि pour अद्रि
[13] C ajoute वा
[14] C omet वा
[15] C : यथाकर्म
[16] B : पञ्चाङ्गुलमुखं
[17] C : कर्णः
[18] B omet षडङ्गुला वेदी चतुर्विंशत्यङ्गुलो दण्डः
[19] B : व्यवस्थितः
[20] B : श्रेष्ठायाश्च
[21] C : दण्डदैर्घ्याद्




Sruva (dessin)

यामा" इति। अत्र च पक्षे तिसृणामपि विंशत्यङ्गुलो दण्डः संपद्यते। यथोक्तं श्रीमत्**पराख्ये**— "दण्डस्य द्विदशाङ्गुल" इति।[1]श्रीमत्**किरणे**ऽपि[2] "विंशद्दण्डभाग" इति।[3]अन्यच्च कीदृशी कार्या स्रुगित्याह—**हस्तकन्यसा पृथुनिर्गमा** इति। कनिष्ठाङ्गुलविस्तृतः सर्वस्या आज्यनिर्यासः कार्य इति यावत्। त्रिविधाया वेद्याः पृष्ठे त्रिविधमेवाज्यकोशं वक्तुमाह—**वेदवृत्तेत्यादि**। सम्यक्तिष्ठत्यस्यामाज्यमिति **संस्थितिः** आज्याश्रयः[4]पुष्कराख्ययान्यत्र कथितः। सा संस्थितिः **वेदवृत्तादिपृथुता** कार्या[5]वेदसंख्यया लक्षितैश्चतुर्भिरङ्गुलैः[6]वृत्ता[7]वर्तिता[8] वेदवृत्ता, सा आदिर्यस्याः सा वेदवृत्तादिः पञ्चाङ्गुल-[षडङ्गुल]-वर्तिता[9] च, एवंविधा पृथुता विस्तीर्णता यस्याः सा तादृग्विधा कार्येति शेषः। चतुरङ्गुलं पञ्चाङ्गुलं षडङ्गुलं च क्रमात् कनिष्ठामध्यमाज्येष्ठानां पुष्करं कुर्यादित्यर्थः। गाम्भीर्यमेकरूपमेव सर्वासामिति वक्तुमाह - **त्रिकलावटा**। सा च संस्थितिः[10]त्र्यङ्गुला गम्भीरमुखा कार्या। किं च - **भागार्धमेखलेति**। षट्सप्ताष्टाङ्गुलवेदिकानां चतुःपञ्चषडङ्गुला संस्थितिर्या कथिता तत्पार्श्वयोरेकैकस्याङ्गुलप्रमाणो[11] भागविशेषो यस्तदर्धेन [12]मेखला बहिः कटकाकृतिर्यस्याः सा भागार्धमेखला। **शेषचित्र**[13]**पत्रादिभूषणा** इति। मेखलोपयुक्तभागार्धस्य यः शेषो[14]द्वितीयमर्धं तत्र चित्राण्यनेकरूपाणि[15]पत्राणि, **आदि**ग्रहणादङ्कुरितकमलोत्पलादिकं भूषणं यस्याः। एवमाज्यस्थितिं विशेष्य स्रुचं[16]विशिनष्टि—**वेद्यर्धेति**। प्रागुक्तमानस्य[17] वेदित्रयस्य यदर्धं तत्संमिता तत्प्रमाणिका **आशाश्रा** दिक्संख्याश्रा चतुरश्रा अष्टाश्रा वा **गण्डिका** अवयवविशेषः तया **आसक्ता** अव्यवहिता **वेदिका** यस्याः। वेदिसंश्लिष्टा एकैकस्याः स्वस्ववेद्यर्धप्रमाणा चतुरश्रा गण्डिका कार्येत्यर्थः। किं च-**षण्णाहेत्यादि**। षड्भिरङ्गुलैर्नाहः वेष्टनं यस्य सः **षण्णाहः दण्डः** तस्मिन् **भागार्धेन** त्र्यङ्गुलार्धेन [18]**निर्वृत्तः** संपादितः दण्डाद्बहिर्निस्सृतो यः **कलशस्तत उद्गता**। परमामृत[19]रसनिर्भरकन्द[20]-कलशोद्गतमध्य[21]नालदण्डं हृत्कमलपुष्करं कण्ठतालु[22]पथव्यक्तरसबिन्दुप्रकान्तप्रसरत्परसुधारसस्रुतिस्रुक्प्रमान्तरं बहिरनुक्रियत[23] इत्यागमः। किं च—**अञ्जलिगोकर्णप्रणालाभपरिस्रुतिः**, अञ्जलिः उत्तान-

[1] C omet श्रीमत् .... à भाग इति
[2] manque dans l'édition du *Kiraṇāgama*, de Devakoṭṭai.
[3] B : अन्यश्च
[4] C : पुष्कराख्यान्यत्र
[5] C : वेदसंख्यालक्षितैः
[6] C : युक्ता
[7] B : वर्तिदा
[8] C ajoute वृत्ता
[9] B : वर्तिदा
[10] B : त्र्यङ्गुलगम्भीरमुखा
[11] B : द्व्यङ्गुलाङ्गुलप्रमाणो pour अङ्गुलप्रमाणो
[12] C : मेखला वर्पाकृतिर्यस्याः
[13] B : पत्राकृति pour पत्रादि ; C : पदादिकृति
[14] C ; द्वितीयमध्यं
[15] C : पलकाणि
[16] C : विशीर्णदक्कायां स्रुगित्याह pour विशिनष्टि
[17] C : मानकस्य pour मानस्य
[18] C : निवृत्तः
[19] C : संनिभ pour रसनिर्भर
[20] B : कमशोद्भव pour कलशोद्गत
[21] B : नाडी pour नाल
[22] C : वदव्यक्त pour पथव्यक्त
[23] C : अन्यत्क्रियते pour अनुक्रियते

हस्तद्वयसंपुटः तदाभा गोकर्णाभा प्रणालाभा [1]वा **परिस्रुतिः** आज्यनिर्यासधारामुखं यस्याः सैवम् ॥

वेद्याश्चातुरश्यं[2] विकल्पयितुं [3]विशेषान्तराण्याह—

**मण्डलार्धेन्दुवेदी वा [4]गूढकण्ठापि वा हिता ॥ ४० ॥**

**पञ्चांशवृत्तदण्डा वा मकराद्यासनोद्गता ।**

[**मण्डलार्धेन्दुवेदी वा**] मण्डलाकृतिर्वर्तुला अर्धेन्दुरूपा वा वेदिर्यस्याः [5]क्वचित्कामनाविशेषेणैवम्। **गूढकण्ठापि वा** इति। गूढो बहिरप्रकटः कण्ठो यस्याः। [**पञ्चांशवृत्तदण्डा**] पञ्चभिरंशै[6]र्वृत्तः कृतवेष्टनो दण्डो यस्याः सा, तथाविधा स्रुक् कार्या। तदुक्तं श्रीमत् **पराख्ये**—

"पञ्चाङ्गुलपरीणाहो दण्डः स्याद्द्विदशाङ्गुलः ।" इति ।

**मकराद्यासनोद्गतेति**। कलशस्थाने [7]मकरहंसशारिकाकमलादिकं वास्याः कार्यमित्यर्थः ॥

नित्यनैमित्तिककाम्यभेदात् कुण्डानां स्रुचामिव त्रैविध्यम् । तत्र नित्यकर्मार्थं कुण्डानां लक्षणमाह—

**[8]एकाङ्गुलौष्ठमुक्ताशामानसंस्थानमुत्तमम् ॥ ४१ ॥**

**चतुस्त्रिद्व्यङ्गुलोत्सेधपृथुनेमि[9]लयान्वितम् ।**

**अश्वत्थ[10]दल[11]संस्थानद्वादशाङ्गुलनाभिकम् ॥ ४२ ॥**

**षडङ्गुलोन्नतस्थूलयैकया[12] वावृतावृतम्[13] ।**

**नैत्यके[14] पावकागारं शृणु [15]नैमित्तिकेऽधिकम् ॥ ४३ ॥**

**एकाङ्गुलौष्ठमिति ।** एकाङ्गुल[16]प्रमाणकमोष्ठं [17]खातार्धावस्थितकटकाकृतिर्यस्य । [**उक्ताशामानसंस्थानम्**] उक्ताः पूर्वं कथिताः [18]ऐशान्याद्या आशा दिशः मानं च हस्ताद्यात्मकं संस्थानं चतुर-

[1] C : स pour वा

[2] C : चतुरश्रं pour चातुरश्यं

[3] C omet वि

[4] A et D : गूढकर्णापि ; C : गन्धकर्णापि

[5] C : क्वचित्कामनाविशेष वैगुण्यकर्णापि वा इति

[6] C : अङ्गैः pour अंशैः

[7] B : मकरामलगारअमलादिकं ; C omet मकरहंसशारिका

[8] A, B, C et D : एकाङ्गुलोष्टम्

[9] D : क्रिया pour लय

[10] C : दण्ड pour दल

[11] A : संतार pour संस्थान

[12] D : एकधा pour एकया

[13] A et D : अन्वितम् pour आवृतम्

[14] D : नैत्यगे

[15] D : नैमित्तके

[16] B : प्रमाणमेकमोष्ठं

[17] B : खागनार्थावस्थित ; C: घातार्थावस्थित

[18] B : ऐशान्यद्याशा

## KUṆḌA




1. Nābhi 2. Ūrdhva-mekhalā 3. Madhya-mekhalā
4. Adho-mekhalā 5. Hṛdayakamala 6. Karṇikā 7. Bīja




1. Nābhi 2. Urdhva-mekhalā 3. Madhya-mekhalā

श्ववृत्तादिराकारो यस्य तद् [1]उक्ताशामानसंस्थानं, **पावकागारम्** [2]अग्न्याश्रयं कुण्डं कुर्यात् ।

[3]"मरुद्दैत्ययमाशाभ्योऽन्यत्र नाभ्याद्यलंकृते ।
कुण्डे हस्तमिते वृत्ते वेदाश्रे वा ।"

इत्यनेन स्थानमानाकृतीनां [4]पूर्वमुक्तत्वाद् [5]हास्तिकस्य [6]चोत्तमत्वम् [7]अरत्निप्रमाणकस्य मध्यमत्वाद् मुष्टिप्रमाणकस्य च कनिष्ठत्वात् । [8]अरत्निः कनिष्ठान्तहस्तप्रमाणम् । तावत्प्रमाणं शतिक[9]होमहेतोः मुष्टिप्रमाणमर्धशतिके । यथोक्तं श्रीमत् **स्वायंभुवे**—

"शतिकार्धे च शतिके मुष्ट्यरत्निप्रमाणतः ।" इति ।

हास्तिकस्य तावन्मेखलानां प्रमाणमाह—**चतुस्त्रिद्व्यङ्गुलोत्सेध** इति । यथाक्रमं चतुर्भिः त्रिभिर्द्वाभ्यां **पृथुत्वं** विस्तारः **उत्सेधश्च** उच्छ्रयो यस्य तथाविधेनोर्ध्वमध्याधस्तनेन[10] **नेमित्रयेण** मेखलात्रयेण **अन्वितं** युक्तम् । तथा च **अश्वत्थदलसंस्थाना** [11]पिप्पलपत्राकृतिरेकहस्तप्रमाणकस्य [12]**द्वादशाङ्गुलायतिः नाभिः** [13]होतुरग्रावस्थितोऽवयवविशेषो यस्य । ततश्च [14]स्वस्वगर्भार्धेन शास्त्रान्तरोक्तवत् त्रिभागेन वा नाभिरेकहस्तस्य[15] कार्या । यथोक्तं श्रीमन्**मये**—

"कुण्ड[16]बिम्बार्धमानेन नाभिस्त्र्यंशेन वा हिता ।" इति ।

चतुस्त्रिद्व्यङ्गुलमेखलात्रयं यदुक्तं तत्र वैकल्पिकं विधिमाह—**षडङ्गुलोन्नत** इत्यादि । अङ्गुलषट्केनोन्नता तावतैव **स्थूला** विस्तीर्णायामा[17] [**आवृता**] आवृणोतीत्यावृतिर्मेखला तया **एकयैव वा** [18]च [**आवृतं**] परिवृतम् । **नैमित्तिके** प्रतिष्ठादीक्षाभिषेकादिहोमविषये[19] प्रोक्तमानाद् **अधिकं** द्विकरादिकं **शृणु** अवधारयेति त्रिदशेश्वरो मुनिमवहितं करोति ॥ ४१ - ४३ ॥

तदेव नैमित्तिककुण्डमानमाह—

**[20]साहस्रादिषु होमेषु [21]द्विचतुर्वसुहस्तकम् ।**

[1] B : उक्ता सा pour उक्ताशा
[2] C : अग्न्याश्रयकुण्डं
[3] cf. *śloka* 2
[4] C : पूर्वमुक्तस्य
[5] C : हास्तिकत्वस्य
[6] C : वा pour च
[7] C : अरणि pour अरत्नि
[8] C : अरन्विकः
[9] C omet होम
[10] C : अवस्थितेन pour अधस्तनेन
[11] C : वट pour पिप्पल
[12] B : द्विदश pour द्वादश
[13] C : होतुरङ्गुलाग्रावस्थितो
[14] C omet स्व
[15] C : एकैकस्य pour एकहस्तस्य
[16] C : कुण्डं pour कुण्ड
[17] B : यासौ pour आयामा
[18] B omet च
[19] C ajoute स्थूला विस्तीर्णा
[20] C : साहस्रादिकहोमेषु
[21] A, B et D : द्विचतुष्पट्सुहस्तकम्

[1]तस्यानुपातादोष्ठादि विहितेकैव मेखला ॥ ४४ ॥

सहस्रेण निर्वृत्तं साहस्रम्। आदिग्रहणादयुतलक्षकोटिकसंख्यातः। तत्र सहस्रहोमे हस्तप्रमाणकमेव अयुतहोमे द्विहस्तं लक्षहोमे चतुर्हस्तं दशलक्षहोमे षड्ढस्तकं कोटिहोमेऽष्ट[2]हस्तक[3]मिति संहितान्तरश्रुतो नियमोऽनुगन्तव्यः। उक्तं हि श्रीमत् **किरणे**[4]—

"सहस्रायुतहोमे तु हस्तं हस्तद्वयं तथा।
स्याल्लक्षे प्रयुते होमे चतुर्हस्तं च षट्करम्।
कोटिहोमेऽष्टहस्तं तु तस्मादूर्ध्वं न कारयेत्॥" इति।

एवं [5]चाष्टहस्तस्याष्टाङ्गुलौष्ठकरणाद् अन्येषां [6]तु स्वस्वहस्तसंख्यया [7]त्वोष्ठस्यानुपाते त्रैराशिकविधिः कार्यः। नाभिस्तु महतां स्वत्रिभागेन कनिष्ठानां स्वार्धेन। **विहितैकैव मेखला** इति। हस्तप्रमाणस्य तावत्कुण्डस्य वैकल्पिकमेकमेखलत्वं पूर्वमुक्तम्। सा च मेखला हास्तिकस्य षडङ्गुला पूर्वमेव [8]विहितेत्याम्नाता। तदन्येषां तु स्वस्वहस्तसंख्यातैरङ्गुल[9]वृद्धिः कार्या। यथोक्तं श्रीमन्**मतङ्गे**—

"कुण्डस्य यावती वृद्धिस्तावती मेखलास्वपि।" इति।

एवं च द्विहस्तस्याष्टाङ्गुला, चतुर्हस्तस्य दशाङ्गुला, [10]षड्ढस्तस्य द्वादशाङ्गुला, अष्टहस्तस्य चतुर्दशाङ्गुला मेखला कार्येति तात्पर्यम्। एवकारश्चात्र भिन्नक्रमो व्याख्येयः। अतश्च मेखलात्रयवदेकापि मेखला विहितैव। तत्र त्वेकैव मेखला विहितेति नियमः। तिसृणामपि बहुशः प्रमाणस्याम्नातत्वात्। यथोक्तं श्रीमत् **किरणे**[11]—

"मुष्टिमात्रस्य कुण्डस्य मेखला त्वङ्गुलद्वया।
मेखलाद्वितयं [12]कार्यमङ्गुलार्धाङ्गुलक्रमात्॥
अरत्निमात्रकुण्डस्य नेमिः स्यादङ्गुलैस्त्रिभिः।

[1] A : तस्यानुपातागोष्ठादि ; C : तस्यानुपानादोष्ठादि
[2] B : अस्त pour अष्ट
[3] C omet क
[4] cf. *Kiraṇāgama*, II, 5, 3-4
[5] C : चाष्टहस्ताङ्गुष्ठकरणाद्
[6] C omet तु
[7] C : आदिष्ट pour त्वोष्ठ
[8] C : ईरिता pour विहिता
[9] C : अङ्गुलैः pour अङ्गुल
[10] En ms. C le folio n° 144 manque ce qui supprime le passage षड्ढस्तस्य .... à.... यज्ञाङ्गेभ्यो द्रुमेभ्यः (cf. commentaire sur *śloka* 50)
[11] cf. *Kiraṇāgama* II, 5, 5-12.
[12] B : चान्यद् pour कार्यम्; ms. B donne la note : कार्य इत्यारभ्य द्व्यङ्गुलकमादित्यन्ता श्लोका आदर्शे न विद्यन्ते। किरणागमस्य दृष्ट्या संघटिताः।

पूर्वं नेमिद्वयं चान्यद्द्व्यङ्गुलाङ्गुलतो भवेत् ॥
हस्तमात्रस्य कुण्डस्य नेमिः स्याच्चतुरङ्गुला ।
अन्यन्नेमिद्वयं कार्यं त्र्यङ्गुलद्व्यङ्गुलक्रमात् ॥
कुण्डस्य द्विकरस्यापि पूर्वा नेमिः षडङ्गुला[1] ।
अन्याङ्गुलचतुष्केण तृतीया त्वङ्गुलैस्त्रिभिः ॥
चतुष्करस्य कुण्डस्य नेमिराद्याङ्गुलाष्टकम् ।
[2]षड्भिरन्याङ्गुलैः कार्या चतुर्भिरपराङ्गुलैः ॥
कर्तव्या मेखला पूर्वा षड्ढस्तस्य दशाङ्गुला ।
अङ्गुलैरष्टभिश्चान्या तृतीया षड्भिरङ्गुलैः ॥
अष्टहस्तस्य या पूर्वा मेखला द्वादशाङ्गुला ।
दशाङ्गुला द्वितीया स्यात्तृतीयाष्टाङ्गुला स्मृता[3] ॥" इति ॥ ४४ ॥

तदेवं सामान्यकुण्डलक्षणमुक्त्वा तत्काम्यानुगुण्येन कुण्डलक्षणं प्रस्तौति—

**दिगाकारादिभेदो यः कामतः सोऽपि कथ्यते ।**

**कामत** इच्छावशाद् [**दिगाकारादिभेदः**] दिग्भेद आकारभेदः, आदिग्रहणात्फलभेदो **यः सोऽपि** [**कथ्यते**] उच्यते ॥

कश्चासौ कामत इत्याह—

**स्तम्भतापभयध्वंसशान्त्युच्चाटादिकश्च यः[4] ॥ ४५ ॥**

स्तम्भनं **स्तम्भः** सैन्यादेर्निश्चलीकरणम् एवमादिको **यः** कामः प्रार्थनाविशेषः सोऽयं दिगाकारादिभेदस्य विषयः ॥ ४५ ॥

तदेव विभज्याह—

**वेदाश्रं[5] पौष्टिकस्तम्भसेनाकर्मसु पूर्वतः ।**
**हौताशे योनिसंस्थानं तापाकर्षण[6]दीप्तिषु ॥ ४६ ॥**
**याम्ये टङ्काननाकारं शत्रुसंङ्घवनच्छिदे ।**

[1] *Kiraṇāgama* : पूर्वनेम्यङ्गुलाष्टकम्
[2] ms. B donne la note : एतच्छ्लोकश्च किरणागमदृष्ट्या संघटितः ।
[3] *Kiraṇāgama* : मता
[4] A : कर्मसु pour आदिकश्च यः
[5] D : वेदाश्र pour वेदाश्रं
[6] D : कर्षण pour आकर्षण

**शिवार्घ्यपात्रमब्जाङ्कं वृत्तं व्रणविवर्जितम् ।**
**[1]सच्छङ्खशुक्तिशृङ्गादि पलाशाब्जदलादि वा ॥ ५४ ॥**

[**सौवर्णं राजतं ताम्रं भौमं वा**] हेमरौप्यताम्रमृण्मयेभ्योऽन्यतमम् [**अब्जाङ्कं**] पद्माङ्कितं [**वृत्तं**] वर्तुलं [**व्रणविवर्जितं**] छिद्ररहितं [2]**शिवार्घ्यपात्रं** कुर्यादिति शेषः । [**पाणिपूरकं**] प्रसृताङ्गुलिपाणिपूरकत्वेन समन्ताद् द्वादशाङ्गुलत्वमिष्टम् । यदुक्तं श्रीमन्**मये**—

"द्वादशाङ्गुलविस्तीर्णमर्घ्यपात्रं[3] प्रशस्यते ।" इति ।

हैमाद्यसंभवे [4]क्वापि वा कामनाविशेषे [**सत्**] शोभनं [**शङ्खशुक्तिशृङ्गादि**] शङ्खशुक्ति[5]खड्गादिप्राणिशृङ्गं [**पलाशाब्जदलादि वा**] पलाशपद्मपत्राद्यपि कुर्यात् । **आदि**ग्रहणात्कदलीदलादि ॥ ५३ - ५४ ॥

पञ्चगव्यं पृथगभिमन्त्रयितुं यानि पात्राणि क्रियन्ते तान्यप्युक्तद्रव्यमयान्येव शृङ्गशङ्खशुक्तिवर्जम् । तदाह—

**गव्यपात्राण्यपीमानि स्युर्विषाणादिकं विना ।**

तानि तु कियत्प्रमाणानीत्याह—

**षडङ्गुलार्धविष्कम्भभ्रमसिद्धानि [6]भूतये ॥ ५५ ॥**

**षडङ्गुल**मानको योऽसौ **अर्धविष्कम्भो** विस्तारार्धं तावद् **भ्रमेण** [**सिद्धानि**] निष्पन्नानि द्वादशाङ्गुलविस्ताराणीति यावत् ॥ ५५ ॥

**पात्राणि मृच्चतुर्थेभ्यः [7]प्रणीतातिलसर्पिषाम् ।**

[**प्रणीता-तिल-सर्पिषां पात्राणि**] प्रणीतायाः पात्रम्, आज्याधिश्रयणार्थं[8] होम्यानां[9] च [10]तिलानां पात्रं, कृतसंस्कारस्याज्यस्य पात्रं[11] चैतानि **मृच्चतुर्थेभ्य** इति मृत् चतुर्थी येषां तेभ्यः प्रागुक्तेभ्यो हेमादिद्रव्येभ्यः कार्याणि [12]इति शेषः ॥

[1] A : मच्छुङ्ग
[2] C : शिवार्घपात्रं
[3] C : अर्घपात्रं pour अर्घ्यपात्रं
[4] B : द्वापि pour क्वापि वा
[5] B : खंगादि pour खड्गादि ; C : गाङ्गादि
[6] A : भूतले
[7] A et C : प्रणीत pour प्रणीता ; D : प्राणित
[8] C : अधिश्रपणार्थं pour अधिश्रयणार्थं
[9] C : भोज्यानां
[10] C omet तिलानां
[11] B : आज्यपात्रं pour आज्यस्य पात्रं
[12] C omet इति शेषः



Śivārghyapātra



Nirodhārghyapātra



Sāmānyārghyapātra



Śaṅkha



Balāvarta-Śaṅkha

अरणेरिदानीं लक्षणमभिधत्ते—

**वस्वर्क[1]त्र्यष्टकोत्सेधविस्तारायामलक्षिता ॥ ५६ ॥**
**शमीजाश्वत्थजा [2]सार्धमाक्रमण्याधरारणिः ।**

**वसु**संख्यैः[3] अष्टभिरङ्गुलैः[4] **उत्सेध** उच्छ्रयः **अर्क**संख्यैर्द्वादशभि**र्विस्तारः त्र्यष्टकेन** [5]चतुर्विंशत्यङ्गुलैः **आयामः** दैर्घ्यं तैः [6]**लक्षिता** युक्ता, [**शमीजा अश्वत्थजा**] शमीवृक्षात् पिप्पलाद्वा जाता **आक्रमणी** [7]मणिप्रमण्डलाख्यया[8] संहितान्तरे [9]प्रसिद्धस्य मन्थनसंज्ञस्य पृष्ठे [10]उभयान्ततोऽवष्टभ्या उत्तरारणिः[11] । तया सह **अधरारणिः** उक्तमाना कार्या । तावत्येवोत्तरारणिः करणीयेति भावः ॥

[12]किं च—

**षडङ्गुलं प्रजननं चन्द्रे [13]वृत्ते भुजाधिके ॥ ५७ ॥**
**सुसंधायायसा मध्ये तयोर्गोवालजावृता ।**
**गायत्रीजप्तया शंभुमुच्चरन्[14] भ्रामयेद्दृढम् ॥ ५८ ॥**

**भुजाधिक** इति भुजसंबन्धिनो नाहात् किंचिदधिके [**वृत्ते**] वर्तुले **चन्द्रे** तन्नाम्नि मन्थाख्ये **प्रजननम्** अग्न्युत्पादकं शङ्कुं **षडङ्गुलं** समारोप्य **अयसा** लोहेन [**सुसंधाय**] सुष्ठु संधाय बद्ध्वा चन्द्रस्य बुध्नभागमादाय **तयो**रधरोत्तरयोररण्योः **मध्ये** [15]अन्तरे [**शंभुं**] परमेश्वरमन्त्रम्[16] [**उच्चरन्** ] स्मरन् **दृढं भ्रामयेद्** [17]आवर्तयेद् मथ्नीयाद् इति यावत् । केनेत्याह—**गोवालजावृता** गोवालेभ्यो जाता गोवालजा, आवृणोतीत्यावृत् [18]मन्थनरज्जुः तया, [**गायत्रीजप्तया**] गायत्र्या जप्तया ॥ ५७ - ५८ ॥

[19]ततश्च—

**[20]जातं पात्रे निधायाग्निं संस्कुर्यादुक्तवर्त्मना ।**

[1] B : व pour त्र्य
[2] A : साद्धयम pour सार्धम्
[3] B omet संख्यैः
[4] C omet अङ्गुलैः
[5] C : चतुर्विंशाङ्गुलैः
[6] B : लक्षितं युक्तं
[7] C omet मणि
[8] B : मणिप्रमण्ड्याख्यया
[9] B : प्रसिद्धा
[10] C : उभयान्तावष्टभ्या
[11] C ajoute वसुसंख्यैरष्टभिरङ्गुलैः
[12] B omet किंच
[13] A : व्यक्ते
[14] A : उच्चरेद् pour उच्चरन्
[15] C omet अन्तरे
[16] B : परमेश्वरं pour परमेश्वरमन्त्रं
[17] C : आनर्तयेत्
[18] C : मन्था pour मन्थन
[19] C omet ततश्च
[20] D : जातपात्रे

तस्मिन्नुपरतज्वाले न धूमव्याकुलार्चिषि ॥ ५९ ॥
जुहुयान्मन्द[1]दीप्तौ वा त्वरावानपि शास्त्रवित् ।

तम् अग्निं [जातम्] उद्धृतं **पात्रे निधाय** [**उक्तवर्त्मना**] उक्तेन क्रमेण **संस्कुर्यात्**। **तस्मिंश्च** [**उपरतज्वाले**] विरतार्चिषि [**धूमव्याकुलार्चिषि**] धूमाकुलितज्वाले [**मन्ददीप्तौ**] स्वल्पतेजसि **वा शास्त्रवित्** [2]शास्त्रज्ञः [**त्वरावानपि**] [3]शीघ्रार्थ्यपि [**न जुहुयात्**] होमं न [4]कुर्यात् ॥

इदानीं [5]विधित्सितार्थानुगुण्येन वह्निलक्षणविशेषमाह—

शान्त्याप्यायननौयानवृष्टिमृत्युंजयादिषु ॥ ६० ॥
स्निग्धप्रदक्षिणावर्तस्तिरस्कृतहिमद्युतिः ।

पराराष्ट्रादिजिगीषया अर्थाहरणेच्छया वा सागरादौ [6]**नौयानम्** । [**स्निग्धप्रदक्षिणावर्तः**] स्निग्धा [7]अरूक्षवर्णाः प्रदक्षिणेन प्रवृत्ताश्च ज्वाला यस्य स तथा । **तिरस्कृतहिमद्युतिः** [8]जितेन्दुः सितवर्णोऽग्निः, शस्यत इत्यध्याहारः ॥

सौभाग्याकृष्टिसंतान[9]बलमूलादिसिद्धये ॥ ६१ ॥
बन्धूकदाडिमीपुष्प[10]विद्रुमस्पर्धिरोचनः ।

**संतान**सिद्धये [11]संतानोत्पत्त्यर्थं [12]**बल**सिद्धये वीर्यसाधनार्थं **मूलादिसिद्धये** बन्धूकादि[13]तुल्यरुचिरग्निः श्रेष्ठः । [14]ओषधिविशेषाणां हि मूलपत्र[15]कुसुमफलादिविशिष्टत्वे सति [16]कार्याणि सिद्धानि तत्तदभिप्रेतवस्तुसाधनसामर्थ्यानि भवन्ति । एतत्सिद्धये बन्धूकादिकुसुमरुचिरग्निः श्रेष्ठः ॥

विद्वेषोच्चाटरुक्तापशोषमोहक्षयादिषु ॥ ६२ ॥
श्यामनीलासितज्वालः सधूमोग्रस्वनो हितः ।

[1] A : मन्त्र pour मन्द .
[2] B omet शास्त्रज्ञः
[3] B : शौर्यार्थ्यपि
[4] C : कारयेत्
[5] B : विधिसिद्धार्थं pour विधित्सितार्थं
[6] C : नौध्यानम्
[7] B : वलक्ष pour अरूक्ष
[8] C : जनितेन्दुः
[9] C : बिल pour बल
[10] B : विभ्रम pour विद्रुम
[11] C : सिद्धं तदुत्पत्त्यर्थं
[12] C : बिलसिद्धये वित्तसाधनार्थं
[13] C omet तुल्य
[14] B omet ओषधिविशेष....à....कुसुमरुचिरग्निः श्रेष्ठः
[15] C : कुसुमत्वात् फलादिविशिष्टे
[16] C : कर्तव्या सिद्धये

विद्वेषादिष्वर्थेषु [श्यामनीलासितज्वालः] श्यामनीलकृष्णज्वालः सधूमः [उग्रस्वनः] [1]उग्रध्वनिश्च [हितः] शस्यः । ६२

रसायनरसारोग्यस्थैर्यराज्यादिसिद्धये ॥ ६३ ॥

हरिद्राकुङ्कुमक्षोदकर्णिकारोपमद्युतिः ।

**रसायनं** विशिष्टदेशकालमन्त्रौषधिप्रयोगैः शरीर[2]स्थिरीकरणहेतुर्द्रव्यविशेषः । [3]**रसः** पारदादिः [4]कर्तव्यस्य जालविषयस्य क्वचिदुपयोगावधारि[5]तत्वेनेष्टं धात्वाद्याविर्भवति । एवमादिसिद्ध्यै पीतप्रभोऽग्निः शुभः ॥

तत्त्वज्ञानमहायोगदिव्यसिद्धिप्रसिद्धये ॥ ६४ ॥

स्फटिकानुकृतिज्वालो [6]मिश्रो मिश्रार्थसाधकः ।

परमार्थावबोधप्रवृत्त्यर्थम् इति निर्दिष्टज्वालः । व्यामिश्रवर्णप्रभो **मिश्रश्च** [**मिश्रार्थसाधकः**] [7]मिश्रकार्यसंपादको भवतीति शेषः ॥

वर्णविशेषेभ्यः फलवैलक्षण्यमुक्त्वा गन्धविशेषेभ्यस्तद्भेदमाह—

चन्दनाज्यपयो[8]जातिमल्लिकागन्धगन्धवान् ॥ ६५ ॥

शान्त्यादौ साधनानीके कर्पूरागरुकासृजाम् ।

**जातिः** मालती । [9]**मल्लिका**ख्येयं प्रसिद्धा । चन्दनादिगन्धवद्गन्धो यस्य सः तद्वान् । **शान्त्यादा**वित्यादिग्रहणाद् [10]आप्यायनादौ [11]**साधनानीके** सिद्धिसमूहे [**कर्पूरागरुकासृजाम्**] अगरुकर्पूररुधिराणां गन्धेन [12]युक्तश्श्रेष्ठः ॥

कर्मण्यनिष्टभूयिष्ठे शवासृङ्[13]मद्यमेदसाम्[14] ॥ ६६ ॥

[1] B : उरुध्वनिश्च
[2] B : स्थितिकरण pour स्थिरीकरण
[3] B : रसवातादिकर्तव्यस्य
[4] C : कर्तव्यादिजलविशेषश्च
[5] C omet त
[6] B : मिश्रे
[7] B : भूमिश्रीकार्य pour मिश्रकार्य
[8] B : जात pour जाति
[9] C : मल्लिकाह्वयाख्ययेह प्रसिद्धा
[10] C आयनादौ
[11] C : साधनादिके
[12] C : युक्तः श्रेष्ठः
[13] B : मध्य pour मद्य
[14] B : मेधसाम्

[**अनिष्टभूयिष्ठे**] अकल्याणबहुले [**कर्मणि**] कार्ये **शवासृङ्मद्य**[1]**मेदसां** [2]संबन्धिना [3]गन्धेन अग्निर्युक्तो भवति ॥ ६६ ॥

**कदम्बकेतकीबिल्वचम्पकादेश्च पौष्टिके ।**

कदम्बादीनां गन्धेनान्वितस्तु [**पौष्टिके**] पुष्टिनिमित्ते कर्मणि श्रेष्ठः ।

**कपिगुग्गुलुदन्तीशमदायुग्मच्छदात्मनाम् ॥ ६७ ॥**

**महोदये क्रियायोग्यवस्तुसंस्थानशब्दभृत् ।**

[**महोदयः**] महानुदयः सर्वातिशायिनी सिद्धिः, तन्निमित्तम् अग्निर्भवति। कीदृशः—[**क्रिया-योग्यवस्तु-संस्थान-शब्दभृत्**] अभिप्रेतक्रियायोग्यस्य [4]वस्तुनः संस्थानम् आकारं शब्दं च यो बिभर्ति[5] । तथा चोक्तं श्रीमत् **पौष्करे**—

" लिङ्गप्रासादपद्मादिध्वजच्छत्रसमाकृतिः ।
हंसतार्क्ष्यद्विपवृषैः शुभैश्च सदृशः शुभः ॥
वेणुवीणाध्वनिर्वह्निः शङ्खतूर्यसमस्वनः[6] ।
वृषध्वजनिनादश्च सिंहनादस्तु[7] शस्यते ॥ " इति ।

[8]अन्यच्च कीदृशः—कपिप्रभृतीनां गन्धेन युक्तः । **कपिः** [9]सिल्हकः । यदाहुर्**गन्धयुक्ति-ज्ञाः**[10]—

" तुरुष्को यावनः कल्पः पिण्याकः पिण्यकः कपिः" । इति ।

**दन्तीशमदो** [11]गजदाननिष्यन्दः । **अयुग्मच्छदः** सप्तपर्णः ॥

आहुतिप्रमाणं ब्रूते—

**पञ्चशाखाहृतं व्रीहियवं मृग्या तिलादिकम् ॥ ६८ ॥**

**स्रुवाव्रधि मधुक्षीरसर्पिरिक्षुरसादि च ।**

[**व्रीहियवं**] धान्यं यवादिकं [**पञ्चशाखाहृतं**] पञ्चाङ्गुलि[12]समुदायेन यावद् गृह्यते

[1] B : मध्य pour मद्य
[2] C : संबन्धिनाम्
[3] C omet गन्धेन
[4] C : अन्तुनः
[5] C ajoute म तथा
[6] B : ध्वनिः pour स्वनः
[7] B : सिंहनादस्य
[8] B : अन्यश्च
[9] B : सिन्धुकः
[10] B : ज्ञाताः pour ज्ञाः
[11] C : जगदानन्दनिष्यन्दः
[12] B : पञ्चाङ्गुली

तावत्प्रमाणं होतव्यम् । [1]उन्मुखकनिष्ठतर्जनीकया पिण्डितमध्यानामिकाङ्गुष्ठया [**मृग्या**] मृग्यभिधानया [2]मुद्रया [**तिलादिकं**] तिलतण्डुलसर्षपादि । [**स्रुवावधि**] [3]स्रुवप्रमाणं **मधुक्षीरसर्पिरिक्षुरसादि** ॥

**दधि पाणिनिकुब्जेन[4] मूलजातं त्रिखण्डकम् ॥ ६९ ॥**
**भक्ष्यवस्तु यथासिद्धं पर्ववत्पर्वलक्षितम् ।**

शुक्त्याकृतिः **पाणिः** [5]**निकुब्जः** तेन **दधि** होम्यम् । यदुक्तम्—"शुक्तिमात्राहुतिर्दध्न" इति । **मूलजातस्य** कन्दादेः [**त्रिखण्डकं**] [6]त्रिभागं त्रिभागं जुहुयात् । मोदकमधुरकर्पूरनालिकेरादि **भक्ष्यवस्तु** [**यथासिद्धं**] यथानिष्पादितम् [7]अखण्डितमित्यर्थः । **पर्ववद्** इति पर्वभिर्ग्रन्थिभिर्युक्तम्[8] इक्षुकाण्डादि [9]तत् **पर्वलक्षितम्** इति [10]पर्वप्रमाणत [11]एव छित्त्वा होम्यम् ।

**[12]दृगङ्गुला लतावल्ल्यः [13]फलं पुष्पमखण्डितम् ॥ ७० ॥**
**[14]पत्रं च समिधः सर्वाः प्रादेशायतिलक्षिताः ।**
**वार्क्ष्या यवीयसीः स्थूलाः सत्वचो निर्व्रणाः पराः ॥ ७१ ॥**

[**लतावल्ल्यः**] लताः वीरुधः, ताश्च गुच्छरूपाः, मालतीमल्लिकाद्या गुल्मरूपाश्च । वल्ल्यस्तु प्रतानाकृतयो व्रतत्यः । [**दृगङ्गुलाः**] दृक्श्रुत्या द्वाभ्याम , दृक्शब्दस्य द्विसंख्यालक्षकत्वेन प्रसिद्धेर्द्व्यङ्गुलास्तावत्प्रमाणभागा होम्याः । फलानि पुष्पाणि च [**अखण्डितम्**] अविभज्यैव[15] होतव्यानि । [**प्रादेशायतिलक्षिताः**] प्रादेशप्रमाणं पूर्वं व्याख्यातम् । तावदायामोपलक्षिताः **समिधः** अग्नीन्धनाः । **सर्वा** इति याश्च शान्तिकपौष्टिके याश्चाभिचारिके कर्मणि ताः सर्वाः [16]समप्रमाणकाः[17] । **वार्क्ष्या** इति, न तु लतासंभवाः । शिष्टं लक्षणं प्रागुक्तेनेध्मलक्षणेन तुल्यम् ॥ ७० - ७१ ॥

**दधिक्षीरादिसंपृक्तमोदनं ग्रासलक्षणम् ।**

[1] C : उन्मुखतर्जनिकनिष्ठ्या
[2] C : द्रवप्रमाणं
[3] C omet मुद्रया
[4] C : निकुञ्चन pour निकुब्जेन
[5] C : निकुञ्चः
[6] B : त्रिभां त्रिभागं ; C : त्रिभागत्रिभागं
[7] C : अखण्डमित्यर्थः
[8] C ajoute यथा
[9] B : यत् pour तत्
[10] B : पर्वतप्रमाणतयैव
[11] C : एवं
[12] A : दिगङ्गुला
[13] B : पलं
[14] D : पलं pour पत्रं
[15] B : विभज्यैव pour अविभज्यैव
[16] C : एव pour सम
[17] B : समाः फलप्रमाणकाः

स्रुवोद्गतशिखं वापि कणसक्तूंस्तिलादिवत् ॥ ७२ ॥
कासारगोशकृत्पिण्डी[1]पिण्याकस्यौदनादिवत् ।

[दधिक्षीरादिसंपृक्तं] दधिक्षीरादिमिश्रितम् ओदनं [ग्रासलक्षणं] [2]ग्रासार्हं कवलप्रमाणकम्, [3]स्रुवोद्गतशिखम् इति स्रुवाग्रं यावत्योर्ध्वगतत्वाच्छिखा[4]रूपयौदनमात्रया पूर्यते तावत्प्रमाणकं [वा] जुहुयात् । [कणसक्तून्] कणानि कम्बुकानि सक्तुं च तिलादिवद् इति प्रागुक्तया मृग्या मुद्रया । कासारादिकम् [ओदनादिवद्] अनन्तरोक्तेनौदनप्रमाणेनोक्तम्[5] । कासारः क्षीरखण्डिका[6]घृतकृतो भोजनविशेषः । गोशकृतः तथा [7]पिण्ड्याः सक्त्वादिकृतायाः पिण्याकस्य च तैलनिर्यासस्य खिलिसंज्ञया प्रसिद्धस्य कासुचित् कामनासु होमः शास्त्रान्तरेष्वाम्नातः ॥

गुग्गुलोर्महिषाक्षस्य गुलिका बदरोपमा ॥ ७३ ॥
कल्कस्य चन्दनादेश्च मदादेश्चणकोपमा ।

[महिषाक्षस्य] महिषाक्षनाम्नो गुग्गुलोः [8]धूपद्रव्यस्य [बदरोपमा] बदरप्रमाणा गुलिका होम्या । कल्कस्य तुरुष्कादेः [चन्दनादेः] चन्दनादिद्रव्यस्य मदादेः कस्तूरिकादेश्च आदिग्रहणाद् अगरुकर्पूरादेश्च [चणकोपमा] चणकप्रमाणा होतव्या ।

क्रियाभेदानुगुण्येन मन्त्राणां जातिप्रयोगविशेषानाह—

दीक्षायां नित्यके शुद्धौ स्वाहान्तैर्विहितैः पदैः ॥ ७४ ॥
पौष्टिके शान्तिके वापि फडन्तैश्चाभिचारिके ।
किंतु [9]कृत्यानुगार्णस्थैर्द्विराख्योपपदान्वितैः ॥ ७५ ॥

दीक्षायां [नित्यके] नित्यकर्मणि शुद्धौ च प्रायश्चित्तरूपायां स्वाहान्तैः मन्त्रपदैः होमः कार्यः[10] । [पौष्टिके शान्तिके] [11]पुष्टिशान्त्याद्यर्थेषु कर्मसु विहितैः वषट्कारादिभिः । आभिचारिके मारणोच्चाटनादौ [फडन्तैः] फट्कारान्तैः । [किंतु] एतावान्विशेषः । [कृत्यानुगार्णस्थैः] यदुक्त-

[1] B : पिण्ड pour पिण्डी
[2] B : ग्रासार्हंबहुप्रमाणकं
[3] B omet स्रुवोद्गतशिखमिति
[4] C : रूपौदनमात्रया
[5] C : उक्तः pour उक्तम्
[6] C omet घृत
[7] B : पिण्डाः सक्त्वाद्याकृतयः ; C : पिण्याकः सक्त्वादिकृतायाः
[8] C : धूपस्य
[9] A : कृत्यानुगाणुस्थैर्
[10] B ajoute गुलिका इति शेषः
[11] C omet पुष्टिशान्त्याद्यर्थेषुः....à....मन्त्रपदैर्होमः कार्यः

क्रत्यानुगुण्येन चिकीर्षितकार्यानुरूपा ये वर्णा अक्षराणि तत्स्थैर्मन्त्रपदैर्होमः कार्यः। यथोक्तं श्रीमन्मये—

"जयादिस्तम्भने [1]लस्थैर्विद्वेषे हुंसमन्वितैः।
उच्चाटे वायुबीजस्थैः सविसर्गैश्च सिद्धये॥
मारणे हुंकृतैर्दीप्तावूर्ध्वाधो रेफसंयुतैः।
छेदने फट्पदप्रान्तैः पुष्टावाप्यायने वषट्॥
अमृताक्षरकैर्मृत्युनिवृत्तौ ब्रह्मवित्तमाः।" इति।

**द्विराख्योपपदान्वितैरिति** यस्य कर्मण आप्यायनादेर्याद्दगाख्या [2]संज्ञा तयोपपदे निकटे यान्यन्वितानि युक्तानि [3]मन्त्रपदानि तैः। यथा—ओं आप्यायय आप्यायय अमुकं वषट्। यद्वा आख्याया नाम्न उपपदत्वेन चिकीर्षितकर्म[4] द्विरन्वितं येषाम्। यथा—ओं देवदत्तमाप्यायय आप्यायय वषट्। एवमन्येषु कर्मस्वनुसंधातव्यम्[5]॥ ७४ - ७५॥

अग्निकार्यमुपसंहरन् प्रकरणान्तराभिधास्यमानमधिवासं सूचयितुमाह—

**इति मनुपतिभर्तुरिष्टिरिष्ट-**
**द्वितयनिमित्ततयोदिता[6] समासात्।**
**हुतवहतनुबिम्बितोग्रधाम्नः**
**सपदि हृदाभिमताप्तयेऽधिवास्या॥ ७६॥**

**इति** अनेनोक्तक्रमेण [**हुतवहतनु-बिम्बितोग्रधाम्नः**] हुतवहतनौ वह्निमूर्तौ बिम्बितं [7]प्रतिबिम्बितम् उग्रम् उत्कृष्टं [8]धाम तेजो यस्य [9]तस्य भगवतः **मनुपतिभर्तुः** मन्त्रेश्वराधिराजस्य **समासात्** संक्षेपाद् **इष्टिः उदिता** पूजनमुक्तम्। केन कारणेन—**इष्टद्वितयनिमित्ततया** इष्टम् अभिमतं प्राप्यतया [10]यत् स्थितं द्वितयं भुक्तिमुक्त्याख्यं फलं तद्धेतुत्वेन भुक्त्यर्थिभिः मुक्तिकामैश्च प्रोक्तवद् वह्न्यभिव्यक्तमन्त्रतर्पणतः सर्वमवाप्यत इत्यर्थः। उक्तं च श्रीमद् **रौरवसंहितायाम्**—

"अग्निरूपाः स्वतो मन्त्रा यजमानेच्छया स्थिताः।
सर्वान्कामान्प्रयच्छन्ति त्रैलोक्ये दुर्लभानपि॥" इति।

[1] B : लस्तैः ; C : लस्थैः
[2] C : संज्ञया
[3] C : मन्त्रपदैर्यथा
[4] B : चिकीर्षितकर्मणो
[5] C : अनुसर्तव्यम् pour अनुसंधातव्यम्
[6] B : उदितं pour उदिता
[7] B omet प्रतिबिम्बितम्
[8] B omet धाम
[9] B omet तस्य
[10] C : तत्स्थं pour यत् स्थितं

**सपदि** समनन्तरम् **अभिमताप्तये** अभिप्रेतप्राप्त्यै **हृदा** इति चेतसा सैवेष्टिः **अधिवास्या** प्रस्ताव्या । इयागवन्मानसम् अग्निकार्यमपि पूर्वं कुर्यादिति तात्पर्यम् ॥ ७६ ॥

[1]इति श्रीभट्टविद्याकण्ठात्मज-भट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ
[2]क्रियापादे वह्निकार्यप्रकरणं [3]षष्ठं समाप्तम् ।

[ इति षष्ठः पटलः ]

[1] A : इति मृगेन्द्रे क्रियापादेऽग्निकार्यविधिर्नाम षष्ठः पटलः ; B : अग्निकार्यप्रकरणं षष्ठं समाप्तम् ; D : इति मृगेन्द्रे क्रियापादेऽग्निकार्यः एकोनविंशतिः पटलः

[2] C omet क्रियापादे [3] C omet षष्ठं समाप्तम्

## [अथ सप्तमः पटलः]

### [अधिवासप्रकरणम्]

इदानीमधिवासः समनन्तरोपक्रान्तः[1] कथ्यते । अत्र प्रकरणसंबन्धः स्पष्ट एव स्थितः, प्रदर्शितश्च । अधिवासस्तावत् श्वो भाविनो यागस्य पूर्वेद्युरुपक्रमः । तथा चोक्तं श्रीमत् **पौष्करे**—

"यागः [2]श्वो भवितेत्यादौ कर्तव्यमधिवासनम् ।" इति ।

शिष्याधिवासः [3]स्थानाधिवासो द्रव्याधिवास आत्माधिवासो मण्डलकलशाद्यधिवासश्च । तत्र शिष्याधिवासो मुख्यस्तदर्थत्वादितरेषाम् । अतस्तदुपक्रमपूर्वं स्थानाधिवासं तावदाह—

**अथाधिवासयेच्छिष्यं योग्यतायै चितो गुरुः ।**
**विधिना वक्ष्यमाणेन कृत्वा भूमेः परिग्रहम् ॥ १ ॥**

[अथ][4]अग्नितर्पणानन्तरं **शिष्यम् अधिवासयेद्** [5]उपक्रान्तदीक्षं कुर्यादित्यानन्तर्यार्थोऽयमथशब्दः । किमर्थम्—**चितः** संवित्तेः **योग्यतायै** अर्हत्वार्थम् । गृहीतनियमस्य समाहितचेतसः [6]परश्रेयोऽनतिक्रान्ता संविद् भवति[7] । किं कृत्वा शिष्यमधिवासयेत्—**वक्ष्यमाणेन विधिना** [**भूमेः परिग्रहं**] भूपरिग्रहं **कृत्वा** ॥ १ ॥

अथ भूपरिग्रहः केन कस्मिन् कार्य इत्याह—

**पुण्ये हृद्ये समित्पुष्पकुशवारिसमन्विते ।**
**देशे [8]वर्णानुगां भूमिं प्रागीशोदक्प्लवां[9] भजेत् ॥ २ ॥**

**देशे पुण्ये** इति [10]सच्छास्त्रविरुद्धाचारप्रत्यन्ताद्यपुण्यदेशनिरासार्थम् । तथा हि **स्मृतिः**—

"[11]सिन्धुसौवीरसौराष्ट्रांस्तथा [12]प्रत्यन्तवर्षकम् ।

[1] C : उपक्रमान्तः pour उपक्रान्तः
[2] B · श्वोभावितेत्यादौ
[3] B omet स्थानाधिवासो
[4] C : अग्नितर्पणादनन्तरं
[5] B: उपक्रान्तदीक्षाकुण्डाद् pour उपक्रान्तदीक्षं कुर्याद्
[6] B : परलौल्यातिक्रान्ता
[7] B ajoute क्रान्ता संविद्भवति
[8] A : वार्णानुगां
[9] D : उदप्लवां pour उदक्प्लवां
[10] B : तत् pour सत्
[11] B : सिन्धुं सौवीरराष्ट्रं च
[12] B : प्रत्यन्तवासिनः

[1]गौडवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ।" इति ।

न तु काञ्ची[2]कोसलकाश्मीरादिनिषेधार्थम् । "काश्मीरमण्डलं पुण्यं [3]सर्वतीर्थमयं शुभम् ॥" इति [4]**भारतादौ** [5]महापुण्यत्वेन काश्मीरदेशस्य प्रसिद्धेः । **हृद्य** इति मनोज्ञे[6] । [**समित्पुष्पकुशवारिसमन्विते**] समित्कुसुमदर्भजलैः[7] [8]सम्यगित्यदूरस्थैरनुपहतैश्चान्विते [**प्रागीशोदक्प्लवां**] [9]पूर्वोत्तरेशाननिम्नां [**भूमिं**] भुवं [**भजेत्**] आश्रयेत्[10] । **वर्णानुगाम्** इति यस्य ब्राह्मणादेर्वर्णस्य [11]याद्दग्वक्ष्यमाणां ताम् ॥ २ ॥

तदेव वर्णानुगत्वं[12] स्पष्टयति—

**हिमासृक्ताल[13]नीलाभां मधुरादिरसोत्तराम्**
**घृतासृग्गोशकृन्मद्य[14]गन्धितां [15]सुप्ररोहिणीम्[16] ॥ ३ ॥**

यथासंख्यं ब्राह्मणादीनां [**हिमासृक्तालनीलाभां**] हिमरुधिरहरितालश्यामवर्णां[17] [**मधुरादिरसोत्तरां**] [18]मधुरकषायाम्लकटुकरसां [**घृतासृग्गोशकृन्मद्यगन्धितां**] घृतरक्तगोमयसुरागन्धां च भुवं [19]भजेदिति स्थितम् । एवं च प्रोक्तवर्णरसगन्धाः सर्वा एव ब्राह्मणस्य भूमयो ग्राह्याः । आद्यवर्ज्यं [20]तिस्रः क्षत्रियस्य । पाश्चात्ये [21]द्वे वैश्यस्य । शूद्रस्य त्वेकैव । तथा [22]ह्युक्तं श्रीमत् **कामिके**—

"एताश्चतस्रो विप्रस्य तिस्रो राज्ञ उभे विशः ।
एका शूद्रस्य [23]नियता शिला भूम्यश्च कीर्तिताः ॥" इति ।

तथा [**सुप्ररोहिणीं**] सुष्ठु समनन्तरमेव बीजादिप्ररोहो विद्यते यस्यामित्येतत्सर्ववर्णविषयं लक्षणम् ॥ ३ ॥

[1] B : गोण्डवङ्गकलिङ्गं च; C : कोङ्काणवङ्गकलिङ्गांश्च
[2] B : कौसलि
[3] C : सर्वतीर्थमरिंदम
[4] cf. *Mahābhārata*, III, 132, 10
[5] B omet महा
[6] C ajoute सति
[7] C : जालैः pour जलैः
[8] C : सम्यगित्यनुवर्तैर् pour सम्यगित्यदूरस्थैर्
[9] B : ईश pour ईशान
[10] C : श्रयेत् pour आश्रयेत्
[11] C : यावद्रक्षमाणां
[12] C : वर्णानुगतत्वं
[13] C : काल pour ताल
[14] B : मध्य pour मद्य
[15] B : सं pour सु
[16] Ms. B donne ici le *śloka* 4a
[17] C : श्यामश्यामवर्णां pour श्यामवर्णां
[18] C : मधुरकषायां कटुरसां
[19] C : गच्छेदिति
[20] B : चतस्रः pour तिस्रः
[21] B omet द्वे
[22] B : अपि pour हि
[23] C : नियमाच्छिला

किं च—

[1]स्निग्धां भारवतीं [2]खातवारिपुष्पपरीक्षिताम्[3] ।

**स्निग्धाम्** इत्यरूक्षाम् । **भारवतीं** भारसहाम् । [**खात-वारि-पुष्प-परीक्षितां**] खातेन वारिणा पुष्पैश्च शास्त्रान्तरोक्तवत् परीक्षिताम् । तत्र [4]खातपरीक्षा यथा—हस्तमात्रकृतखातायां भूमौ तदुद्धृतया तावत्यैव मृदा पूरणं [5]चेत्संपद्येत तदा [6]मध्या । तयैव मृदा न या पूर्यते सा निकृष्टा । यस्यां तु तदुद्धृतैव मृत् पूरणे कृतेऽतिरिच्यते सा श्रेष्ठा । तदुक्तं श्रीमत् **किरणे**[7]—

" हस्तमात्रं पुरा खात्वा [8]पूरणाभ्यधिका शुभा ।
समा भूर्मध्यमा ज्ञेया साधमा या न [9]पूरिता ।" इति ।

वारिपरीक्षा तु यस्यां भूमौ वार्यवारितमचिरेणान्तर्धानं गच्छति सा न शुभा । यस्यां तु नातिचिरमास्ते सा मध्यमा । सुचिरस्थायिसलिला तु शोभना । पुष्पपरीक्षापि यस्यां भूमौ रात्र्युषितानि पुष्पाणि सद्यः प्रोषितानि [10]चाम्लानानि भवन्ति सा श्रेष्ठा । किंचित्प्रम्लानानि यस्यां सा मध्यमा । शुष्कप्रायाणि तु यस्यां संपद्यन्ते सा न [11]शुभेति ।

प्रकारान्तरेणापि भूमेः शुभाशुभत्वज्ञानमाह[12]—

आमपात्रगताज्यस्थवर्तिभिर्वोदगादिभिः ॥ ४ ॥

[**आमपात्रगताज्यस्थवर्तिभिः**] आमपात्रगतम् अपक्वशरावावकाशस्थं [13]यदाज्यं [14]तत्स्थाभिः ब्राह्मणाद्यनुगतवर्णाभिः सितरक्तपीतकृष्णवर्णाभिः [**उदगादिभिः**] उदीच्यादिदिग्गताभिः[15] [16]वर्तिकाभिः परीक्षितामिति योज्यम् । तथाहि - ताश्चतस्रो वर्तीः प्रज्वाल्य सर्वासामेव युगपत्प्रशमे चिरकालावस्थानेन वा [17]तस्याः क्षितेरनवधृतविशेषत्वात्संकीर्णत्वमवगन्तव्यम् । अन्यवर्त्युपशमे[18] सिता चेज्ज्वलति [19]सा

[1] B omet ce demi-*śloka* ; cf. note 16 page 84
[2] A : ख्यात pour खात
[3] Ms. C donne ici le demi-*śloka* 4 b
[4] C : खातकी pour खात
[5] C : चोत्पद्यते
[6] C : श्रेष्ठा
[7] cf. *Kiraṇāgama*, II, 6, 6
[8] C : पूरणाद्यधिका
[9] C : दूषिता
[10] C omet च
[11] B : भुवेति pour शुभेति
[12] C ajoute आमपात्रेत्यादिना et omet le demi-*śloka* 4b ; cf. note 3
[13] B : यथाज्यं
[14] B : तत्तथाहि pour तत्स्थाभिः
[15] C : दिग्नताभिः pour दिग्गताभिः
[16] C : वर्तिभिः
[17] C : तस्यां
[18] C : उपगमे pour उपशमे
[19] C : तद् pour सा

ब्राह्मणस्य[1] श्रेष्ठा। अन्यासु [2]तु ज्वलन्तीषु सैव चेत् प्रशाम्यति [3]सा तस्य न प्रशस्ता। एवं रक्तायाः प्रशमे ज्वलन्तीष्वन्यासु क्षत्रियस्याशोभना। इतरवर्तिप्रशमे रक्ता चेज्ज्वलति सा तस्य श्रेष्ठा। एवं वैश्यशूद्रयोरपि ज्ञेयम् ॥ ४ ॥

इत्थं तावद्भुवो वर्णानुगुण्येन लक्षणविशेषान् सामान्येन च स्निग्धत्व[4]भारसहत्वादीन् गुणानुक्त्वा [5]शल्यनिरासार्थं तामेव विशेषयितुमाह—

**कृतोदकान्तसत्खातां[6] शुद्धमृद्ग्रावपूरिताम्[7] ।**
**[8]याज्ञीयसारवद्वृक्षमुद्गरैः सुदृढीकृताम् ॥ ५ ॥**
**कषायोदकसंसेकान्मृदुसद्ग्रावघर्षणात्[9] ।**
**विधाय दर्पणाकारां[10] विदध्या[11]द्यागमण्डपम् ॥ ६ ॥**

एवंविधां भूमिं **विधाय यागमण्डपं विदध्याद्** इति संबन्धः। [**कृतोदकान्तसत्खातां**] कृत उदकान्तः [12]सत् शोभनः [13]सर्पाकारशूर्पसूचीत्र्यश्राद्याकृतिवर्जितः खातो यस्यास्ताम्, तावता सकलशोध्यापगमात्[14]। तदुक्तं श्रीमनमये—

"आवारिदर्शनाद्यद्वा शल्यकाङ्क्षानिवृत्तितः।" इति।

तथा [**शुद्धमृद्ग्रावपूरिताम्**] [15]शुद्धयाष्टाङ्गुलप्रमाणकया मृदा [16]हस्तपूरकैश्च तद्व्यवधायकैर्ग्रावभिरश्मभिः पूरिताम्। यथा तत्रैवोक्तम्—

"तामश्मभिः करापूरैश्चतुष्कलमृदन्तरैः।
संशोध्य।" इति।

[17]तथा [**याज्ञीयसारवद्वृक्षमुद्गरैः**] यज्ञार्हेभ्यश्च वृक्षेभ्यः पलाशपिप्पलादिभ्यो ये कृतास्तैर्मुद्गरैः [18]आखोटकैः [19]**सुदृढीकृताम्**। [**कषायोदकसंसेकात्**] कषायोदकम् उदुम्बरवट[20]हरीतक्यादिजलं

[1] C ajoute सा
[2] C omet तु
[3] C : ततस्य सा pour सा तस्य
[4] C : भारवहत्वादीन्
[5] C : शल्यनिरासार्थामेव pour शल्यनिरासार्थं तामेव
[6] A : सद्धातां pour सत्खातां; C : सत्खाताद्
[7] C : पूरितम् pour पूरिताम्
[8] A : याज्ञिय pour याज्ञीय
[9] A : कर्षणात् pour घर्षणात्
[10] A et C : दर्पणाकारं
[11] B omet ध्या
[12] C : सम pour सत्
[13] B : सर्वाकार शूर्पसूचित्रश्राद्याकृतिवर्जितः
[14] C : उपशमात् pour अपगमात्
[15] C : अष्टाङ्गुलप्रमाणकया शुद्धया मृदा
[16] B : अन्न pour हस्त
[17] C : यथा
[18] B et C : आकोटकैः
[19] C : स pour सु
[20] B : आम्र pour हरीतकी

तत्सेचनात्। [**मृदुसद्ग्रावघर्षणात्**] मृदुना श्लक्ष्णेन[1] मनोज्ञेन च ग्राव्णा पाषाणेन यद् घर्षणं श्लक्ष्णीकरणं तस्माद्धेतोः [**दर्पणाकारां**] आदर्शोदराभां [**विधाय**] कृत्वा [**यागमण्डपं**] यागगृहं [**विदध्यात्**] कुर्यात् ॥ ६ ॥

तदर्थं दिक्सिद्धिमाह—

**ध्रुवपुष्यादिवेधेन छायया वा खरद्युतेः ।**
**दिक्सूत्राण्युपलभ्यादौ सारदार्विष्टकादिना ॥ ७ ॥**

अथ किं कृत्वा यागमण्डपं विदध्यात्—**आदौ दिक्सूत्राण्युपलभ्य**। केनेत्याह—**ध्रुवपुष्यादिवेधेन** इति। **ध्रुवः** [2]ताराचतुर्दशकारब्धमूर्तिः सकलज्योतिश्चक्रोर्ध्ववर्ती तदालम्बनभूतो मन्वन्तरादिष्वप्यविचलितसंनिवेशो[3] [4]देवताविशेषः। यदाहुर्ज्योतिश्शास्त्रविदः—

"मन्वन्तरे पुष्कलेषु च्यवमानेषु कर्तृषु ।
स्वस्थानाच्च्यवते नेति ध्रुवत्वात्स ध्रुवः स्मृतः ॥" इति ।

तस्योत्तरदिग्व्यभिचारि[5]मध्यमज्योतिस्तद्वेधः। तत्संमुखीननाडीसुषिरेण निश्चलया दृशा स्पष्टत्वेनावलोकनम्। ततश्च तन्नाडीप्रान्त[6]द्वयस्यालम्बनसूत्रद्वयस्पृष्टयोर्भूभागयोश्चिह्नद्वये कृते दक्षिणोत्तरायतसूत्रास्फालनाद् दक्षिणोत्तरदिग्द्वये लब्धे तावता सूत्रेण पूर्वापरदिशोर्मत्स्यद्वये कृते तयोरुपरि प्राक्पश्चात्प्रसृतसूत्रस्फोटनाद्[7] दिक्सूत्राणां दिक्चतुष्टयस्थानामुपलम्भः। **पुष्यादीति** पुष्यरेवती[8]मघानामप्यत्र विवक्षितत्वान्नियमेन[9] प्राच्यामेवोदयः। तेषां च प्रोक्तक्रमेण [10]वेधे कृते पूर्वापरदिक्सूत्रावगतिः। पुनरपि तावत्प्रमाणेन [11]सूत्रेणोत्तरदक्षिणदिशोर्मत्स्यौ कृत्वा तदुपरि सूत्रमा[12]स्फाल्य दिक्सूत्राण्युपलभेत[13]। अथवा विषुवकाले उदयतः [**खरद्युतेः**] चण्डरुचेर्द्वादशाङ्गुलशङ्कुच्छायया तावदङ्गुल[14]मण्डलान्तं मिलितया कृतचिह्ना प्रतीची प्राप्यते। [15]अस्तंगच्छतच्छङ्कुच्छाययैव प्राची तदभिमुखसूत्रप्रमाणेन मत्स्यद्वयकरणाद् दक्षिणो-

[1] C ajoute च
[2] C : ताराचतुर्दशकराद्द्विमूर्तिः
[3] B : अविचलितः संनिवेशो
[4] Le passage देवताविशेषः à स्वस्थानाच्च्यवते manque en C
[5] B : मध्य pour मध्यम
[6] C : प्रान्तस्थ pour प्रान्त
[7] C : उच्छेदनाद् pour स्फोटनाद्
[8] C : मुख्य pour मघ
[9] B : अनियमेन pour नियमेन
[10] B : वेधकृते
[11] C : सूत्रोत्तर pour सूत्रेणोत्तर
[12] B omet स्फा
[13] B : उपलभते pour उपलभेत
[14] C : मण्डलान्तमिलितया
[15] C : अस्तंगतस्य शङ्कुच्छाययैव

तदिग्द्वयम्। इत्येवं **दिक्सूत्राण्यादौ** [उपलभ्य] निश्चित्य **सारदार्विष्टकादिना**[1] मण्डपं **विदध्या**-दिति योज्यम्॥ ७॥

कीदृशं मण्डपं कुर्यादित्याह—

**ब्रह्मसूत्रचतुष्कान्तकृत[2]शङ्क्वादिलक्षणम्।**
**सत्कवाटार्गलद्वार[3]धूमनिर्गमशोभितम्॥ ८॥**
**विभक्तमण्डलस्थानवह्नियागघटाश्रयम्[4]।**
**लिप्तं [5]गोशकृता लब्धभुवा स्नातः प्रविश्य च॥ ९॥**

[**ब्रह्मसूत्रचतुष्कान्तकृतशङ्क्वादिलक्षणं**] प्रागादिदिगष्टके ब्रह्मसूत्रचतुष्टयं [6]यत् स्थितम्। यथोक्तं श्रीमत् **स्वायंभुवे**[7]—

"पूर्वपश्चिमशङ्कुस्थं[8] याम्यसौम्यगतं ततः।
[9]ऐशाननिर्ऋतिस्थं च सूत्रमास्फालयेच्छनैः॥
एवं पावकसामीरशङ्कुस्थं च चतुर्थकम्।" इति।

तदन्तेषु कृतानि [10]शङ्क्वादिभिर्लक्षणानि चिह्नानि यस्य। वक्ष्यमाणमण्डलकरणार्थं ब्रह्मपदाववोधाय [11]पदमध्ये [12]चाभिज्ञानानि कुर्यादित्यर्थः। न तु मण्डलमेव शङ्कुभिर्लक्षणीयम्॥ श्रीमत**पौष्करे** तन्निषेधश्रुतेः। [13]यदुक्तं तत्र—

"भुवः परिग्रहार्थं तु शङ्कुं सूत्रे निवेशयेत्।
शङ्कुभिः सूत्रयेन्नैव मण्डलं तु कदाचन।" इति।

तथा [**सत्कवाटार्गलद्वारधूमनिर्गमशोभितं**] श्रेष्ठैः कवाटैः पिधानैः तद्रक्षाकारिणीभिरर्गलाभिश्च युक्तं यद्द्वारं तेन, तथा धूमनिर्गमैः [14]गवाक्षजाल[15]चन्द्रशालिकाभित्तिवारणादिभिः शोभितम्। [**विभक्त**-

[1] C omet ना
[2] C : शक्त्यादि pour शङ्क्वादि
[3] C : द्वारं pour द्वार
[4] '....वह्न्याश्रयघटाश्रयम्' इति व्याख्यात्रभिप्रेतः पाठ इति भाति
[5] A et D : कोशकृता pour गोशकृता
[6] C omet यत्
[7] *Svāyambhuvāgama, Kriyāpāda, paṭala* 23, *śloka*, 7b-8
[8] B : संयुक्तं pour शङ्कुस्थं
[9] B : ऐशानाग्निर्ऋतिस्थं च
[10] B : शङ्क्वादिलक्षणानि
[11] C : प्रथम pour पद
[12] C : वा pour च
[13] B : तदुक्तं
[14] C : भवनाक्ष pour गवाक्ष
[15] B : चन्द्रे pour चन्द्र

**मण्डलस्थानवह्नियागघटाश्रयं**] विभक्ताः प्रदर्शितदिग्विभागाः मण्डलस्थानवह्न्याश्रयाश्च[1] कलशाश्रयाश्च यस्मिन्। [**लब्धभुवा**] भूतलं प्राप्तेन [**गोशकृता**] गोमयेन [**लिप्तम्**] उपलिप्तं चैवंविधं मण्डपं **स्नातः प्रविश्य** ॥ ८-९ ॥

किं कुर्यादित्याह—

**सर्वकारकसंपन्नं विलोक्यागस्त्यसेविताम् ।**
**दिशमध्यास्य सौम्यास्यः शिवीभूतः स्वलंकृतः[2] ॥ १० ॥**
**हेमाङ्गुलीयकोष्णीषयोगपट्टाक्षसूत्रभृत् ।**
**[3]विधायार्घ्यत्रयं शंभुपशुरोधाभिधानकम् ॥ ११ ॥**

तन्मण्डपं [**सर्वकारकसंपन्नं**] सकलकारकनिर्भरं [4]परमदृष्ट्यवलोकनेन [**विलोक्य**] अवलोक्य [**अगस्त्यसेवितां दिशं**] दक्षिणां दिशम् [**अध्यास्य**] आश्रित्य [**सौम्यास्यः**] उदङ्मुखः [**शिवीभूतः**] [5]शिवभावनामात्मन्यभिमन्य [**स्वलंकृतः**] सुष्ठु [6]सम्यगाभरणेनालंकृतमूर्तिः **अङ्गुलीयकोष्णीषयोगपट्टाक्षसूत्रधारी** स्यादिति शेषः। उष्णीषं प्रभुचिह्नकम्[7]। ततश्च[8] [9]**विधायार्घ्यत्रयम्** इति। [**शम्भु-पशुरोधाभिधानकं**] शिवार्घ्यं [10]शिवतत्त्वव्याप्त्या, पश्वर्घ्यम् आत्मतत्त्वव्याप्त्या, रोधार्घ्यं च [11]विद्यातत्त्वव्याप्त्या विदध्यात् ॥ १० - ११ ॥

अथ [12]क्व कस्योपयोग इत्याह—

**निरोधान्ते विसर्गे च [13]रोधार्घ्यमुपयुज्यते ।**
**शिवाभिधानं पूजान्ते पाद्ये चाचमनीयके ॥ १२ ॥**
**पशूपचारे पश्वर्घ्यः [14]प्रोक्षणादौ तनोश्च सः ।**

[1] B : वह्न्याश्रय pour वह्न्याश्रयाश्च [2] A et B : शिवीभूतस्त्वलंकृतः
[3] Ms. C omet ce demi-*śloka* ici et l'ajoute après ततश्च ; cf. note 8.
[4] B : परवद् pour परम [5] C : शिवीभावनाम् pour शिवभावनाम्
[6] C : सर्वदा pour सम्यग् [7] C : चिह्नम् pour चिह्नकम्
[8] C ajoute le demi-*śloka* nº 11b ici ; cf. note 3.
[9] C omet विधायार्घ्यत्रयमिति [10] B : शिवतत्त्वाभिव्याप्त्या
[11] B : विद्यातत्त्वान्तव्याप्त्या [12] B omet क्व
[13] C : रोधार्घं pour रोधार्घ्यं
[14] Le texte प्रोक्षणादौ à सर्ववित् et le commentaire पत्युरावाहनानन्तरं à शिवार्घ्यः manque en ms. C.

**प्रायश्चित्तं तु वैलोम्ये तन्त्रेऽस्मिन्प्राह सर्ववित् ॥ १३ ॥**

[**निरोधान्ते**] पत्युरावाहनानन्तरं रोधन्या मुद्रया निरोधं कृत्वा [**विसर्गे**] विसर्जनावसरे **च रोधार्घ्यो** देयः। [**पूजान्ते पाद्ये आचमनीयके**] पाद्याचमनपूजासमाप्तिषु [**शिवाभिधानं**] शिवार्घ्यः। [**पशूपचारे**] पशुकर्मसु वक्ष्यमाणवत् तत्तत्कर्मार्हतोत्पादनाय च [**तनोः प्रोक्षणादौ**] शरीरप्रोक्षणनिमित्तं [**पश्वर्घ्यः**] पश्वर्घ्योपयोगः। [**वैलोम्ये**] यथादिष्टविषयसांकर्ये तु[1] [**सर्ववित्**] परमेश्वरः **प्रायश्चित्तं** [**अस्मिन् तन्त्रे**] इह शास्त्रे [**प्राह**] अनुज्ञातवान् ॥ १२ - १३ ॥

शिवहस्तादिकरणायाह—

**कृत्वा शिवात्मकं हस्तं गव्यान्याहृत्य शोधयेत् ।**
**शिवाम्भसा [2]पृथक्स्थानि गोमूत्रादीन्यनुक्रमात् ॥ १४ ॥**

वक्ष्यमाणक्रमेण संहितान्तरोक्तवच[3] [**शिवात्मकं हस्तं**] शिवहस्तं **कृत्वा** । यथोक्तं **रुरुसंहितायाम्**—

"[4]सव्यं प्रक्षाल्य हस्तं तु कृत्वा गन्धाद्यलंकृतम् ।
न्यसेद्ब्रह्माणि शाखासु पञ्च पञ्चस्वनु[5]क्रमात् ॥
गन्धमण्डलकं कृत्वा वामाङ्गुष्ठेन मध्यतः ।
विन्यसेत्तत्र देवेशं विद्यादेहं[6] परं शिवम् ॥
पूजयेदर्घ्यपाद्यैस्तु गन्धधूपपवित्रकैः ।
ब्रह्मपञ्चकसंयुक्तः[7] शिवेनाधिष्ठितः स्वयम् ।
पाशच्छेदकरः क्षौमी[8] शिवहस्त इति स्मृतः ॥" इति ।

पश्चात् [**पृथक्स्थानि**] पृथक् पृथक् स्थितानि **गव्यानि** गोमूत्रगोमयादीनि **आहृत्य** [**अनुक्रमात्**] परिपाट्या [9]**शोधयेद्** इत्यर्घ्यपात्रस्थेन[10] **शिवाम्भसा** शुद्धिमापादयेत् ॥ १४ ॥

तानि तु—

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः[11] कुशोदकम् ।**

[1] B omet तु
[2] C : पृथक्स्थानं
[3] C : पत्र pour वच
[4] C : सव्यहस्तं तु प्रक्षाल्य
[5] B : अणु pour अनु
[6] C : विद्याराजं
[7] B : संयुक्त pour संयुक्तः
[8] C : क्षेमी
[9] C : सा साधयेत् pour शोधयेत्
[10] C : पात्रस्थानि pour पात्रस्थेन
[11] B : सर्पि pour सर्पिः

[1]सद्याद्यैः पृथगालभ्य शिवेनैकत्र योजयेत् ॥ १५ ॥
कुशोदकं च तेनैव [2]ततः संहितयालभेत् ।

[3]"गव्यपात्राण्यपीमानि स्युः" इत्यनेन प्रागुद्दिष्टेषु पृथक् पृथक् विन्यस्तानि **गोमूत्रादीनि** [**सद्याद्यैः पृथगालभ्य**] सद्योजातादिमन्त्रजप्तानि कृत्वा [**शिवेन**] मूलमन्त्रेण [**एकत्र योजयेद्**] एकीकुर्यात् । **तेनैव च कुशोदकं** दत्त्वा [**संहितया**] संहितामन्त्रैः[4] [**आलभेद्**] अभिजपेत् ॥

प्रोक्तक्रमेण शुद्धमृद्ग्रावपूरितायामपि भूमौ कथंचिदलक्षित[5]शल्यादिदोषनिरासाय कर्म[6]-कृताशुद्धिप्रशमनाय च शुद्ध्यन्तरमाह —

कुशेन शस्त्रजप्तेन भुवमुल्लिख्य पूरयेत् ॥ १६ ॥
[7]रत्नैः [8]शाक्तैः समीकृत्य तेनैव परिषेचयेत् ।

[**शस्त्रजप्तेन कुशेन**] अस्त्र[9]मन्त्रमन्त्रितदर्भेण [**भुवं**] क्ष्मां मनसैव **उल्लिख्य** [**शाक्तैः**] परस्याः शक्तेरुद्भूतैः [10]परतेजः[11]प्रसररूपै **रत्नैः पूरयेत्**। अधःस्थितपाषाणनिवहस्यानर्घ[12]रत्न[13]भावनां[14] कुर्यादिति यावत् । **समीकृत्य च तेनैव** अस्त्रमन्त्रेण [**परिषेचयेत्**] सिञ्चेत् ॥

[15]ततश्च-

दृढां [16]संमार्जितां लिप्तां गव्येन प्रोक्षयेत्पुनः ॥ १७ ॥
शिवाम्भसा च विकिरांस्ततोऽस्त्रेणैव मन्त्रयेत् ।
तानस्त्रकल्पान्स्फुरतो दैत्यांशे[17] भौभुगे[18] स्थितः ॥ १८ ॥
ऐशकोणे शिवप्रान्ते यागधामाध्वनि क्षिपेत् ।

[1] C : सद्यध्या pour सद्याद्यैः
[2] C omet le passage ततः संहितयालभेत् à एकीकुर्यात् । तेनैव
[3] *cf. paṭala* 6, *śloka* 55b
[4] C ajoute हि
[5] C : अलक्षितं pour अलक्षित
[6] B : कर्मकार pour कर्म
[7] B : रक्तैः pour रत्नैः
[8] C : भान्तैः pour शाक्तैः
[9] C omet मन्त्र
[10] C : परतः pour परतेजः
[11] B : प्रसृतरूपरक्तैः pour प्रसररूपै रत्नैः
[12] C : अनघ pour अनर्घ
[13] C : रक्त pour रत्न
[14] B : भावन pour भावनां
[15] C omet ततश्च
[16] A : संमार्जितालब्धां
[17] B : दैत्यांशो
[18] A : भौभुजे; C : भौतुक

[**दृढां**] [1]मृद्ग्रावैर्दृढीकृतां **संमार्जितां** [2]गन्धादिलिप्तां च कृत्वा [**गव्येन**] पञ्चगव्येन [**प्रोक्षयेद्**] अभ्युक्षयेत्। **पुनः** इत्यनन्तरं[3] **शिवाम्भसा**प्यस्याः प्रोक्षणं कुर्यात्। **ततः** पश्चाद् [**विकिरान्**] विकीर्यन्ते निर्विघ्नार्थमिति विकिराः सर्षपयवलाजाद्यास्तान्। [**अस्त्रेण**] अस्त्रमन्त्रेण **मन्त्रयेत्**। तांश्च विकिरान् [**अस्त्रकल्पान्**] अस्त्ररूपान् **स्फुरतो** दीप्यमानान्। **दैत्यांश** इति नैर्ऋते स्थाने। [**भौभुगे**] कालानलाधोवर्ति[4]भूभुगाख्यरुद्राश्रये **स्थितः** सन् [**यागधामाध्वनि ऐशकोणे शिवप्रान्ते**] यागगृहे नैर्ऋतादीशकोणान्तं यावद् [5]भूभुगादिशिवान्ताध्वकल्पना [6]या कृता तत्र विशिष्टेतिकर्तव्यता [7]निर्विघ्ना भवत्वित्येवमर्थं [8]**क्षिपेद्** विकिरेत्। यागधामन्यध्वकल्पना कुतो [9]लब्धा इति चेद् अत एव वचनात्। न परमित एव, [10]यावच्छ्रीमन्**मया**द्युक्तादपि। तथाहि—

" मण्डपं शांकरं धाम निवृत्त्यादिकलामुखम्।
[11]सादाशिवद्विजश्रेष्ठाः [12]पताकाशक्तिलक्षिताः॥ "

इति तत्रोक्तम्[13]।

[14]**ततस्तानीशतो**[15] **नीत्वा सद्वासोदर्भचामरैः ॥ १९ ॥**
**गन्धमण्डलकं कृत्वा दत्त्वासनमिहोदितम्।**
[16]**हेमादेरुद्भवं कुम्भं** [17]**निर्दुष्टं** [18]**मृण्मयादिकम् ॥ २० ॥**
[19]**वस्त्रपूतोदकापूर्णं** [20]**गन्धालब्धं सबीजकम्।**
**सर्वरत्नौषधीलोहरसगन्धकुशोदरम्**[21] **॥ २१ ॥**
**अशोकाश्वत्थचूतादिपल्लवालंकृताननम्।**

1 B omet मृद्ग्रावैर्दृढीकृतां; C : मा वै दृढीकृतां
2 C : गन्धलिप्तां
3 B : अनुत्तरं pour अनन्तरं; C : अन्तरं
4 C : भुवाख्यं pour भूभुगाख्य
5 C : बहुकादिक pour भूभुगादि
6 B omet या
7 C : निर्विघ्नता
8 B et C : निक्षिपेद् pour क्षिपेद्
9 B : लब्ध्वा
10 C omet यावत्
11 C : स pour सा
12 C : पतगा pour पताका
13 C : तत्रोक्तः
14 A omet ce demi-*śloka*
15 D : असतो pour ईशतो
16 A et D : हेमादिरचितं; C : हैमादेरुद्भवं
17 A : अदुष्टं; D : अदुष्ट
18 B : मृन्मयान्तिकम्
19 C : वस्त्रपूतमहापूर्णं ; D : शस्त्र pour वस्त्र
20 A : गन्धालब्धसबीजकम्
21 A : कुशोदकम्




Śivakumbha et Vardhanī

1. Lambakūrca
2. Antaḥkūrca
3. Phala
4. Patra
5. Īśānādimukhasūtra
6. Kumbhasūtra
7. Vastra
8. Dhānya

संताड्यावृत्य मन्त्रेण शतालब्धं न्यसेद्गुरुः ॥ २२ ॥
[1]मूर्तिभूतं विनिष्पाद्य शिवमावाहयेत्परम् ।
कृत्वाङ्गिनं यजेत्प्राग्वत्स्रग्गन्धबलिभिर्वरैः ॥ २३ ॥

**ततः** [2]अनन्तरं **तान्** विकिरान् [**ईशतः**] ऐशान्यां दिशि [**सद्वासो-दर्भ-चामरैः**] श्रेष्ठेनांशुकेन चामरेण दर्भैर्वा **नीत्वा** आहृत्य तदुपान्ते गन्धमण्डलकपृष्ठे अनन्ताधारशक्त्यादि[3] **आसनं दत्त्वा** [**हेमादेरुद्भवं**] सौवर्णरौप्यताम्रपार्थिवेभ्योऽन्यतमं [**निर्दुष्टं**] निर्दोषं [**कुम्भं**] कलशं [**वस्त्रपूतोदकापूर्णं**] [4]परिधौताम्बुना पूरितं [**गन्धालब्धं**] कुङ्कुमचन्दनादिचिह्नितं[5] **सबीजकं** [**सर्वरत्नौषधीलोहरसगन्धकुशोदरं**] यवादिबीज-हेमादिलोह-हीरकादिरत्न-कर्पूरादिगन्ध-सर्वौषधी-पारद-फल-दर्भगर्भं [**मन्त्रेण**] मूलमन्त्रेण [**शतालब्धं**] शताभिजप्तं **गुरुर्न्यसेद्** इति संबन्धः । ईशत [6]इति "आद्यादिभ्य उपसंख्यानम्"[7] इति [8]तसिः । अशोकाश्वत्थचूतादीत्यादिग्रहणात् शमी[9]दाडिम्यादिग्रहणम् । **संताड्यावृत्य** इति । ताडनमन्त्रेण प्रावरणं कवचेनेत्यर्थादवगन्तव्यम् । [10]तमेवंविधमूर्तिं [**मूर्तिभूतं विनिष्पाद्य**] मूर्तित्वेन भगवन्तं कलशम् अभ्यर्च्य तत्र [**शिवं**] परमेश्वरम् **आवाहयेत्** । [**अङ्गिनं**] हृदाद्यङ्गयुक्तं[11] **कृत्वा** [**प्राग्वद्**] यागप्रकरणोक्तवद् [**वरैः**] शुभैः [**स्रग्गन्धबलिभिः**] । स्रगादिभिः **यजेद्** अभ्यर्चयेत् ॥ १९ - २३ ॥

[12]अस्त्रकलशपूजार्थमाह—

तद्दक्षिणे महेशास्त्रं प्रणवे कमलासने ।
कर्तर्यधिकृतं तद्वद्यजेद्[13]दुष्टौघवारकम्[14] ॥ २४ ॥
करालं भीमनिर्ह्रादं कल्पान्ततपनोपमम् ।

शिवकुम्भस्य प्रत्यङ्मुखत्वेन स्थितत्वात् [**तद्दक्षिणे**] तस्य दक्षिणे [**प्रणवे कमलासने**] प्रणवात्मकपद्मासनस्थं **कर्तर्यधिकृतं** वर्धन्याश्रयं [**महेशास्त्रं**] शिवास्त्रं [**तद्वत्**] शिवकलशवत्[15] [**यजेत्**]

[1] En ms. C le *śloka* 23 se trouve après तमेवंविधं ; cf. note 10

[2] B omet अनन्तरं

[3] C omet आदि

[4] C : परिस्नुताम्बुपूरितं

[5] B : चर्चितं pour चिह्नितं

[6] B : इत्यादिभ्यस्तस्योपसंख्यानमिति तसिल्

[7] cf. *Vārttika*, *Pāṇinisūtra*, 5, 4, 44

[8] C omet तसिः et ajoute तण्डुलदर्भगर्भम् ।

[9] C : दाडिमादि pour दाडिम्यादि

[10] C : तमेवंविधं ; en ms. C le *śloka* 23 se trouve ici ; cf. plus haut note 1

[11] C ajoute च

[12] B : तत्र कलशपूजार्थदेशमाह

[13] D : दृष्ट pour दुष्ट

[14] C : वारणम् pour वारकम्

[15] C omet वत्

स्रगादिभिरभ्यर्चयेत्[1] । कीदृशम्—**दुष्टौघवारकं** शिवाध्वरविध्वंसिविघ्नसमूहप्रशमनं [**करालं**] घोराकारं [**भीमनिर्ह्रादं**] भीषणनिनादं [**कल्पान्ततपनोपमं**] [2]कल्पान्तादित्यतीव्रं च ॥

द्वयं चैतत्—

**प्रावृत्य सितवस्त्राभ्यां संधाय प्रार्थयेद्वरम्**[3] ॥ २५ ॥

शिवकुम्भमस्त्रकर्नरी[4]सहितं [**सितवस्त्राभ्यां प्रावृत्य**] सुसितपट्टांशुकप्रावृतं कृत्वा **संधाय** इति परमेश्वररूपतामस्याभि[5]संधाय **वरं**[6] [**प्रार्थयेद्**] अभ्यर्थयेत् ॥ २५ ॥

किं तदित्याह—

[7]**परिगृहाण भगवन्कर्मभूमिमिमां शुभाम् ।**
**सर्वाङ्गेषु च सांनिध्यमामखान्तं भजस्व मे ॥ २६ ॥**

[**भगवन्**] हे प्रभो **इमां** [**शुभां**] रम्यां **कर्मभूमिम्** इति यागभुवं[8] **परिगृहाण** अध्यास्व । सर्वत्र सर्वदा संनिहितोऽपि विशेषेणात्र [**मे**] [9]मदनुग्रहाय [**आमखान्तं**] यागसमाप्तिं यावत् [**सर्वाङ्गेषु**] सर्वेषु यागाङ्गेषु [**सांनिध्यं भजस्व**] सांनिध्यं कुरु इति[10] ॥ २६ ॥

एवं च कृते सति—

**लब्धानुज्ञोऽस्त्रमन्त्रेण भित्त्यसक्तां प्रदक्षिणम् ।**
**भ्रामयेद्वर्धनीधारामस्त्रदुर्गमनुस्मरन् ॥ २७ ॥**
**कुम्भं तदनुगं यावत्पुनः स्वस्थानमागतम् ।**

[11][**लब्धानुज्ञः**] प्राप्तानुज्ञो **भित्त्यसक्ताम्** अस्त्रवर्धनीधाराम् [**अस्त्रमन्त्रेण**] अस्त्रेण **अस्त्रदुर्गम्** [**अनुस्मरन्**] स्मरन् **प्रदक्षिणं भ्रामयेत्** । [**तदनुगं**] तामस्त्रवर्धनीमनुगच्छतीति तदनुगतं **कुम्भं** च भ्रामयेत् । **पुनः स्वस्थानम्** इति, ईशानकोणं **यावद्** [**आगतं**] प्राप्तम ॥

[1] C : अर्चयेत् pour अभ्यर्चयेत्
[2] C : कल्पान्तक pour कल्पान्त
[3] En C le *śloka* 26 se trouve après वरम्
[4] C : कर्मकर्रा pour कर्नरी
[5] B : अपि pour अभि
[6] B : परं pour वरं
[7] cf. note 3
[8] B : गृहं pour भुवं
[9] C : सद् pour मद्
[10] कुर्वन्ति pour कुरु इति
[11] Le commentaire des *śloka* 27 et 28a manque en ms. B.

द्वयमप्येतदभ्यर्च्य [1]पुनर्वैशेषिकैर्धनैः ॥ २८ ॥
ततः संधाय दिङ्नाथानिन्द्रादीनभिपूज्य च ।

**वैशेषिकैर्धनै**रिति भक्त्युपहृतैरुक्तग्रालंकरणांशुकनैवेद्यादिभिः । **संधाय** इत्यात्मना सह नाडीसंधानं परमीकरणं च कृत्वा [**दिङ्नाथान् इन्द्रादीन्**] इन्द्रादिदिक्पतीन् [**अभिपूज्य**] अभ्यर्च्य परमेश्वराज्ञयात्र[2] भवद्भिरवहितैर्भवितव्यमित्यनेनानुज्ञापयेत्[3] ॥

ततः किं कुर्यादित्याह—

कस्थाने पञ्चगव्यादिमण्डले [4]शंकरं यजेत् ॥ २९ ॥
[5]पूर्वोक्तेन विधानेन यथाविभवमात्मवान् ।

[**कस्थाने**] ब्रह्मस्थाने [**पञ्चगव्यादिमण्डले**] पञ्चगव्यरोचना[6]कुङ्कुमचन्दनादिमण्डले [**पूर्वोक्तेन विधानेन**] प्राग्वद् [**यथाविभवं**] विभवानुसारेण **आत्मवान्** इत्यात्मयुक्तस्वरूपविश्रान्तः[7] [**शंकरं**] भगवन्तं [**यजेद्**] अर्चयेत् ॥

ततश्च—

प्रणतः समनुज्ञातो दिक्पतिभ्यो बलिं हरेत ॥ ३० ॥
तद्वास्तुदेवताभ्यश्च [8]ग्रहेभ्यश्च विधानतः ।
सेश्वरेभ्यश्च भूतेभ्यो मातृभ्यः स्वपदाणुभिः ॥ ३१ ॥
रुद्रेभ्योऽनेन मन्त्रेण धूपगन्धस्रगादिभिः ।

[**प्रणतः**] प्रणम्य [**समनुज्ञातः**] [9]दिक्पतिवास्तुग्रहादिबलिदानानुज्ञां [10]परमेश्वरादभ्यर्थ्य सर्वेभ्य एभ्यः स्वनामभिश्चतुर्थ्यन्तैः **बलिम्** [**हरेद्**] उपहरेत्[11] । **सेश्वरेभ्य** इति भूतेश्वरसहितेभ्यः । **अनेन मन्त्रेण** इति वक्ष्यमाणेन ॥

तमेवाह—

[11]स्कन्दोऽर्यमा जृम्भकश्च [12]बलिपिञ्छो ग्रहोत्तमाः ॥ ३२ ॥

[1] C : पुष्पैः pour पुनः
[2] C : कुम्भे pour अत्र
[3] C omet अनु dans अनुज्ञापयेत्
[4] B : शांकरं
[5] B : पूर्वोक्तविधिनानेन
[6] B : रोचन pour रोचना
[7] C : विश्रान्ततः pour विश्रान्तः
[8] D omet ग्रहेभ्यश्च
[9] C : दिक्पतीश pour दिक्पति
[10] B : परमेश्वरमभ्यर्च्य
[11] En mss. B et C on trouve le demi-*śloka* 32b après उपहरेत्
[12] C : विविबिञ्छो ; A et D : बलिपिञ्छे

ये रुद्रा [1]रौद्रकर्माणो रुद्रस्थाननिवासिनः ।
सौम्याश्चैव तु ये केचित्सौम्यस्थाननिवासिनः ॥ ३३ ॥

मातरो रुद्ररूपाश्च गणानामधिपाश्च ये ।
[2]विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिताः ॥ ३४ ॥

सर्वे सुप्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ।
सिद्धिं जुषन्तु नः क्षिप्रं भयेभ्यः पान्तु नित्यशः ॥ ३५ ॥

स्पष्टम् ॥ ३२ - ३५ ।

ततः स्नातः समाचम्य [3]धाम्न्युत्पाद्य [4]शिवानलम् ।
पचेच्चरुं सदाशास्थश्चुल्ल्यां वा तेन वह्निना ॥ ३६ ॥

[ततः] बलिदानानन्तरं **स्नातः** [**समाचम्य**] समाचान्तो वा [**धाम्नि**] कुण्डे [**शिवानलं** शिवाग्निम् **उत्पाद्य** इति प्रागुक्तवदुद्धृत्य तमुद्वीज्य [**सदाशास्थः**] पूर्वपश्चिमोत्तरे[5]शानादिदिक्स्थः **ते**[**न**] [**वह्निना**] अग्निना **चरुं पचेत्** । उक्तं हि प्राक्[6]—

" इत्युक्तकृतसंस्कारं पृथक्कुण्डे हुताशनम् ।
चर्वादिसिद्धये विद्वान्विदध्याद्धर्मरक्षितम् ॥ " इति ।

चरुपचनार्थस्य कुण्डान्तरस्याभावे वक्ष्यमाणवत् कुण्डान्तरसंस्कारसंस्कृतायां **चुल्ल्यां वा** पचेत् । ३६ ॥

कथमित्याह—

दृढामकुत्सितां स्थालीमस्त्रशुद्धां घनावृताम् ।
सूत्रेण [7]वर्मपूतेन [8]त्रिरानद्धगलां स्थिताम् ॥ ३७ ॥

गोशकृन्मण्डले शस्त्रकुशोपहितविष्टरे ।

[1] A : रुद्रकर्माणो
[2] Ce demi-*śloka* manque en C
[3] A, B et D : समुत्पाद्य pour धाम्न्युत्पाद्य
[4] D : शिवानलम्
[5] B : ईशानदिक्स्थितेन pour ईशानादिदिक्स्थः तेन
[6] cf. *Kriyāpāda*, *paṭala* 6, *śloka* 25b-26a
[7] A, B, C et D : वर्मभूतेन
[8] A : त्रिरानद्धगलस्थिताम् ; B : त्रिधानद्धमलां स्थिताम्

कुण्डोक्त[1]शुद्धियोगिन्यां चुल्ल्यामारोप्य [2]गोपयः ॥ ३८ ॥
प्रोक्षितं ताडितं गुप्तं शतालब्धं सतण्डुलम् ।
तस्यामाधाय[3] [4]दीप्त्वाग्निं विपचेच्छिवमुच्चरन् ॥ ३९ ॥
[5]चालयेदस्त्रमन्त्रेण लोचनेन विलोकयेत् ।
हृदा विघट्टयेत्स्विन्नं[6] प्रणवेनावतारयेत् ॥ ४० ॥

[**दृढाम्**] [7]अभङ्गुराम् [**अकुत्सितां**] मनोज्ञां **स्थालीम्** [**अस्त्रशुद्धाम्**] [8]अस्त्रेण शोधितां [**घनावृतां**] कवचावकुण्ठितां [**वर्मपूतेन**] तन्मन्त्रितेन **सूत्रेण** [**त्रिरानद्धगलां**] [9]त्रिर्वेष्टितकण्ठां [**गोशकृन्मण्डले**] गोमयमण्डले[10] [**शस्त्रकुशोपहितविष्टरे**] [11]अस्त्राभिमन्त्रितकुशग्रथितविष्टरस्थां कृत्वा [**कुण्डोक्तशुद्धियोगिन्यां**] कुण्डवत् संस्कृतायां **चुल्ल्याम्** [**आरोप्य**] निधाय[12] अस्त्रेण [**प्रोक्षितं ताडितं**] ताडिताभ्युक्षितं [**गुप्तं**] [13]कवचावकुण्ठितं [**शतालब्धं** शतवारं मूलमन्त्राभिमन्त्रणेन गृहीतं] **सतण्डुलं** [**गोपयः**] गोक्षीरं तस्याम् [**आधाय**] निक्षिप्य **अग्निं** [**दीप्त्वा**] प्रदीप्य [**शिवं**] शिवमन्त्रम् [**उच्चरन्**] जपन् [**विपचेत्**] पचेत् । [14]पच्यमानं[15] च **चालयेद्** इति, **अस्त्रमन्त्रेण**] अस्त्रमन्त्रं जपन् दर्व्यादिना **चालयेत्** [16]परिवर्तयेत् । [**लोचनेन**] नेत्रमन्त्रेण पुनः [17]पुनः [**विलोकयेत्**] [18]निरीक्षयेत् । [**हृदा**] हृन्मन्त्रेण **विघट्टयेद्** निदध्यात् । **स्विन्नं** च [**प्रणवेन**] ओंकारेण [**अवतारयेत्**] अवरोपयेत् ॥ ३७-४० ॥

किं तु संहितयाघारं[19] स्रुवेणावतरिष्यतः ।
मण्डले विष्टरस्थस्य प्रलिप्तस्यापरः क्षितौ ॥ ४१ ॥

[1] A : शुद्ध pour शुद्धि
[2] C : गोमयः
[3] B : आदाय pour आधाय
[4] B : दीप्ताग्निं ; C : दीप्त्वाग्निं
[5] En ms. C, ce *śloka* se trouve après पच्यमानं च ; cf. note 15.
[6] B : खिन्नं pour स्विन्नं
[7] B : अभङ्कुरां
[8] C : अस्त्रशोधितां
[9] B : त्रिवेष्टितकण्ठां
[10] C : जले pour मण्डले
[11] C : अस्त्रमभिमन्त्रित
[12] B : नीय pour निधाय
[13] C : कवचेनावकुण्ठितं
[14] C : पच्यमानं च
[15] Le *śloka* 40 se trouve après पच्यमानं च en ms. C ; cf. plus haut note 5.
[16] C omet परिवर्तयेत्
[17] C omet पुनः
[18] B omet निर्
[19] B : आधारं pour आघारं ; C : आधार

**अग्नीषोमात्मकावेतावाघारौ [1]विहितौ चरोः ।**
**अमृतत्वाप्तये तत्स्यादग्नीषोमात्मकं[2] यतः ॥ ४२ ॥**

**किं त्विति** । एतावान्विशेषः । [**यतः**] यद् **अवतरिष्यत**स्तस्य **संहितया** आज्यं **स्रुवेण**[3] [**आघारं**] तप्ताभिघारं कृत्वावरोपणं कार्यम् । ततस्तु [**क्षितौ**] भूमौ [**मण्डले**] गोमयमण्डले **विष्टर-स्थस्य** [**प्रलिप्तस्य**] कृतविलेपनस्य[4] **अपर**[5] इति शीताभिघारः संहितयैव । [6]**एतौ** [7]उभौ [**आघारौ**] तप्ताभिघारशीताभिघारौ न्यूनपाकतामधिकपाकत्वं च विहन्तुम् **अग्नीषोमात्मकौ** [**चरोः**] **विहितौ** [8]चरु-संस्कारावाम्नातौ । ततः **तद् अग्नीषोमात्मकं** हविः **अमृतत्वाप्तये स्यात्** । [9]तथा च **श्रुतिः**[10]—

" [11]यो हविर्वै तद्धविरग्नीषोमीयम् अग्नीषोमाभ्यां जुहोति । [12]तस्यैवेदममृतीभवति " इति ॥ ४१ - ४२ ॥

चरोः संपातहोममुपदिशन् प्रसङ्गाद्द्रव्यान्तराणामपि [13]तथैवोपदेष्टुमाह—

**अग्निकार्योक्तविधिना तर्पणे विहिते सति ।**
**मन्त्राणां मन्त्रसंपातः कार्यः संहितयैव तु[14] ॥ ४३ ॥**

चरुश्रपणानन्तरम् [**अग्निकार्योक्तविधिना**] प्रागुक्ताग्निकार्यक्रमेण **मन्त्राणां तर्पणे** [**विहिते**] **कृते सति संहितया** शिवैकादशिन्या चरुलक्षणेऽर्थे [**मन्त्रसंपातः**] संपातहोमस्तद्विधिज्ञेन **कार्यः** ॥४३॥

अथ कीदृश इत्याह[15]—

**[16]स्वेत्यग्नौ जुहुयादर्धे हेति धुन्वन्स्रुवाननम् ।**
**संपातसिद्धये विद्वान्यत्र मन्त्रान्ततः श्रुतिः ॥ ४४ ॥**
**घटिकाशङ्कुसूत्राणां कर्तरीरजसां तथा ।**
**कार्यस्तथैव संपातस्तिलव्रीह्यादिकस्य च ॥ ४५ ॥**

[1] A : विहिते ; D omet les mots विहितौ चरोः, et les *śloka* 42b, et 43.
[2] C : अग्निषोमात्मकौ
[3] C : आज्यस्रवेण pour आज्यं स्रुवेण
[4] C : कृतविलिप्तस्य
[5] B : पर pour अपर
[6] B omet एतौ
[7] C omet उभौ
[8] B : चरुसंस्कारौ विहितावाम्नातौ ; C : चरुसंस्कारेण विहितावाम्नातौ
[9] C omet तथा च श्रुतिः
[10] *Ṛgveda, khila sūkta*
[11] C : यो ह वै तद्धविरग्नीषोमीयम्
[12] C : तस्यैवेदं प्रति
[13] C : तथैवादेष्टुमाह
[14] Le *śloka* 44 se trouve ici en C ; cf. note 16.
[15] C ajoute स्वेत्यग्नावित्यादि
[16] En C ce *śloka* se trouve après तु ; cf. plus haut note 14.

यत्र च द्रव्ये [संपातसिद्धये] संपातहोमश्चिकीर्षितस्तत्रादौ [मन्त्रान्] [1]ओंकारसंहिता-न्मन्त्रान्[2] तद्द्रव्यनाम चोक्त्वा [ततः श्रुतिः] संपातहोमेन संस्करोमीति वदन् आज्यं स्रुवेण अग्नौ स्वेति जुहुयात्। अर्धे [3]तु [स्रुगाननं] तत्स्रुववक्त्रं [हेति] [4]हाकारमुच्चरन् कम्पयेत्। [तथैव] अनेनैव [5]च क्रमेण घटिकादीनां तिलव्रीह्यादिहोमद्रव्याणां च संपातहोमः [6]कार्यः। घटिका [7]मण्डपाद्यु-पयोगिनी। शङ्कवः तत्सूत्राभिज्ञापकाः। सूत्रं [8]करण्याख्यम्। कर्तरी पाशसूत्रनिकृन्तनी। रजांसि [9]रक्तादीनि वक्ष्यमाणानि। एकस्तथाशब्दः[10] समुच्चये। तथैवेति[11] [12]द्वितीयोऽनिदेशार्थः॥ ४५॥

तदनन्तरम्--

पूर्णां दत्त्वा समुत्थाय सिद्धोऽयमिति शंभवे।
निवेदितः पुरस्तस्मान्निधेयं[13] चरुरीशतः[14]॥ ४६॥
रजःसूत्रादिकं यच्च द्रव्यं संपातसंस्कृतम्।

चरुसंस्कारद्रव्यसंस्कारसंपत्तये [पूर्णां] पूर्णाहुतिं[15] [16]स्फुरत्तारारुचं दत्त्वा [समुत्थाय] उत्थाय [17]सिद्धोऽयं चरुः इति [निवेदितः] भगवतः पुरस्तमुपानीय [18]तस्मात्स्थानात् ईशत ऐशान्यां दिशि [19]शिवकलशस्थाय शंभवे तथैवावेद्य यच्च[20] [रजःसूत्रादिकं] तद्रजःकर्तरी[21]करण्यादिकं [द्रव्यं] संपातसंस्कृतं[22] तदपि तत्रैव [निधेयं] निदध्यात्॥

ततः स्थालीगतं त्रेधा [23]दर्भेण विभजेच्चरुम्॥ ४७॥
[24]तदेकं भागमाधाय पात्रे संपूजितं हृदा।
शंभवे स्थण्डिलस्थाय दद्यात्कुम्भस्थिताय च॥ ४८॥

[1] B : आकार pour ओंकार
[2] C : संहितात्ममन्त्रान्
[3] B omet तु
[4] C : हु pour हा
[5] C omet च
[6] B omet कार्यः
[7] C : मण्डल pour मण्डप
[8] C : करणाख्यम्
[9] C : सितरक्तानि pour रक्तादीनि
[10] B : तदाशब्द pour तथाशब्दः; C : शङ्ख pour शब्द
[11] C ajoute तु
[12] C : द्वितीयो निदेशार्थः
[13] A : निधेयः pour निधेयं
[14] C : ईशितः pour ईशतः
[15] C ajoute प्रविश्य
[16] B omet स्फुरत्तारारुचं
[17] C omet सिद्धोऽयं
[18] C : तस्मात्स्थानादिगत एव होमशान्त्यादिशिवकलशस्थाय
[19] B omet शिव
[20] C ajoute तथैव
[21] C : करणी pour करण्ड
[22] C ajoute चरुसंस्कारद्रव्यसंपातसंपत्तये
[23] C : गर्भेण
[24] A : तदेकं भागमादाय ; B : तदेकभागमाधाय

कर्तरीस्थाय चास्त्राय [1]भागं चित्रावसौ परम् ।
स्रुवेण जुहुयाद्विद्वान् शिवायाणुमते मनाक् ॥ ४९ ॥
[2]हुतशेषं पुनः स्थाल्यां निधायाघट्टयेद्धृदा ।
तं वक्ष्यमाणविधिना शिष्यशेषं भजेद्गुरुः ॥ ५० ॥

**तत** इति[3], तस्मादीशानकोणात् । यद्वा **ततः** अनन्तरं **स्थालीस्थितं चरुम्** इति हविः **दर्भेण त्रेधा** विभज्य [**तदेकं भागं**] [4]तदीयमेकं भागं [**पात्रे**] पात्रेषु [**आधाय**] निधाय [**हृदा संपूजितं**] हृन्मन्त्राभिपूजितं [**स्थण्डिलस्थाय**] [5]स्थण्डिलार्चिताय [**कुम्भस्थिताय**] [6]कलशस्थिताय [**शंभवे**] भगवते [**कर्तरीस्थाय**] कर्तर्यवस्थिताय **च अस्त्राय** निवेदयेत् । **परम्** इति द्वितीयं भागं **चित्रावसौ** वह्नौ स्थिताय । **अणुमत** इति हृदादिपरिवारयुक्ताय **शिवाय विद्वान् मनाक् स्रुवेण जुहुयात्** । " [7]प्रसृतिः पायसस्य च " इति यदन्यत्रोक्तं तन्निषेधाय मनाग्ग्रहणम्[8] । [9]**हुतशेषम्** इति [10]हविषः शेषम् अत्यन्त-पावनत्वात् [**स्थाल्यां**] स्थालीगततृतीयभागमध्ये [**निधाय**] निक्षिप्य [**हृदा**] हृन्मन्त्रेण [**आघट्टयेत्**] पिदध्यात् । [11]**तं** च [**वक्ष्यमाणविधिना**] अभिधास्यमानक्रमेण [**शिष्यशेषं**] शिष्योपयुक्तशिष्टं [12]**गुरुः** [**भजेत्**] प्राश्नीयात् ॥ ४७ - ५० ॥

ततो विघ्नौघशान्त्यर्थं कर्मच्छिद्रनिवृत्तये ।
द्वे शते बहुरूपेण जुहुयादसिनापि वा ॥ ५१ ॥
पूर्णां दत्त्वा महेशानानुज्ञातः परमाचरेत् ।
कर्म यच्छिष्यविषयं समासात्तु निगद्यते ॥ ५२ ॥

[**ततः**] [13]पश्चाद् [**विघ्नौघशान्त्यर्थं**] [14]विघ्ननिरासार्थं [**कर्मच्छिद्रनिवृत्तये**] क्रियाच्छिद्रोपशामाय च [**बहुरूपेण**] अघोरेण [**असिना**] अस्त्रेण **वा** [**द्वे शते**] शतद्वयं हुत्वा [**पूर्णां दत्त्वा**] पूर्णाहुतिं

[1] A : भागं च द्वितयं परम्
[2] En ms. C le *śloka* 50 se trouve après मनाग् ग्रहणम् ; cf. note 8.
[3] B omet तत इति
[4] C : तदीयमेकभागं
[5] B : स्थण्डिलार्चितकलशस्थाय
[6] B omet कलशस्थिताय
[7] cf. *Kiraṇāgama*, II, 4, 46.
[8] En ms. C le *śloka* 50 se trouve ici ; cf. plus haut note 2.
[9] C omet हुतशेषमिति
[10] C : हविःशेषम्
[11] B : तच्च pour तं च
[12] C : गुरुं
[13] B : पश्चामिविघ्ननिरासार्थं
[14] C : निर्विघ्नार्थं

हुत्वा [महेशानानुज्ञातः] पत्युराज्ञामभ्यर्थ्य [1]लब्ध्वा [2]चैनामनुमोद्य[3] शिष्यविषयं यत् [परम्] उत्तरं कर्म [आचरेद्] [4]अनुतिष्ठेत तत् [समासतः] संक्षेपात् [निगद्यते] कथ्यते ॥ ५१ - ५२ ॥

गोशकृन्मण्डले [5]न्यस्तदर्भके प्रणवासनम् ।
[6]विधायारोपयेच्छिष्यं [7]स्तब्धदेहमुदङ्मुखम् ॥ ५३ ॥
[8]समपादशिरोग्रीवनयनं विहिताञ्जलिम् ।
प्रोक्षयेच्छंकरास्त्रेण प्राङ्मुखो देशिकोत्तमः ॥ ५४ ॥

[गोशकृन्मण्डले] गोमयलिप्ते मण्डले [न्यस्तदर्भके] दर्भेषु [प्रणवासनं विधाय] [9]प्रणवमासनत्वेनोपकल्प्य [10]उत्थितम् [उदङ्मुखम्] [11]उत्तराभिमुखं [समपादशिरोग्रीवं] [12]समपादशिरः-[13]कण्ठनेत्रं [विहिताञ्जलिं] बद्धाञ्जलिं शिष्यं [देशिकोत्तमः] [14]गुरुः प्राङ्मुखः[15] [16]पूर्वाभिमुखः [शंकरास्त्रेण] शिवास्त्रेण [प्रोक्षयेद्] अभ्युक्षयेत् ॥ ५३ - ५४ ॥

किं च—

भस्मव्यक्तेन तेनैव स्फुरद्वह्नि[17]कणत्विषा ।
शैथिल्यहेतोः पाशानां सशब्दं मूर्ध्नि ताडयेत् ॥ ५५ ॥

[भस्मव्यक्तेन] भस्मन्यभिव्यक्तेन [18]कृतसंनिधिना [स्फुरद्वह्निकणत्विषा] [19]उद्दीप्यमानाग्निस्फुलिङ्गरुचा[20] तेनैव शिवास्त्रमन्त्रेण [पाशानां शैथिल्यहेतोः] पाशशैथिल्यार्थं [मूर्ध्नि] शिरसि [सशब्दं] [21]सस्वरं [ताडयेद्] हन्यात् ॥ ५५ ॥

अपि च—

[22]शस्त्रजप्तेन दर्भेण नाभ्यधस्तात्त्रिरुल्लिखेत् ।

[1] C : लब्धालब्धां pour लब्ध्वा
[2] C : चेनाम् pour चैनाम्
[3] B : अनुमतोद्यत pour अनुमोद्य
[4] B : अनुष्ठेयं pour अनुतिष्ठेत
[5] A : न्यस्य दर्भके
[6] A : विधाय रोपयेच्छिष्यं
[7] D : तत्स्थ pour स्तब्ध
[8] A : संपादित pour समपाद
[9] C : प्रणवं मानसत्वेनोपकल्प्य
[10] C : अर्थितम्
[11] B : उत्तराभिमुखसम . . .
[12] C : संपाद pour समपाद
[13] C : कर्ण pour कण्ठ
[14] C : गुरुमुख्यं pour गुरुः
[15] C omet प्राङ्मुखः
[16] C : गुर्वाभिमुखः
[17] A : सम pour कण
[18] C : कृतसंनिधानादेः
[19] C : दीप्यमान pour उद्दीप्यमान
[20] C : रुचिना pour रुचा
[21] C omet स
[22] C : अस्त्र pour शस्त्र

त्रिरूर्ध्वं भौतिकं पूर्वमुत्तरेऽङ्गेऽधरे परम् ॥ ५६ ॥

[**शस्त्रजप्तेन दर्भेण**] अस्त्राभिजप्तदर्भपुञ्जेन [**नाभ्यधस्ताद्**] नाभेरध[1] **ऊर्ध्वं च त्रिः** [2]त्रींस्त्रीन्वारान् [**उल्लिखेत्**] तस्योल्लेखनं कुर्यात्। अत्रैव भुक्ति मुक्त्यर्थिनोर्विशेषमाह-**भौतिकं पूर्वमुत्तरेऽङ्ग**[3] इति। [4]भुक्त्यर्थिनम् उत्तरेऽङ्गे नाभ्यूर्ध्वभागे प्रथममुल्लिखेत् । ततस्तु नाभेरधः। **परं** तु मुमुक्षुम् **अधरेऽङ्गे** नाभ्यधोभागे पूर्वं [5]पश्चान्नाभ्यूर्ध्वे। भुक्तिकामं सृष्टिक्रमेण मुक्त्यर्थिनं तु संहारमार्गेण स्पृशेदित्यर्थः ॥ ५६ ॥

न्यस्य[6] सामान्यतो मन्त्रान्नेत्रेणाच्छाद्य लोचने ।
सितेनानुपयुक्तेन [7]सदशेनापरेण च ॥ ५७ ॥
ततो [8]यवनिकां भित्त्वा [9]गृह्य पाणौ विशेद्गुरुः ।
धाम धामपतेर्मन्त्रमन्त्रेश्वरकृतालयम् ॥ ५८ ॥

**सामान्यतः** साधारणाद् [**मन्त्रान्**] प्रासादबहुरूपादेः कल्पितान् हृदयादिवाचकान् मन्त्रान् हृदयादिषु **न्यस्य** न तु [10]शिष्यसाधारणार्थतया अभिधास्यमानात्। **नेत्रेण** इति, नेत्रमन्त्राभिमन्त्रितस्य वाससः उपचाराद् नेत्रशब्दप्रयोगो ज्ञेयः। नेत्रपटेनेति यावत्। अन्यथा विशेष्यानुपादानाद् [11]विशेषणानि निराश्रयाणि स्युः। तथाविधेन [**सितेन**] शुक्लेन [**अनुपयुक्तेन**] नवेन [**सदशेन**] [12]साञ्चलेन वाससा **अपरेण** इति सौभाग्याद्यर्थिनां रक्तपीतादिवर्णेन [**लोचने**] [13]दृशौ [**आच्छाद्य**] [14]पिधाय **यवनिकां** परिष्करणार्थं [15]दत्तां [**भित्त्वा**] अपाकृत्य [**पाणौ गृह्य**] गृहीतहस्तं शिष्यं [**मन्त्रमन्त्रेश्वरकृतालयं**] मन्त्रमन्त्रेश्वरकृतास्पदं [**धामपतेः**] तेजसां पत्युः **धाम** स्थानं यागगृहं [**विशेत**] प्रविशेत् ॥ ५८ ॥

[16]ततश्च-

कृत्वाभिमुखमाधाय कुसुमान्यञ्जलौ पुरः ।
त्याजयेत्सप्रणामानि[17] श्रद्धावान् श्रद्धया युतः ॥ ५९ ॥

[1] C omet अधः
[2] C : त्रीन pour त्रींस्त्रीन
[3] B : पूर्वमुत्तरेऽङ्गेऽधरं परम् ; C : पूर्वमुत्तराङ्ग इति
[4] C : भुक्त्यर्थमुत्तराङ्गेनाभ्यूर्ध्वभागे
[5] C : पश्चात्तु नाभ्यूर्ध्वे
[6] C ajoute न
[7] A : सदेशेन pour सदशेन
[8] C : यवन्तिकां
[9] C : गृह्यमाणं pour गृह्य पाणौ
[10] C : शिष्यस्य माध्यतया
[11] C : विशेषणनिराश्रयाणि
[12] B : साञ्चलेन
[13] C omet दृशौ
[14] C : विधाय
[15] B : दत्तं pour दत्तां
[16] C : तत्र च
[17] B : सप्रमाणानि

[अभिमुखं] परमेश्वरसंमुखं [1]तं कृत्वा [श्रद्धया युतः सप्रणामानि कुसुमानि अञ्जलौ आधाय] प्रणमय्य सश्रद्धं कुसुमाञ्जलिं [श्रद्धावान्] श्रद्धालुः [त्याजयेत्] [2]क्षेपयेत्। पुर इति परमेश्वराग्रे, न तु वक्ष्यमाणपुष्पपातनानुगत[3]नामकरणार्थं पुष्पक्षेपवद्यत्र तत्र योजयेत् ॥ ५९ ॥

ब्रूयादङ्ग महेशानं [4]पश्येत्युद्घाट्य लोचने ।
[5]तं मुक्तियोग्यता[6]शून्यैरदृष्टममरैरपि ॥ ६० ॥

तं च शिष्यम् [अङ्ग] [7]हे पुत्रक [मुक्तियोग्यताशून्यैः] अपवर्गार्हत्ववर्जितैः [अमरैरपि] देवैरपि अदृष्टं [महेशानं] परमेश्वरं [लोचने] नेत्रे [उद्घाट्य] उन्मील्य पश्येति [ब्रूयाद्] वदेत् ॥ ६० ॥

विलोक्यानन्दपूर्णाक्षमुत्थाप्य [8]प्रणतं [9]क्षितेः ।
दक्षिणस्यां प्रभोर्मूर्तौ निदध्यात्प्रणवासने ॥ ६१ ॥

[आनन्दपूर्णाक्षं] [10]शिव[11]निरीक्षणादुदितादाह्लादान्निर्भरनेत्रं [विलोक्य] दृष्ट्वा [प्रणतं] पुनः पुनः प्रणमन्तं क्षितेः उत्थाप्य प्रभोः [दक्षिणस्यां मूर्तौ] दक्षिणामूर्तिनिकटे [प्रणवासने निदध्यात्] प्रणवासनासीनं [12]गुरुः कुर्यात् ॥ ६१ ॥

[13]ततस्तु

प्राङ्मुखः सौम्यवदनं संयोज्य प्रोक्षणादिभिः ।
[14]शिवीकृतशिवाख्येन के [15]करेणालभेत्पशुम्[16] ॥ ६२ ॥

[प्राङ्मुखः] पूर्वमुखो गुरुः तं पशुत्वानपगमात् पशुं [सौम्यवदनम्] उदङ्मुखं [प्रोक्षणादिभिः] प्रोक्षणताडनालभनकर्मान्तरेण[17] [शिवीकृतशिवाख्येन करेण] शिवीकृतेन[18] प्रागुक्तेन[19] शिव-

[1] C omet तं
[2] C : क्षपयेत्
[3] C : अनुगम pour अनुगत
[4] A : पश्यत्युद्घाट्य
[5] A : तन्मुक्ति pour तं मुक्ति ; C : विमुक्ति
[6] C : शून्यैर्न दृष्टम् pour शून्यैरदृष्टम्
[7] C omet हे
[8] C : प्रणतः
[9] B : क्षितौ
[10] C : शिवं pour शिव
[11] B : निरीक्षणाह्लादननिर्भरनेत्रं
[12] C omet गुरुः
[13] C : तत्र स तु pour ततस्तु
[14] A : शिवीकृतं शिवाख्येन
[15] C : करेणालं लभेत्पशुम्
[16] En ms. C le *śloka* 63 se trouve ici ; cf. page 104 note 3.
[17] C : कर्मान्तरं pour कर्मान्तरेण
[18] शिवीकृत्य pour शिवीकृतेन
[19] cf. *śloka* 14.

हस्तेन [1]**के मूर्ध्नि आलभेद्** मन्त्रालब्धं कुर्यात् ॥ ६२ ॥

कीदृशशिवहस्तेनेत्याह[2]—

**[3]स्रग्गन्धगन्धिनेष्टेश[4]रुचारुणितदिक्पथा ।**
**मोक्षप्राप्त्यन्तरायौघशैथिल्य[5]गुणहेतुना ॥ ६३ ॥**

[**स्रग्गन्धगन्धिना**] स्रजां तथा गन्धानां च कर्पूरादीनां संबन्धी सुरभिगन्धो [6]यस्यासौ[7] तेन। तथा [**इष्टेशरुचा**] इष्टः पूजितः तस्मिन्हस्ते योऽसावीशः तदीयया रुचा दीप्त्या [**अरुणितदिक्पथा**] अरुणिता भासुरीकृता दिशः [8]पाशपन्थाश्चाध्वलक्षणः[9] प्रकाशितास्तेन । तथा [**मोक्षप्राप्त्यन्तरायौघशैथिल्यगुणहेतुना**] मोक्षप्राप्तौ अपवर्गलाभे अन्तरायौघो विघ्नसमूहः सहजागन्तुकपाशलक्षणस्तस्य शैथिल्यं सामर्थ्यहानिः[10] तथाविधो[11] यो[12] गुणः तद्धेतुना । तथा चोक्तं **रुरुसंहितायाम्—**

> “ अनेनालब्धमात्रस्तु देही निर्मुक्तबन्धनः ।
> प्रयाति शिवसायुज्यं निर्मलो विगतज्वरः । ” इति ॥ ६३ ॥

तदनन्तरं च—

**स्रजं तदञ्जलौ दत्त्वा योगपीठव्यवस्थितम् ।**
**पूजयात्रेति [13]तं ब्रूयात्सर्वामयहरं हरम् ॥ ६४ ॥**

[**तदञ्जलौ**] तस्य शिष्यस्याञ्जलौ **स्रजं दत्त्वा** मण्डपस्य [14]संपत्त्यनिष्पत्तौ [**योगपीठव्यवस्थितं**] वक्ष्यमाणवद्योगपीठकृतावाहनं [**सर्वामयहरं**] निश्शेषक्लेशप्रशमनम् [15]**अत्र** योगपीठे **हरं पूजय इति** [**ब्रूयाद्**] अभिदध्यात् ॥ ६४ ॥

**कृतोक्तकृत्यमग्न्यन्तं नीत्वा दक्षिणतो गुरुः ।**
**निदध्यात्प्रणवे पीठे शिवैकाहितमानसम् ॥ ६५ ॥**

[1] C omet के
[2] C ajoute स्रग्गन्धिनेत्यादि
[3] En ms. C ce *śloka* se trouve après le *śloka* 62 ; cf. page 103 note 16.
[4] A : इष्टेन pour इष्टेश
[5] C : शैथिल्यं pour शैथिल्य
[6] B : अस्य pour यस्य
[7] C ajoute तथा
[8] C omet पाश
[9] C : लक्षणं pour लक्षणः
[10] C : भानं pour हानिः
[11] C : तथाविधे
[12] C : योऽसौ pour यो
[13] A : संब्रूयात् pour तं ब्रूयात् ; D : प्रब्रूयात्
[14] C : संपत्त्यनिष्पत्तेः
[15] C : तत्र pour अत्र

गुरुजङ्घानिविष्टाग्रकुशमूलपरिग्रहम्[1] ।

[कृतोक्तकृत्यं] [2]विहिताम्नातकरणीयं तम् [अग्न्यन्तं] वह्निसमीपं [नीत्वा] प्रापय्य [शिवैकाहितमानसं] [3]शिवैकनिहितचेतसं [प्रणवे पीठे] प्रणवकल्पिते पीठे गुरुः [निदध्याद्] उपवेशयेत्। कीदृशम्—[गुरुजङ्घानिविष्टाग्र-कुशमूल-परिग्रहम्] गुरुजङ्घानिविष्टाग्रस्य कुशमूलस्य दर्भबुध्नभागस्य वामपाणिना विहितावष्टम्भनम् । आचार्यः स्वजानुसन्ध्यन्तरप्रविष्टान्तदर्भकाण्डं [4]वामहस्तावष्टब्धमूलं शिष्यं कुर्यादित्यर्थः ॥

किमर्थमेवं क्रियत इत्याह—

कुशच्छलेन तन्नाडी [5]गुरुनाड्यां लयं गता ॥ ६६ ॥

विश्लेषग्रहणाद्यर्थं तया [6]वेध्योऽसकृद्यतः ।

[तन्नाडी] [7]तस्य शिष्यस्य संबन्धिनी नाडी[8] [कुशच्छलेन] दर्भव्याजेन गुरुनाड्यां [लयं गता] निलीनेति भाव्यम् । यतस्तु तया नाड्या [विश्लेषग्रहणाद्यर्थं] शरीराद् विश्लेषग्रहणादिव्यापारनिमित्तमसौ शिष्यः [असकृत्] प्रतिक्षणं [वेध्यः] वेधनीयः ॥

[9]ततश्च—

[10]तिस्रस्तदनुसंध्यर्थमाहुतीः प्रतिपादयेत् ॥ ६७ ॥

प्रणवेन हृदा वापि मूलमन्त्रेण वा गुरुः[11] ।

[तदनुसंध्यर्थं] तदनुसंधानाय [प्रणवेन] ओंकारेण [हृदा] हृन्मन्त्रेण मूलमन्त्रेण वा [गुरुः] तिस्र आहुतीः [प्रतिपादयेत्] दद्यात्[12] ॥

तदुत्तमाङ्गमाधाय क्षितौ [13]शस्त्रान्तकैर्गुणैः ॥ ६८ ॥

संपातं जुहुयात्प्राग्वत्ततः[14] संतर्पयेदणून् ।

[1] A : कृताग्रकम् ; B : कृताग्रहम्
[2] B : आवहित pour विहित
[3] C : शिवे निविष्टचेतसं
[4] B : वामहस्तस्यावष्टब्धमूलं
[5] C : गुरुर्नाड्या
[6] A : बोध्यो pour वेध्यो
[7] C : तत्स्वशिष्यस्य
[8] C : संबन्धिनीं नाडीं
[9] B : तदुक्तम् ; C : तदाह
[10] En mss. B et C on se trouve les demi-*śloka* 67b-70a après le commentaire तदनुसंध्यर्थं . . . दद्यात्
[11] B et C : गुरुः ॥ इति
[12] cf. note 10
[13] A et C : शस्त्रान्तिकैर्गुणैः ; D : शास्त्रान्तिकैर्गुणैः
[14] C : तत्र pour ततः

**प्रायश्चित्ताहुतीर्दत्त्वा पूर्णां [1]दद्याच्छिवं स्मरन्[2] ॥ ६९ ॥**

[**तदुत्तमाङ्गं**] शिष्यशिरः [**क्षितौ आधाय**] [3]क्षितितलावनतं[4] कृत्वा [5]**शस्त्रान्तकै**रिति शस्त्रपर्यन्तैः **गुणैः** मन्त्रैः **संपातं प्राग्वद् जुहुयात्**। मूलमन्त्रेण पञ्चभिरङ्गैश्चाग्नौ [6]स्वाकारं तन्मूर्ध्नि हाकारं [7]यावत् प्रागुक्तेन क्रमेण [8]संपातहोमं कुर्यादित्यर्थः। ततश्च मन्त्रतर्पणं कृत्वा **प्रायश्चित्ताहुतीश्च** द्रव्यादिशक्त्यपेक्षया **हुत्वा** [**शिवं स्मरन्**] परमेश्वरमनुस्मरन् [**पूर्णां**] पूर्णाहुतिं **दद्यात्** ॥ ६८-६९ ॥

तदेवं[9] समयदीक्षाख्यसंस्कारः कृतो भवतीत्युपसंहर्तुमाह—

**इत्थं सामयिकं कर्म [10]श्रुत्यर्चास्मृतिकर्मसु[11] ।**
**यत्प्राप्य[12] योग्यतामेति दूरारोग्याति[13]वर्तिषु ॥ ७० ॥**

**इत्थं** [**सामयिकं**] समयदीक्षाख्यं **कर्म** उक्तम्। [**यत्प्राप्य**] यस्मिन्[14] [15]कृते [**दूरारोग्यातिवर्तिषु श्रुत्यर्चास्मृतिकर्मसु**] दूरं [16]विप्रकृष्टम् आरोग्यमनामयं [17]निर्वृतिलक्षणं येषां ते दूरारोग्या अविद्यादयः क्लेशाः तान् अतिवर्तन्ते अतिक्रामन्त्यवश्यमिति [18]दूरारोग्यातिवर्तीनि यानि श्रुत्यादिकर्माणि तद्विषये **योग्यतामेति** अर्हत्वं लभते। तत्र श्रवणं **श्रुतिः** परमेश्वरशास्त्राधिगमः। **अर्चा** पूजनम्। **स्मृतिः** अनुस्मरणम्। तच्च [19]द्विविधम्। दशभुजपञ्चवक्त्राद्याकारस्य[20] स्मरणं ध्यानाख्यम्। तद्वाचकानां विशिष्टव्याप्तिकानां प्राणशक्त्यनुसारेणावर्तनं जपसंज्ञकम्। [21]तदेवं सकलक्लेशोपशमहेतुषु[22] शास्त्रश्रवणपूजनजपध्यानेषु समयदीक्षयाधिकृतो भवतीति तात्पर्यम् ॥ ७० ॥

नैष्ठिकदीक्षार्थिनस्तु[23] कियदन्तोऽधिवासः कार्य इत्याह—

**निष्ठां [24]यियासतः पाशबन्धाद्यागमचोदितम् ।**

[1] A : दत्त्वा pour दद्यात्
[2] C : समान् pour स्मरन्
[3] B : स्थिति pour क्षिति
[4] C : अपटवं pour अवनतं
[5] C : शस्त्रान्तिकैरिति
[6] C : स्वाकारान्तमूर्ध्नि
[7] C omet यावत्
[8] C : संघात pour संपात
[9] C : तदेव
[10] A : शुद्ध्यर्थ pour श्रुत्यर्चा ; C : भूत्यर्चा
[11] C ajoute अथ.
[12] A : प्राप pour प्राप्य
[13] B : आदि pour अति
[14] B : अस्मिन्
[15] B : कृतं
[16] C : अविप्रकृष्टम्
[17] B : निवृत्तिलक्षणं : C : तन्निर्वृतिलक्षणं
[18] C : ज्ञान pour दूर
[19] C : द्विधा
[20] C omet स्य
[21] B : तदेव
[22] C : हेतुना pour हेतुषु
[23] B : दीक्षार्थिनं तु pour दीक्षार्थिनस्तु
[24] A : धिया सितः ; D : धिया सतः

**कर्मोच्यते समासेन निबोध द्विजसत्तम ॥ ७१ ॥**

**निष्ठां** मुक्तिं [1]**यियासतः** जिगमिषोः शिष्यस्य [**आगमचोदितं**] [2]शास्त्रश्रुतं **पाशबन्धादि कर्म** [**समासेन**] संक्षेपेण **उच्यते** । तद् [**द्विजसत्तम**] मुनिप्रवर[3] [**निबोध**] आकर्णयेति [4]हारीतमुनिरामन्त्रणपूर्वकं स्वशिष्यमभिधत्ते ॥ ७१ ॥

तदेव पाशबन्धादि वक्तुं प्रस्तौति—

**अकेशादिमदग्रन्थि कन्यया वर्तितं[5] समम् ।**
**त्रिगुणं त्रिगुणीकृत्य सूत्रं प्रोक्ष्यावृतं यजेत् ॥ ७२ ॥**
**प्रसारयेच्छिखाप्रान्तादङ्गुष्ठद्वितयावधि ।**

[**अकेशादिमत्**] केशकीटादि[6]वर्ज्यम् [**अग्रन्थि**] ग्रन्थिरहितं [**कन्यया वर्तितं**] कन्यावर्तितं[7] [**समम्**] अविषमं [**त्रिगुणं त्रिगुणीकृत्य सूत्रं**] नवतन्तु कृत्वा [**प्रोक्ष्य**] अभ्युक्ष्य [**आवृतं**] वर्मणा संवेष्ट्य [**यजेद्**] अर्चयेत् । ततः **शिखाप्रान्ताद्** आरभ्य **अङ्गुष्ठद्वितयावधि**[8] स्त्रीणां वामाङ्गुष्ठ[9]पर्यन्तं पुंसां दक्षिणाङ्गुष्ठपर्यन्तं यावत् **प्रसारयेत्** ॥

अथ किंनिमित्तं सूत्रं प्रसार्यमित्याह—

**नाडी वैषुवती दिव्या [10]संनिधिस्थानमात्मनः ॥ ७३ ॥**
**मायात्मकादिपाशानां संदोहमिति तां [11]स्मरेत् ।**

सोमसूर्याश्रयवामदक्षिणप्रवाहपरित्यागेन मध्यमावस्थितेर्विषुवत्, [12]विषुवत इयं **वैषुवती** [13]सुषुम्नाख्या मध्य**नाडी** । [**दिव्या**] दिव्यत्वं चास्याः परशक्त्याश्रयत्वात् । सा च **आत्मनः संनिधिस्थानम्** । आत्मा हि सूत्ररूपायां तस्यां स्थितः । [14]अस्यां स्थितः [15]सन्नभिमतार्थोपस्थानपूर्वकं तत्र संयोजनसंजननभोगभोजनादि[16]क्रियाभिर्बन्धान्निर्मुक्तः क्रियते । अत एव[17] तत्पाशसूत्रं [**मायात्मकादिपाशानां**]

[1] C : विधासतः
[2] B : शास्त्वश्रुत pour शास्त्रश्रुतं
[3] C : जनिप्रसर pour मुनिप्रवर
[4] B : हारीतमुनिमामन्त्रणपूर्वकं ; C : हारीतमुनिना मन्त्रकपूर्वकं
[5] C : तर्जितं pour वर्तितं
[6] C : पक्ष pour वर्ज्यम्
[7] C : कर्तितं pour वर्तितं
[8] C ajoute इति
[9] C : अन्तं pour पर्यन्तं
[10] A : संनिधीरात्मनः परा; B (en note) संनिधिरात्मनः परा
[11] A et B : स्मरन्
[12] C : विष्टरवत
[13] B : सुषुम्नाख्यमध्यनाडी
[14] C omet अस्यां स्थितः
[15] C : संततमभिमताढ्योपस्थानपूर्वकं
[16] C : क्रियाबन्धनिर्मुक्तः
[17] C ajoute च

मायेयाणवकर्मरूपाणां त्रिविधानामपि पाशानां [**संदोहम्**] आश्रयं[1] **स्मरेत्** । तेषां [2]हि ताडनच्छेदनादिकं सूत्रस्थानां कार्यम् । न तु [3]तद्देहस्थानाम् । उक्तं च श्रीमत्**स्वतन्त्रे**—

" [4]पाशाश्छेद्यास्तथा [5]दाह्याः सूत्रस्था न तु विग्रहे ।" इति ।

ततः किं कुर्यादित्याह—

**प्रविश्य नाडीमार्गेण चतुर्थ्यन्तं सतारकम् ॥ ७४ ॥**
**विश्लेषायोच्चरेन्नाम हुंफडन्तं तथैव [6]ताम् ।**
**[7]हृत्पुटस्थां समादाय नाड्या [8]सूत्रे नियोजयेत् ॥ ७५ ॥**

[**नाडीमार्गेण**] वामनाडीमार्गेण शिष्यदेहं **प्रविश्य** [**सतारकं**] तारकेणोंकारेणादौ युक्तं दीक्ष्यस्य **नाम चतुर्थ्यन्तं** [**हुफडन्तं**] हुं[9]फट्कारयुक्तं [**विश्लेषाय**] [10]नाडीविश्लेषाय [**उच्चरेद्**] उच्चारयेत् । यथा—" ओं देवदत्ताय हुं फट् नाडीविश्लेषं करोमि " इति **तां** च तदीयां मध्यनाडीं [**समादाय**] गृहीत्वा [**नाड्या**] [11]दक्षिणनाड्या निर्गत्य तस्मिन् **सूत्रे** [**हृत्पुटस्थां**] हृन्मन्त्रसंपुटितां[12] [**नियोजयेत्**] [13]संनिवेशयेत् ॥ ७४ - ७५ ॥

तत्रस्थां च ताम्—

**संपूज्य वर्मणावेष्ट्य जुहुयादाहुतित्रयम् ।**
**[14]उपांशुना सुषुम्नायै स्वाहेत्येकाग्रमानसः ॥ ७६ ॥**
**स उपांशुप्रयोगो यः स्वसंवेद्यलघुध्वनिः ।**

[**संपूज्य**] [15]सम्यक् पूजयित्वा [**वर्मणा आवेष्ट्य**] कवचेनावकुण्ठ्य [**एकाग्रमानसः**] अनन्यचेताः ' ओं **सुषुम्नायै स्वाहा** ' इति **उपांशुना** प्रयोगेण **आहुतित्रयं जुहुयात्** ॥

ततश्च—

**ताडयेदस्त्रमन्त्रेण संहाराय चितो वपुः ॥ ७७ ॥**

[1] C : आश्रयत्वेन
[2] C omet हि
[3] C : तद्गर्भस्थानाम्
[4] B et C : पाशच्छेद्यास्तथा
[5] C : दासाः
[6] A : तम् ; D : च
[7] B : हृकुपुटस्थं
[8] B : सूत्राणि योजयेत्
[9] C omet फट्
[10] C : नाम pour नाडी
[11] C : तद्दक्षिणनाड्या
[12] C ajoute सतीं
[13] C omet सं
[14] D omet les demi-*śloka* 76b et 77a
[15] Le passage सम्यक् पूजयित्वा à स्वाहा इति manque en ms. B.

[1]तेनैवाविश्य विश्लेष्य तारागोलकसंनिभम् ।
हृदा विकृष्य पाशान्ते गृह्य तेनैव योजयेत् ॥ ७८ ॥
सूत्रे सबिन्दुना व्योम्ना नतिप्रणवयोगिना ।

सकलदेह[2]व्यापकत्वेन स्थितस्य **चित** आत्मनः[3] **संहाराय** एकत्र हृद्देशे संघट्टनार्थं **अस्त्रमन्त्रेण** हुंफडन्तेन [**वपुः**] दीक्ष्यदेहं संताड्य तद्वामनाड्या तदन्तः [**आविश्य**] प्रविश्य [**तारागोलकसंनिभं**] स्फुरत्तारा[4]रुचिरं[5] हृत्पद्ममध्ये तच्चैतन्यं **तेनैव** इत्यस्त्रमन्त्रेणैव **विश्लेष्य** हृन्मन्त्रसंपुटितं कृत्वा [**विकृष्य पाशान्ते**] विशेषेण द्वादशान्तं यावदाकृष्य **तेनैव** इत्यनन्तरोक्तेन **हृदा** लयमुद्रया [**गृह्य**] गृहीत्वे-त्यात्मस्थं कृत्वा अनन्तरं **व्योम्ना** इत्याकाशवाचकेन[6] [7]हकारेण [**सबिन्दुना**] [**नतिप्रणवयोगिना**] ओंकारादि[8]नमस्कारान्तेन **सूत्रे योजयेत्** ॥

[9]किं च—

तेनातिवाहिकारूढं[10] दृक्क्रियाशक्तितेजसा ॥ ७९ ॥
[11]वपुः पाशात्मकं[12] व्याप्तं सूत्रस्थं भौवनं स्मरेत् ।

[13]**तेन** आत्मना चैतन्यरूपेण [**अतिवाहिकारूढं**] पुर्यष्टकावस्थितं [**दृक्क्रियाशक्तितेजसा**] ज्ञानशक्तिवीर्येण [**सूत्रस्थं**] सूत्रगं **भौवनं वपुः** [**पाशात्मकं**] पाशमयं **व्याप्तम्** अधिष्ठितं [**स्मरेत्**] चिन्तयेत् ॥

ततः किं कुर्यादित्याह—

निरोध्य वर्मणारक्ष्य स्वाहा पश्चात्मने ब्रुवन् ॥ ८० ॥
जुहुयादाहुतीः प्राग्वत्सांनिध्यप्रतिपत्तये ।

[1] B : तेनैवावश्य
[2] C : व्यापारकत्वेन
[3] C : आत्मना
[4] B : तार pour तारा
[5] C : रुचं pour रुचिरं
[6] C : वाचकत्वेन pour वाचकेन
[7] C : हंकारेण
[8] C : नसकार pour नमस्कार
[9] C omet किं च
[10] A et C : आरूढ pour आरूढं
[11] B (en note) : वपुः पाशमयं व्याप्तमधिष्ठितं चिन्तयेद् इत्यपि पाठः
[12] A : पाशमयं
[13] Le commentaire des demi-*śloka* 79b and 80a manque en ms. B.

सूत्रस्थं चैतन्यं **निरोध्य** अनन्यगतं[1] कृत्वा [**वर्मणा**] कवचावकुण्ठनेन च **आरक्ष्य** 'ओं **पश्वात्मने स्वाहा**' इति वदन् [**सांनिध्यप्रतिपत्तये**] सांनिध्यार्थम्[2] [**आहुतीः**] आहुतित्रयं **जुहुयात्**। **प्राग्वद्** उपांशुनैकाग्रचेतसा[3] इत्यतिदिश्यते।

इत्थमसाधारणबन्धाश्रयत्वं पाश[4]सूत्रस्योपक्रम्येदानीं [5]साधारणनिवृत्त्याद्यधिष्ठानत्वं वक्तुमाह—

**अथोत्तरेषां पाशानां जगद्व्याप्यावतिष्ठताम् ॥ ८१ ॥**
**तत्रैव संनिधिः कार्यो वक्ष्यमाणप्रयोगतः ।**

[**अथ**] अनन्तरम् **उत्तरेषां** [6]मलादिसद्भावोत्तरकाल[7]प्रवृत्तानां **जगद्व्याप्यावतिष्ठतां** जगद्व्यापित्वेनाभ्यधिकमहिम्नां वक्ष्यमाणानां निवृत्त्याद्याश्रयानां **पाशानां** [**वक्ष्यमाणप्रयोगतः**] अभिधास्यमानप्रयोगेण **तत्रैव** पाशसूत्रे **संनिधिः कार्यः** ॥

तथा हि—

**शान्त्यतीतादयो मूर्धमुखहृद्गुह्यपादगाः ॥ ८२ ॥**
**बिन्दुमन्त्रेशविद्याम्बुकाल[8]धामान्तसंश्रयाः ।**
**तदारूढानि कर्माणि शक्तयश्च [9]नियामिकाः ॥ ८३ ॥**
**शक्तिश्च शंभोः पाशानां पाशत्वं न विना यया ।**

अत्रान्तशब्दो[10] [11]बिन्द्वादिषु प्रत्येकमभिसंबन्धनीयः[12]। **संश्रयो**ऽधिष्ठानम्। [13]तद् बिन्द्वन्तसंश्रया बिन्द्वन्ताधिष्ठाना शान्त्यतीता मूर्ध्नि। [14]मन्त्रेशान्तव्यापिका शान्तिर्मुखे। विद्यान्तव्यापिका विद्या हृदि। अप्तत्त्वान्तव्यापिका प्रतिष्ठा नाभ्यन्ते। **काल**[15]**धाम**शब्देन कालाग्निवाचिना कालाग्न्याश्रयब्रह्माण्डलक्षणमत्रोक्तम्। तदन्तं[16] संश्रयोऽधिष्ठानं निवृत्तेः। तदन्तव्यापिका निवृत्तिः पादयोः। [17]शिष्यदेहाव-

[1] B : गमनं pour गतं
[2] C : संनिध्यर्थम्
[3] C : चेताः pour चेतसा
[4] C : सूत्रेभ्योपक्रम्येदानीं
[5] B : साधारणनिवृत्त्याद्यनुग्रानत्वं ; C : साधारनिवृताद्यधिग्रानत्वं
[6] C : मरुसंभाव pour मलसद्भाव
[7] C omet प्र
[8] A : याम pour धाम
[9] C : नियामकाः
[10] C : शब्दे pour शब्दो
[11] C : विद्यादिषु
[12] C : अभिसंबन्धनीयाः
[13] C omet तद्
[14] C : मन्त्रेण शान्ता मुखे
[15] C : याम pour धाम
[16] तदाह pour तदन्तं
[17] C : विशिष्य देहयोः स्थिता

स्थिता सा सूत्रे तथैव योज्या । [तदारूढानि] तेषु [1]चाध्वभागेषु यथासंभवारूढान्यवश्यभोक्तव्यतया स्थितानि **कर्माणि** तत्तदधिकारनियुक्तानां च [**नियामिकाः**] [2]साङ्केतिकास्तत्रव्याप्ताः **शक्तयः** । [**शंभोः शक्तिः**] शांभवी शक्तिः **यया विना पाशानां न पाशत्वम्** । [3]यदधिष्ठिता हि ते पाश्यान् पाशयन्ति तदेतत्सर्वप्रमेयं पाशसूत्रस्थनिवृत्त्याद्यारूढमवलोकयेत् ॥

**विलोक्यास्त्रेण [4]संताड्य हुंकारद्वयसंपुटे ॥ ८४ ॥**

**गृहीत्वा योजयेत्सूत्रे [5]नाडीपुद्गलयोगवत् ।**

**निरोध्य जुहुयात्प्राग्वदाहुतीः संनिधिं प्रति ॥ ८५ ॥**

प्रागुक्तं प्रमेयजातं **विलोक्य** [**अस्त्रेण**] अस्त्रमन्त्रेण **संताड्य** [**हुंकारद्वयसंपुटे गृहीत्वा**] हुंकारद्वयसंपुटितं कृत्वा **सूत्रे योजयेत्** । [**नाडीपुद्गलयोगवद्**] नाड्याः सुषुम्नाख्यायाः [6]पुद्गलस्यात्मनः सूत्रे नियोजनं पूर्वमुक्तम् । तद्वदेव तु प्रमेययोगः कार्य इत्यर्थः । [**निरोध्य**] कृतनिरोधस्य चास्य प्रमेयस्य [**संनिधिं प्रति**] संनिध्यर्थं **प्राग्वद् आहुतीः** क्रमेण [**जुहुयाद्**] होमं कुर्यात् ॥ ८४ - ८५ ॥

**तर्पणं यच्च पाशानां वीर्याविष्कृतये पुनः ।**

[**पुनः**] भूयोऽपि **पाशानां यत् तर्पणं** [**वीर्याविष्कृतये**] स्वसामर्थ्यप्रकटीकरणार्थं तदपि कुर्यात् ।

आविष्कृतवीर्याणां तु—

**एषामत्यर्थसक्तानां विभागायासिना[7]हुतीः ॥ ८६ ॥**

**पदाद्यन्तयुजा दद्यात्तिस्रस्तिस्रो विलोमतः ।**

[**अत्यर्थसक्तानां**] दुर्निवारसङ्ग[8]वताम् **एषां विभागाय** विश्लेषार्थं [**पदाद्यन्तयुजा**] पदाभ्यां प्रणवहुंफट्रूपाभ्याम् आद्यन्तयोरुपक्रमोपसंहारयोर्युज्यत इति पदाद्यन्तयुक् । तथाविधेन [**असिना**]

[1] C : चाध्वाभोगेषु

[2] B : साङ्केतिका सूत्रव्यापृतिका शक्तिः ; C : साङ्केतिकमस्तत्र व्याप्ताः शक्तयः ।

[3] B : यदधिष्ठिताभिधेयाः पाश्यान् ; C : यत्राधिष्ठाहिते पाश्यान्

[4] C : मन्त्रेण pour संताड्य

[5] D : नाडीन् pour नाडी

[6] C : पुद्गलस्य चात्मनः

[7] D : असिम् pour असिना

[8] C : असङ्ग pour सङ्ग

अस्त्रमन्त्रेण ओंकारादिना हुंफट्संपुटितेन **विलोमत** इति [1]विन्यासक्रमवैपरीत्येन निवृत्तेरारभ्य[2] **तिस्रस्तिस्र आहुतीः** [3]**दद्यात्** ॥

ग्रन्थिकल्पन[4]माह—

**ततः स्कन्धान्तभागेषु रोचनाकृतलक्ष्मसु ॥ ८७ ॥**
**ग्रन्थयोऽस्त्रेण कर्तव्यास्ताड्य पुष्पादिभिश्च तान् ।**

[**स्कन्धान्तभागेषु**] शिष्यदेहप्रलम्बितस्य पाशसूत्रस्य ये [5]स्कन्धा विभागाः पादनाभिहृन्मुखमूर्धाख्या निवृत्त्याद्याश्रयाः, तदन्तेषु [**रोचनाकृतलक्ष्मसु**] गोरोचनया कृतचिह्नेषु [**अस्त्रेण**] अस्त्रमन्त्रेण **ग्रन्थयः पुष्पादिभिश्च**[6] [**ताड्य**] ताडनादिभिः सन्धिपूर्वकं **कर्तव्याः** ॥

तत्करणप्रयोजनमाह—

**छिद्यन्ते ग्रन्थितः पाशास्ते हि तत्स्कन्धसन्धयः ॥ ८८ ॥**
**लोकेऽपि सन्धिमत्सन्धेर्निगलादि व्युदस्यते ।**

[**हि**] [7]यस्मात् तेषु स्कन्धेषु सन्धयः संश्लेषा येषां ते **तत्स्कन्धसन्धयः ते पाशाः** ततो हेतोः [**ग्रन्थितः**] ग्रन्थिस्थानेभ्यः [8]संश्लेषस्थानेभ्यः **छिद्यन्ते** । तथा हि **लोकेऽपि** यत्किंचिद् बन्धकं [9]**निगलादि** तत् [**संधिमत्**] सन्धिमत्त्वे सति **संधेः** बन्धस्थानादेव [**व्युदस्यते**] छिद्यते नान्यथा । दृष्टे सत्यदृष्टकल्पना न [10]युक्तेत्युक्तम् ॥

[11]अथ आचार्याधिकरणस्य [12]परमेश्वरस्यानुग्राह्याननुगृह्णतः करणं मन्त्राः । तैर्हि पाशच्छेदादि कार्यं करोति । ते च खड्गवदुत्तेजिताः स्वव्यापारं प्रत्यव्याहतसामर्थ्या भवन्ति । [13]उत्तेजनं च तेषां फट्कारादिक्रूरजातिप्रयोगेण कार्यमित्याह—

**प्रबोधे हुंफडाख्येशकरण[14]क्रूरजातयः ॥ ८९ ॥**

[1] C : विन्यासकं वैपरित्येन
[2] B ajoute इति
[3] B : दध्यात्
[4] C : कल्पनार्थं pour कल्पन
[5] C : स्कन्धविभागाः
[6] B omet च
[7] B : यस्याः pour यस्मात्
[8] C omet संश्लेषस्थानेभ्यः
[9] C : निर्गलादि
[10] C : युक्तिमतीत्युक्तम्
[11] C : आदौ चाधिकरणस्य
[12] C : परमेश्वरानुग्राह्यान्
[13] C : तदुत्तेजनं
[14] A, B et D : करणाः pour करण ; C : करणात्

छेदविश्लेषबन्धेषु प्रयोक्तव्या यथाक्रमम् ।

[**प्रबोधे**] प्रबोधः [1]दीपनं तन्निमित्तं **हुंफड्** इति जातिप्रयोगः कार्यः। तदुक्तमन्यत्र—" हुंफड्-हुत्वापरो होमो धाम्नः [2]साङ्गस्य दीपनः " इति। **आख्या** चिकीर्षितस्य छेदादेः [3]कर्मणो नाम। **ईशकरणं** मन्त्राः। **क्रूरजातयः** हुंफट्काराद्याः। एता **आख्येशकरणक्रूरजातयः** [**छेदविश्लेषबन्धेषु**] [4]पाशानां छेदे विश्लेषे बन्धे च यथाप्रयोगं **प्रयोक्तव्याः**। यथा-[5]ओं हुंफट् पाशं छिनद्मीति विश्लेषयामीति बध्नामीति च। **यथाक्रमम्** इति पाठक्रमा[6]नपेक्षणादर्थक्रमेणादौ[7] पाशबन्धस्ततो विश्लेषस्ततश्छेद इत्यर्थः ॥

एवं मन्त्रोद्दीपने कृते किं कुर्यादित्याह[8]—

ततस्तान्कृत[9]संपातान् पाशानावेद्य शंभवे ॥ ९० ॥
रक्षस्वेति वदन् विद्वान्निदध्यात्कुम्भसंनिधौ ।

**कृतसंपात**होमं तत् **पाश**सूत्रं स्थण्डिलस्थाय [**शंभवे**] शिवाय [**आवेद्य**] निवेद्य [**कुम्भसंनिधौ**] कलशसमीपे [**रक्षस्वेति**] रक्षस्वेदं भगवन्नित्येवं [**वदन्**] विज्ञाप्य [**निदध्यात्**] स्थापयेत् ॥

मुक्त्वा दर्भं समुत्थाय वह्निधाम्नि घटे गुरौ ॥ ९१ ॥
शिवं संपूजयेच्छिष्यः [10]सप्रणामं प्रदक्षिणम् ।

" [11]गुरुजङ्घानिविष्टाग्रकुशमूलपरिग्रहम् " इति नाडीसंधानार्थं शिष्यस्य दर्भग्रहणमुक्तं प्राक्। तद्दर्भं [**मुक्त्वा**] त्यक्त्वा [**समुत्थाय**] उत्थाय [**वह्निधाम्नि**] अग्नौ [**घटे**] कुम्भे **गुरौ** स्थण्डिले [12]च [**शिवं**] भगवन्तं [**संपूजयेद्**] अर्चयेत्। [**सप्रणामं**] **प्रदक्षिणं** च कुर्यात् ॥

ततः सद्गोमयकृते मण्डलत्रितये बहिः ॥ ९२ ॥
पञ्चगव्यं चरुं चास्मै दन्तकाष्ठं च देशिकः ।

[**ततः**] अनन्तरं [**सद्गोमयकृते**] भूतलगतगोमयोपलिप्ते [**बहिः**] द्वारबाह्यस्थे [**मण्डलत्रितये**]

[1] B : उद्दीपनं
[2] B : सङ्गस्य
[3] B : कर्मण्यंशकरणं मन्त्राः
[4] B : पाशच्छेदे
[5] B omet ओं ; C : ओं ओं
[6] B : अनुपेक्षणाद् pour अनपेक्षणाद् ; C : अन्वपेक्षणाद्
[7] B : आर्थ्येन क्रमेण pour अर्थक्रमेण
[8] C : इत्यत आह pour इत्याह
[9] C : कृत्वा pour कृत
[10] A et C : सप्रणामप्रदक्षिणं
[11] cf. *Kriyāpāda, paṭala* 7, *śloka* 66a
[12] C omet च

मण्डलत्रये[1] यथाक्रमं **पञ्चगव्यं चरुं** [**दन्तकाष्ठं**] दन्तधावनं **च** [**अस्मै**] [2]शिष्याय [**देशिकः**] गुरुः '[3]**दद्याद्**' इत्यप्रस्थितेन संबन्धः ॥

दन्तधावनविधिमाह—

**दद्याच्छिवेन साङ्गेन हृदा वा दन्तधावनम् ॥ ९३ ॥**

**[4]क्षैरद्रुमं [5]त्वचा युक्तमयुक्पर्वकमव्रणम् ।**

क्षीरिणो वृक्षस्य अवयवं [6]**क्षैरद्रुमं** [**त्वचा युक्तं**] त्वक्सहितम् [**अयुक्पर्वकं**] विषमग्रन्थि [**अव्रणं**] निश्छिद्रं च **दन्तधावनं साङ्गेन शिवेन** [**हृदा**] हृन्मन्त्रेण [7]**वा** अभिमन्त्र्य **दद्यात्** ॥

**तेनेश्वरमहासेवा[8]प्रतिज्ञाव्रत[9]लक्ष्मणा[10] ॥ ९४ ॥**

**पतता दिक्षु जानीयादिष्टानिष्टविवेकवान् ।**

**तेन** दन्तकाष्ठेन दन्तधावनानन्तरमुन्मुखेन[11] त्यक्तेन **दिक्षु पतता** [**इष्टानिष्टविवेकवान्**] शुभाशुभलक्षणविद् गुरुः [**जानीयात्**] [12]शुभमशुभमवगच्छेत् । कीदृशा—[**ईश्वर-महासेवा-प्रतिज्ञा-व्रत-लक्ष्मणा**] ईश्वरे शिवभट्टारके महत्यसामान्या[13] तदेकप्रवणत्वेन[14] यासौ सेवा, तस्याः प्रतिज्ञानं प्रतिज्ञा परमेश्वरेणाङ्गीकरणं, तदर्थं यद् व्रतं पञ्चगव्यचरुप्राशनादि, तल्लक्षयति चिह्नयतीति तल्लक्ष्म **तेन**। [15]झटिति परमेश्वरस्यानुग्रहोऽस्माद् व्रतात् [16]संभवत्यव्यतिरेकेणैवेति किल तात्पर्याल्लक्ष्यते ॥

[17]तथाहि—

**हरीन्दुवरुणेशानदिक्ष्वभीष्टफलोदयः ॥ ९५ ॥**

**विना विघ्नमतोऽन्यासु[18] जुहुयादसिना शतम् ।**

[**हरि-इन्दु-वरुण-ईशान-दिक्षु**] ऐन्द्र्यां प्राच्यां दिशि [19]सौम्यायाम् उदीच्यां वारुण्यामैशान्यां

[1] C: मण्डलकत्रये
[2] B omet शिष्याय
[3] cf. *śloka* 93b
[4] B : क्षौरद्रुमं
[5] C : त्वक्सयुक्तमयुक्त पर्वकं व्रणम्
[6] B : क्षौरद्रुमं
[7] C : एव pour वा
[8] B : देवा pour सेवा
[9] C : प्रति pour व्रत
[10] B : लक्षणा pour लक्ष्मणा
[11] C : मुखेन pour उन्मुखेन
[12] C : शुभाशुभं वा गच्छेत्
[13] B : असामान्य pour असामान्या
[14] B : तद्देहप्रणवत्वेन ; C : तदेकप्रणवत्वेन
[15] C : झडिति
[16] C : अभ्यभविता pour संभवति
[17] B omet तथाहि
[18] A : स्युः pour सु
[19] C: ऐन्दव्यां

च दिशि पतिते तस्मिन् [विना विघ्नं] निर्विघ्नो [अभीष्टफलोदयः] अभिमतफललाभः । [अतोऽन्यासु] आभ्यश्चतसृभ्योऽन्यत्र पतिते तु [असिना] अस्त्रमन्त्रेण शतं [जुहुयाद्] होम्यम् ॥

ततस्त्रियोन्यन्तरायप्रशमाय शतत्रयम् ॥ ९६ ॥
शिवेन वासिताङ्गेन विघ्नौघध्वंसिनासिना[1] ।

[ततः] पश्चात् [त्रियोन्यन्तरायप्रशमाय] तिस्रः कायवाङ्मनोलक्षणा योनय उद्भवस्थानानि येषां ते त्रियोनयः । कायिकमानसवाचिकत्रिविधच्छिद्रसंभवा येऽन्तराया विघ्नास्तत्प्रशान्तये [शिवेन] मूलमन्त्रेण कायिकच्छिद्रोपशान्त्यर्थम् [2]असिताङ्गेन इत्यघोरेण वाचिकविधिभङ्गरक्षणाय [विघ्नौघध्वंसिना] विघ्नसंघातनिराकरणे प्रवणेन [असिना] शस्त्रेण मानसकर्मच्छिद्रनिवृत्त्यर्थमित्येवं[3] त्रिभिः शतत्रयं जुहुयादिति [4]पूर्वेण संबन्धः । वाशदोऽत्र पादपूरणे । त्रिविधच्छिद्रनिवृत्तिमभिसंधाय [5]विकल्प्यते वा एकैकेन । त्रीणि त्रीणि वा शतानि जुहुयात् ॥

[6]ततश्च—

तर्पणे मन्त्रमुख्यानां पूर्णाहुत्यन्तके[7] कृते ॥ ९७ ॥
स्थण्डिलस्थं [8]कृताघ्यान्तं कलशेऽग्निपथे न्यसेत् ।

[मन्त्रमुख्यानां] मूलमन्त्रादिमन्त्राणामधिवासविधिसंपत्त्यर्थं [पूर्णाहुत्यन्तके] पूर्णाहुत्यन्ते तर्पणे कृते सति अग्निपथे इति स्थण्डिलस्थं वह्नौ ततोऽपि कलशेऽवतार्य [न्यसेत्] [9]स्थापयेत् । [10]अयमाशयः । प्रागुक्त[11]रोधार्घ्यदानतः कृतविसर्जनं देवं स्थण्डिलतोऽग्नावतारयेत् । ततोऽपि कलशस्थं [12]कुर्यात् ॥

[13]ततः—

शुद्धायामवनावस्त्रशतालब्धेन बर्हिषा ॥ ९८ ॥
बुभुक्षोः शयनं कुर्याद्गुरुः प्राचीनमस्तकम् ।

[1] C : विघ्नौघध्वंसिता विना

[2] Le passage असिताङ्गेन à मानसकर्मच्छिद्रनिवृत्त्यर्थम् manque en ms. C.

[3] B et C : इत्येव pour इत्येवं

[4] cf. *śloka* 96a ; C : पूर्वेणैव

[5] B : विकल्प्यते वा फ‍ककेन त्रीणि : C : विकल्पत एव एकैकेन

[6] B omet le mot ततश्च et les demi-*śloka* 97b et 98a

[7] D : अन्तिके pour अन्तके

[8] C : कृतार्घान्तं

[9] C : क्षमापयेत्

[10] C omet अयमाशयः

[11] C : रोधनार्घ्यं pour रोधार्घ्यं

[12] C : स्यात् pour कुर्यात्

[13] B omet ततः

[1]याम्यदिक्कृतकस्थानं मुमुक्षोः शुद्धभस्मना ॥ ९९ ॥

[शुद्धायां] शुचौ [अवनौ] भूमौ [अस्त्रशतालब्धेन] शतकृत्वोऽस्त्राभिजप्तेन [बर्हिषा] दर्भसमूहेन [बुभुक्षोः] भुक्त्यर्थिनः [प्राचीनमस्तकं] [2]प्राक्शिरस्कं शयनं गुरुः [कुर्यात्] कारयेत् । [3]याम्यदिक्कृतकस्थानं याम्यायां दिशि कृतं कस्थानं शिरःप्रदेशो यस्य तथाविधं [मुमुक्षोः] मुक्त्यर्थिनः [शुद्धभस्मना] शुद्धेन भस्मना [कुर्याद्] विधापयेत् ॥ ९८-९९ ॥

तत्र च—

संरक्ष्यारोपयेच्छिष्यं शिखागुप्तशिखं हृदा ।
[4]वाससा वर्मजप्तेन प्रच्छाद्य बहिरालिखेत् ॥ १०० ॥
रेखास्तिस्रोऽ[5]स्त्रसंदीप्तैस्तिलसर्षपभस्मभिः ।

[संरक्ष्य] सिद्धार्थरोचनादिभिरस्त्रमन्त्रेण कृतरक्षातिलकं [शिखागुप्तशिखं] [6]शिखामन्त्रेण गुप्तशिखं [हृदा] हृन्मन्त्रेण शय्याम् आरोपयेत् । [वर्मजप्तेन] [7]कवचाभिजप्तेन वाससा प्रच्छाद्य शयनाद् बहिः अस्त्रसंदीप्तैः तिलसर्षपभस्मभिः तिस्रो रेखा [आलिखेत्] लिखेत् ॥

अनन्तरं च—

दत्त्वा बलिं बहिः प्राग्वद्दीक्षितैः सह देशिकः ॥ १०१ ॥
गव्यपूर्वं[8] चरुं प्राश्य [9]शुद्धवस्त्रः शुचिर्गृहे ।
तत्रैव शय्यामास्तीर्य[10] प्रागुक्तविधिना स्वपेत् ॥ १०२ ॥
मन्त्रान्विशेषतो न्यस्य [11]सुप्तमाणवकं जपेत् ॥ १०३ ॥

[12]बहिः दिव्यान्तरिक्षभौमेभ्यो भूतेभ्यो बलिं प्राग्वद् दत्त्वा [देशिकः] गुरुः [दीक्षितैः] शिष्यैः सह [गव्यपूर्वं] पञ्चगव्यपूर्वं [चरुं प्राश्य] चरुभुक् शुचिः [शुद्धवस्त्रः] शुद्धवासाः[13] तत्रैव [गृहे] यागगृहे [प्रागुक्तविधिना शय्यामास्तीर्य] दर्भैरास्तीर्णशय्यः [मन्त्रान् विशेषतो न्यस्य]

[1] C : याम्यादि pour याम्यदिक्
[2] C : प्राक्शिरःस्कन्धं
[3] C : याम्यादिकृतकस्थानं
[4] C : वाससी
[5] C : अत्र pour अस्त्र
[6] C : शाखाभिमन्त्रगुप्तशिखं
[7] C : कवचान्तं जप्तेन
[8] C : पूर्णं pour पूर्वं
[9] A et B : शुद्धवस्त्रशुचिर्गृहे ; D : शुद्धवस्त्रं शुचिर्गृहे
[10] C : आसीत pour आस्तीर्य
[11] A et B : स्वप्न pour सुप्त
[12] B omet बहिः
[13] C : शुद्धवाससा pour शुद्धवासाः

कृतरक्षः सकलीकृतदेहोऽस्त्रप्राकारमनुस्मरन् [1]प्रतिष्ठाप्रकरणवक्ष्यमाणवत्[2] [3]**सुप्तमाणवकं** [**जपेत्**] जपन्स्वप्यात्॥ १०१ - १०३ ॥

उपसंहरन्नाह—

> **इत्येतदुक्तमधिवासनकर्म पत्या[4]**
> **[5]यद्वा विगव्यचरुपाशयमादि सद्यः ।**
> **येनोक्तमन्त्रपुरसारवताभिपूतो**
> **योग्यत्वमेति विविधोदयसाधनस्य ॥ १०४ ॥**

[**इत्येतद्**] [6]इत्यनेनोक्तेन क्रमेण [**पत्या**] भगवता [**अधिवासनकर्म उक्तम्**] अधिवासनविधिरादिष्टः[7]। [8]**यद्वा** कालविस्तारासंभवात् **सद्यः** [9]समानेऽह्नि [**वि-गव्य-चरु-पाश-यमादि**] पञ्चगव्यचरुप्राशन[10]पाशबन्धादिवर्जितमधिवासकर्म कुर्यात् । तथा चोक्तं श्रीमत्**पौष्करे**—

> "सद्योऽधिवासनं कार्यमकृते त्वधिवासने ।
> पूर्वोक्तेन विधानेन दन्तकाष्ठचरूज्झितम् ॥" इति ॥

उभयस्याप्यधिवासस्य [11]करणे प्रयोजनमाह—**येने**त्यादिना[12]। **येन** अधिवासनेन [**अभिपूतः**] अभितः समन्तात् पूतः पवित्रीकृतदेहो [**विविधोदयसाधनस्य**] भौतिकनैष्ठिकाद्याम्नातविविधा-[13]भ्युदयसंपादकस्य दीक्षाख्यस्य कर्मणो [**योग्यत्वम्**] अर्हताम् [**एति**] लभते । कीदृशेन—**उक्तमन्त्रपुरसारवता** उक्तमभिहितं मननत्राणधर्मवतां मन्त्राणां पुरस्य[14] मण्डलस्य च सारम् उत्कृष्टं कर्म तद्वता । [15]मन्त्राणां सारं सर्वाध्वशिरोरूपिणि[16] कलशे वह्नौ स्थण्डिले चावतारणम् । मण्डलस्यापि

[1] Le *paṭala* qui donne des détails au sujet de la *pratiṣṭhā* manque dans nos mss. A, B, C et D.

[2] वत् manque en B et C

[3] C : स्वप्न pour सुप्त

[4] D : कर्मवत्या pour कर्म पत्या

[5] A : यद्वापि गव्य pour यद्वा विगव्य

[6] B : इत्यनेनोक्तक्रमेण

[7] C : विधिना पृष्टः pour विधिरादिष्टः

[8] C : यदि वा

[9] B : समानाऽह्नि

[10] C : श्रपण pour प्राशन

[11] B : करण pour करणे

[12] C omet ना

[13] B : अनेकविध pour आम्नातविविध

[14] B ajoute च

[15] C : तन्त्राणां

[16] B : रूपिणी pour रूपिणि

सारं [1]रजोघटिकासूत्रशङ्क्वादेः परदृष्ट्यवलोकनादियोग्यतोत्पादनम् । [2]तद्विद्यते यस्मिन्नधिवासकर्मणि [3]तेन तथाविधेन कृतेन दीक्ष्यः पञ्चगव्यचरुप्राशनैः पूतः सद्योऽधिवासे वा शिवहस्तदानादिनैव पवित्रीकृतशरीर[4] अभिप्रेतविविधफलदायिनो दीक्षाख्यस्य कर्मणः पात्रतां प्राप्नोति[5] ॥ १०४ ॥

[6]इति श्रीभट्टविद्याकण्ठात्मज-भट्टनारायणकण्ठविरचितायां [7]मृगेन्द्रवृत्तौ
[8]क्रियापादेऽधिवासप्रकरणं [9]सप्तमं समाप्तम्[10] ।

[ इति सप्तमः पटलः ]

[1] C : रज:खटिका pour रजोघटिका
[2] B : तद्विधृते pour तद्विद्यते
[3] C omet तेन
[4] B : शिराः pour शरीरः
[5] C ajoute इति शुभम्
[6] A : इति श्रीमन्मृगेन्द्रे क्रियापादेऽधिवासनविधिपटलः सप्तमः ; D : इति श्रीमन्मृगेन्द्रक्रियापादेऽधिवासनं विंशतिः पटलः ; B : इत्यधिवासप्रकरणं समाप्तम्
[7] C : श्रीमन्मृगेन्द्रवृत्तौ
[8] C omet क्रियापादे
[9] C omet सप्तमं समाप्तम्
[10] C ajoute श्रीवेङ्कटेश्वराय नमः

## [अथाष्टमः पटलः]

### [[1]दीक्षाविधिप्रकरणम्]

अथेत्यादिनाधिवासप्रकरणानन्तरं दीक्षामभिधत्ते। अधिवासस्य तदङ्गत्वात्। [2]तदुक्तं श्रीमत्**पौष्करे**—"यागः श्वो भवितेत्यादौ कर्तव्यमधिवासनम्" इति। अत एवेह [3]प्राग्वन्न प्रकरणादिसंबन्धः पृथगुच्यते। प्रागुक्तेनैवाक्रान्तत्वात्।

**अथेष्टसाधनी[4] दीक्षा परमेशमुखोद्गता।**
**[5]निगद्यते समासेन द्वित्वादर्थस्य सा द्विधा॥ १॥**

[**परमेशमुखोद्गता**] परमेश्वरवक्त्राम्बुजनिर्गता विद्येश्वरादिक्रमेण मुनिमनुष्यान्ताध्येतृश्रोतृजनप्रथिता [**इष्टसाधनी**] अभिप्रेतस्य भुक्तिमुक्त्यात्मनः फलस्य[6] साधनं संपादयित्री **दीक्षा** [**निगद्यते**] उच्यते। यस्याः स्वरूपं शास्त्रप्रणेतैव प्रश्नपूर्वकं पुरस्ताद्वक्ष्यति "[7]दीक्षा शुद्धिरशुद्धस्य" इत्यनेन। उक्तं च—

"दीयते ज्ञानसद्भावः क्षीयते कर्मवासना।
दानक्षपणयोग्या हि [8]दीक्षा शुद्धिः कृतात्मनाम्॥" इति।

सा च **समासेन** संक्षेपेण **अर्थस्य** द्वित्वाद् [**द्विधा**] द्विरूपा॥ १॥

अथ कथमित्याह—

**[9]भौतिकी नैष्ठिकी चैव ।**

भूतिः विचित्राभिमतभोगावाप्तिः[10] तदन्ते परनिर्वाणसाधनम्। यथोक्तं श्रीमद्**रुरुसंहितायाम्**—

"भुक्त्वा भोगान्सुचिरममरस्त्रीनिकायैरुपेताः
स्वस्तोत्कण्ठाः शिवपदपरैश्वर्यभाजो भवन्ति।" इति।

[1] B : अथ दीक्षाविधिरष्टमं प्रकरणम्
[2] B omet तदुक्तं
[3] C : न प्राक्तन pour प्राग्वन्न
[4] B et C : साधनं pour साधनी
[5] D : निर्वृते pour निगद्यते
[6] C ajoute न
[7] cf. *paṭala* 8, *śloka* 87
[8] C omet दीक्षा शुद्धिः
[9] B : भौतिकी नौष्ठिकी चैव सावान्तरविभेदतः
[10] C : भोगावापितः pour भोगावाप्तिः

निष्ठा कैवल्यम् । ते[1] [2]भूतिनिष्ठे प्रयोजनं ययोस्ते[3] तथा । **भौतिकी** भूतिकामस्य । निष्ठार्थिनो [**नैष्ठिकी**] नैर्वाणिकीत्यर्थः । [4]विस्तारतस्तु तस्या बहवो भेदाः ।

तथा हि—

**सावान्तरविभेदतः ।**

**सापेक्षा निरपेक्षान्या या लोकशिवधर्मिणी ॥ २ ॥**

**सा** च दीक्षा भौतिकी नैष्ठिकी च [**अवान्तरविभेदतः**] अवान्तरभेदादेकैका [**सापेक्षा निरपेक्षा**] [5]सापेक्षनिरपेक्षत्वेन द्विधा भिद्यते । तत्र साधकाचार्ययोः सापेक्षैव[6] । अन्येषां तु सामर्थ्या[7]सामर्थ्यसंभावनावशाद्यथायोगं क्वचित्सापेक्षा क्वचिन्निरपेक्षा । तथा चोक्तं श्रीमत्**स्वतन्त्रे**—

"बालबालिशवृद्धस्त्रीभोगभुग्व्याधितात्मनाम् ।
तेषां निर्बीजिका दीक्षा [8]समयाचारवर्जिता ॥" इति ।

निरपेक्षापि[9] सद्योऽसद्योनिर्वाणभेदाद् द्विरूपा । **अन्या** तु [**लोकशिवधर्मिणी**] लोकशिवधर्मित्वेन साधकस्य द्वैविध्याद् [10]द्विधा[11] । लोकधर्मिणी[12] शिवधर्मिणी च [13]वक्ष्यमाणलक्षणा[14] ॥ २ ॥

तत्र सापेक्षनिरपेक्षार्थं लक्षयितुमाह—

**शार्वं नयति या धाम समयाद्यनुवर्तकम्[15] ।**
**विशिष्टात्मगुणप्रायं सापेक्षा सोच्यते बुधैः ॥ ३ ॥**

**समयाद्यक्षमं वृद्ध[16]मूढबालाबलादिकम् ।**
**यासौ [17]तदनपेक्षित्वान्निरपेक्षा निगद्यते ॥ ४ ॥**

[1] B : ये
[2] C : धृति pour भूति
[3] C omet ते
[4] C : विस्तारस्तु
[5] B : सापेक्षा निरपेक्षेण
[6] B omet एव
[7] C omet सामर्थ्य
[8] C : समयादिविवर्जिता
[9] B : निरपेक्षोऽपि
[10] C omet द्विधा
[11] C ajoute तद्विषया वा
[12] B omet धर्मिणी
[13] C : वक्ष्यमाणा pour वक्ष्यमाणलक्षणा
[14] cf. *śloka* 6 et 7
[15] B : वर्तनम् pour वर्तकम्
[16] C : मूल pour मूढ
[17] C : तदनपेक्षत्वान्निरपेक्षा

[**विशिष्टात्मगुणप्रायं**] [1]विशिष्टा आत्मगुणा **अहिंसासत्यास्तेयादयो** यस्य [2]तं [3]तथाविधं पुमांसम् [**समयाद्यनुवर्तकम्**] आदेहपाताच्छास्त्रोक्तसमयानुष्ठाननिरतम्। आदिग्रहणान्नैमित्तिकाचारपालनपरं **च** [**शार्वं धाम**] शिवधाम [4]**या** [**नयति**] प्रापयति **सा सापेक्षा** [**बुधैः**] [5]विद्वद्भिः[6] **उच्यते**। तस्यां ह्यपेक्षणीयाः समयाद्याचाराः। **या तु** [**समयाद्यक्षमं**] तदनुष्ठानासमर्थं[7] [**वृद्धमूढबालाबलादिकं**] बालबालिशवृद्धाङ्गनादिकं सम[8]याचारशोधनेन शिवधाम [9]प्रापयति [**असौ**] सा [**तदनपेक्षित्वात्**] [10]समयानपेक्षित्वा**न्निरपेक्षा** [**निगद्यते**] [11]उच्यते ॥ ३-४ ॥

सद्योनिर्वाणदीक्षालक्षणमाह—

**सास्याः परतमा सद्यो या विधत्ते निरामयम् ।**
**नाम्ना नैर्वाणिकी पाके तमसो [12]याप्यते परे ॥ ५ ॥**

निरपेक्षा तावद्दीक्षा [13]परत्वेन स्थिता[14]। अन्यासां[15] सापेक्षत्वेनैवापरत्वात्। ततोऽपि परतरा[16] [17]निर्वाणदीक्षा। [**अस्याः**] तस्या अपि सकाशात् **सा** [**परतमा**] प्रकृष्टतमा ज्ञेया **या** शरीरारम्भकर्मदाहात् **सद्य** एव [**निरामयं**] संसार[18]व्यथामुक्तं नरं [**विधत्ते**] करोति। सा हि [**नाम्ना नैर्वाणिकी**] सद्योनिर्वाणसंज्ञिका **या** [**तमसः परे पाके**] [19]प्रकृष्टे मलपरिपाके सति [**आप्यते**] प्राप्यते ॥ ५ ॥

अथ साधकविषययोः शिवधर्मिणीलोकधर्मिण्योः किं लक्षणमिति [**जिज्ञासायां**] शिवधर्मिणीं तावद्वक्ति—

**शिवधर्मिण्यणोर्मूलं शिवधर्मफलश्रियः[20] ।**

**अणोः** आत्मनः **शिवधर्मिणी** दीक्षा[21]। यस्यां कृतायां त्यक्तलौकिकाचारः [22]शिवधर्मानुष्ठान-

[1] C : विशिष्टात्मगुणा
[2] B : तत् pour तं
[3] B : तथाविधपुमांसम्
[4] C : योज्य pour या
[5] C ajoute अन्यद्
[6] B . तद्विद्भिः
[7] B : समर्थ pour असमर्थ
[8] B omet या
[9] C : प्रयाति
[10] B : समयानपेक्षितत्वाद्
[11] B omet उच्यते
[12] A et B : व्याप्यते ; C : वाप्यते
[13] B : परतत्वेन
[14] C ajoute अन्यता
[15] B : अन्येषां
[16] C omet रा
[17] B : निर्वाणदीक्षितस्यपि सकाशात्
[18] C : व्याधि pour व्यथा
[19] B : परिपुष्टे pour प्रकृष्टे
[20] C ajoute le demi-*śloka* 6b ici ; cf. page 122, note 7
[21] C : दीक्षां
[22] C : शिवधर्मिण्यनुष्ठानतत्पर

तत्पर एव [1]योऽणुर्भवति [2]सास्य **शिवधर्मफलश्रियो मूलं** तद्दीक्षया दीक्षितस्य शिवधर्मफलश्रीर्वर्धते[3]। शिवसम[4]सर्वज्ञतादिधर्मविभवो भवतीति यावत् ॥

अस्या एवान्यं[5] प्रकारमाह[6]—

**[7]हितेतरा विना भङ्गं तनोराविलयाद्भुवाम्[8] ॥ ६ ॥**

**इतरा** द्वितीया शिवधर्मिण्येव **तनोः भङ्गं विना** [**हिता**] [9]विहिता श्रेयस्साधिका। पिण्डस्थैर्ये जाते [10]शिवत्व[11]व्यक्तावुत्पन्नायां स्वेच्छाविहारी यथेष्टभोगकृद्भवतीति भावः। अथ [12]कियदन्तोऽस्य तादृग्भोग इत्याह—[13]**आविलयाद्भुवाम्** [इति]। **भुवां** भोगभूमीनाम् [**आविलयाद्**] आप्रलयात्। भोगभूमयो [14]यावद्विलीना नष्टा आकल्पं तथाविधं भोगं [15]भुङ्क्त्वा शिवसमानमहिमा भवतीत्यर्थः ॥ ७ ॥

अथ लोकधर्मिण्युच्यते—

**भोगभूमिषु सर्वासु दुष्कृतांशे हते सति।**
**देहोत्तराणिमाद्यर्थं शिष्टेष्टा लोकधर्मिणी ॥ ७ ॥**

[16]दीक्ष्यस्य [**भोगभूमिषु**] याः काश्चन [17]भोग्यतया भाविन्यस्तासु [**दुष्कृतांशे**] यावान् दुष्कृतांशस्तस्मिन् [**हते**] [18]मन्त्र[19]सामर्थ्याद्व्याहते शुभकर्मांशे चावस्थापिते **सति** [**देहोत्तराणिमाद्यर्थं**] शरीरोत्तरकालभाविनामणिमादीनां कृते **शिष्टा** इति द्वितीया **लोकधर्मिणी** नाम **इष्टा** शास्त्रेष्वाम्नाता। [20]यद्वा शिष्टानां तद्विदाम् इष्टा संमता **शिष्टेष्टा**। तदेवं मन्त्रसामर्थ्यतः क्षपितदुष्कृतांशस्येष्टापूर्तादि-[21]

[1] B : स pour यः
[2] B omet सास्य
[3] C : फलं वर्धते pour फलश्रीर्वर्धते
[4] C : सर्वत्र्यादि pour सर्वज्ञतादि
[5] B : अन्यत् pour अन्यं
[6] C ajoute हितेतरा विना भङ्गं तनोरिति
[7] En ms. C ce demi-*śloka* se trouve après *śloka* 6a ; cf. plus haut page 121, note 20.
[8] C : भुवम् pour भुवाम्
[9] B : विहिताश्रयस्साधिका
[10] C : शिवत्वस्य pour शिवत्व
[11] B : व्याप्तौ pour व्यक्तौ
[12] C : किं तस्य pour कियदन्तोऽस्य
[13] B : अविलयाद् pour आविलयाद्
[14] C : यावन्ति विलीना
[15] C : भुक्त्वा
[16] B : दीक्षस्य
[17] B : भोगतया
[18] C omet मन्त्र
[19] B : सामर्थ्य pour सामर्थ्याद्
[20] B : यद्वासिष्टानां pour यद्वा शिष्टानां
[21] C omet आदि

तत्परस्य साधकस्य देहान्ते निरतिशयाणिमादिसिद्धिदा लोकधर्मिणी सतां मतेत्यर्थः ॥ ७ ॥

अथैतासां प्रकारभेदात् फलभेदं दर्शयितुमाह—

**एताः कारकसाम्येऽपि भिन्नार्थप्रतिपादिकाः[1] ।**
**अभिसंधिकृताद्भेदाद्देशिकोत्तमशिष्ययोः ॥ ८ ॥**

सर्वा अपि **एताः** [**कारकसाम्येऽपि**] कारकाणामङ्गानां यागानां तुल्यत्वेऽपि "एवंविध-दीक्षापात्रमयं शिष्यो" "मम भगवन् ईदृग्दीक्षा क्रियताम्" इति **देशिकोत्तमशिष्ययोः** गुरूत्तम-शिष्ययोः [**अभिसंधिकृताद्भेदाद्**] अभिसंधानभेदेन[2] भिन्नार्थत्वाद् [**भिन्नार्थप्रतिपादिकाः**] भिन्न-फलदाः ॥ ४ ॥

[3]गदितमानुषङ्गिकम् । इदानीमधिवासनस्वापादनन्तरमुत्थितः [4]किमाचार्यः कुर्यादिति प्रकृतमुच्यते—

**आसामन्यतमां दीक्षां चिकीर्षुः प्रातरुत्थितः ।**
**[5]कृताह्निको यागगृहे शिष्यैः स्वप्ने निवेदिते ॥ ९ ॥**
**मङ्गले मङ्गलं ब्रूयात्कुर्याच्छान्तिममङ्गले ।**

**आसां** प्रागुद्दिष्टानां [6]मध्याद् [**अन्यतमां दीक्षां**] कांचिद्दीक्षां [**चिकीर्षुः**] कर्तुमिच्छुः गुरुः [**प्रातः उत्थितः**] प्रभात[7] उत्थाय [**कृताह्निको**] [8]कृतनित्यकर्मा **शिष्यैः स्वप्ने** [**निवेदिते**] आवेदिते [**मङ्गले**] मङ्गलरूपे [**मङ्गलं ब्रूयाद्** ] [9]भद्रमस्त्वित्येवाभिनन्देत । [**अमङ्गले**] अमङ्गलात्मनि **तु स्वप्ने** [10]**शान्तिं** [11]शान्तिकं **कुर्यात्** ॥

स्वप्नस्य मङ्गलामङ्गलत्वप्रदर्शनायाह[12]-

**मङ्गलामङ्गलं लेशादिदानीमुपदिश्यते ॥ १० ॥**

**लेशाद्** इति संक्षेपात् ॥ ९ - १० ॥

[1] A et C : प्रतिपादकाः pour प्रतिपादिकाः
[2] C omet भेदेन
[3] C : गतम् pour गदितम्
[4] B : क्रियाम् pour किम्
[5] B : कृताग्निको
[6] C omet मध्याद्
[7] C : प्रभातम्
[8] B: नित्यकर्म समाप्य pour कृतनित्यकर्मा
[9] C : भद्रमस्त्वित्येतावभिनन्देत
[10] B omet शान्तिं
[11] C omet शान्तिकं
[12] C omet आह

तत्रादौ शुभस्वप्नान् वक्ति—

शिखिगोवाजिशैलेभविमानाद्यधिरोहणम् ।
वारिराशिसरिद्गर्तसरः[1]पङ्कादिलङ्घनम् ॥ ११ ॥
[2]हेम[3]रूप्यमहारत्नसत्पुष्पफलयोगिता ।
मदिराज्यदधिक्षीरलाभो विष्ठानुलेपनम् ॥ १२ ॥
रक्तपानाप्लुती[4] जीवन्मीनसिंहनृभक्षणम् ।
राज्योपकरण[5]प्राप्तिः[6] सूर्येन्दुज्वलनत्विषः ॥ १३ ॥

स्वप्ने [**शिखि-गो-वाजि-शैल-इभ-विमानादि-अधिरोहणं**] मयूरवृषभाश्वगिरिगजविमानरथादावारोहणं, तथा [**वारिराशि-सरिद्-गर्त-सरः-पङ्कादिलङ्घनं**] अब्धिनदीश्वभ्रसरःकर्दमरुधिरह्रदादिलङ्घनम् एवमात्मकमन्यदपि[7] [8]'**इष्टप्रसिद्धय**' इत्यनेनाग्र[9]स्थितेन संबन्धः[10]। [11]**हेमरूप्ये**ति इष्टप्रसिद्धये भवतीति वाक्यशेषः। सुबोधमन्यत्[12]। [13]**रक्तपाने**ति। स्वप्ने [**रक्तपानाप्लुती**] [14]रक्तस्य असृजः पानमास्वादनम् [15]आप्लुतिश्च तेन स्नानं, [**जीवन्मीनसिंहनृभक्षणं**] जीवतां मत्स्यानां केसरिणां नृणां [16]वा भक्षणं, [**राज्योपकरणप्राप्तिः, सूर्येन्दुज्वलनत्विषः**] राज्योपकरणस्य अश्वच्छत्रचामरादेः[17] चन्द्रार्काग्निभासश्च प्राप्तिः इष्टप्रसिद्धये भवतीति प्राग्वदभि[18]संबन्धः ॥ ११ - १३ ॥

श्वेताभ्रं [19]स्वपुरं विद्युद्धिष्ण्यान्याखण्डलं धनुः ।
सिद्धामराप्सरोविप्रयज्ञवाटप्रदर्शनम् ॥ १४ ॥

[1] A : आसार pour सरः

[2] Es ms. C le *śloka* nº 12 se trouve après अग्रस्थितेन संबन्धः et le *śloka* nº 13 se trouve apès सुबोधमन्यत्; cf. note 10 et 12.

[3] A : रौप्य pour रूप्य

[4] B et C : रक्तपानप्लुती

[5] B : करणं pour करण

[6] B : प्राप्ति pour प्राप्तिः ; D : प्राप्त

[7] C : अन्यमपि pour अन्यदपि

[8] cf. *śloka* 17a

[9] C : गृह pour अग्र

[10] cf. note 2

[11] C omet हेमरूप्येति

[12] cf. note 2

[13] C omet रक्तपानेति

[14] C : रक्तसृजां वर्मम् pour रक्तस्य असृजः पानम्

[15] C omet आ

[16] B omet वा

[17] B ajoute च

[18] B : अपि pour अभि

[19] A : कर्बुरं ; B : खर्बुरं ; C : खदिरं

[1]**खपुरं** गन्धर्वपुरम्। **धिष्ण्यानि** ज्योतींषि। **आखण्डलं धनुः** [2]ऐन्द्रं कार्मुकम्। [**सिद्ध-अमर-अप्सरो-विप्र-यज्ञवाट-प्रदर्शनं**] सिद्धानां देवानाम् अप्सरसां ब्राह्मणानां यज्ञवाटस्य प्रदर्शनम् इष्टसिद्धये भवतीति संबन्धः॥ १४॥

किं च—

> समुद्रपानं सूर्येन्दुपावकग्रसनाश्रयाः[3]।
> वज्राद्यायुधसंसिद्धिः[4] [5]सिद्धद्रव्यसमागमः॥ १५॥

[**समुद्रपानम्**] अब्धेः पानम्। [**सूर्येन्दुपावकग्रसनाश्रयाः**] सूर्येन्दुपावकग्रसनं तेषु चावस्थितिः। [**वज्राद्यायुधसंसिद्धिः**] वज्रादिदिव्यायुधसमृद्धिः। [**सिद्धद्रव्यसमागमः**] सिद्धेन द्रव्येण रसायनादिना संगतं चेत्येतदपीष्टसिद्धये भवतीति[6]॥ १५॥

अपि च—

> महाब्जकर्णिकारोहः पावनक्षेत्रसंश्रयः।
> फलवत्क्षीरवद्वृक्षपुष्पितोपवनानि च॥ १६॥
> [7]रोदनागम्यगामि[8]त्वमित्यादीष्टप्रसिद्धये।

[**महाब्जकर्णिकारोहः**] महतोऽम्बुजस्य कर्णिकायामधिरोहणम्। [**पावनक्षेत्रसंश्रयः**] पुण्यक्षेत्राधिवासः। [**फलवद्-क्षीरवद्-वृक्ष-पुष्पितोपवनानि**] फलवतां क्षीरिणां[9] वृक्षाणां पुष्पितानां चोपवनानां दर्शनं प्राप्तिश्च। [**रोदनागम्यगामित्वम्**] [10]अश्रुपातागम्यगमने[11]। [**इत्यादि**] इत्येवमाद्यन्यदपि[12] [**इष्टप्रसिद्धये**] अभिप्रेतप्राप्तये कल्प्यत इति ज्ञेयम्[13]॥

अथाशुभ[14]स्वप्नः—

> खरोष्ट्रीसूकरारोहो[15] गर्तादिपतनं नतिः[16]॥ १७॥

[1] B : खर्बुरं
[2] C : ऐन्द्रार्कम् pour ऐन्द्रं कार्मुकम्
[3] C : आश्रयः pour आश्रयाः
[4] C : संसिर्द्धि pour संसिद्धिः
[5] C : सिद्धार्थं pour सिद्ध
[6] C omet इति
[7] A : रोहन pour रोदन
[8] C : न्य pour त्व
[9] C : क्षीराणां
[10] C : अश्रुत pour अश्रु
[11] C ajoute च
[12] B omet अन्यदपि
[13] B : ज्ञेयः
[14] C : शुभ pour अशुभ
[15] B : आरोहे pour आरोहो
[16] B : गर्तादिपतनानतिः

गोशकृद्द्रवपङ्काम्बुमज्जनं शुक्लविच्युतिः ।

**नतिः** देहसङ्कोचः । **गोशकृद्द्रवः** गोमयनिष्यन्दः । एवमादि स्वप्ने दृष्टम् [1]**असिद्धये** [2]सिद्धिहान्या एव कल्प्यत इत्यग्रस्थेन[3] संबन्धः ॥

लाक्षालवणलोहालिकाकक्रोष्टूरगागमः[4] ॥ १८ ॥

[5]रक्तासितस्रगालेपवासोभूषणधारणम् ।

**लोहम्**[6] आयसम् । **अलिः** भ्रमरः । [7]**क्रोष्टुः** सृगालः । [**रक्त-असित-स्रग्-आलेप-वासो-भूषण-धारणं**] रक्तानाम् अरुणवर्णानाम् असितानां च [8]कृष्णवर्णानां स्रग्विलेपन[9]वासोभूषणानां च धारणम् असिद्धये ज्ञेयमिति योज्यम् ॥

नृत्तवादित्रगीतादि[10] स्नेहाभ्यङ्गः[11] प्रधावनम् ॥ १९ ॥

स्फोटिताक्ष्वेलितोद्योगो[12] मृतसत्त्वनिषेवणम् ।

[**स्फोटिताक्ष्वेलितोद्योगः**] स्फोटितं मुखेनावयवैर्वा शब्दोत्पादनम्, [13]आक्ष्वेलितं [14]क्ष्वेलनिका तत्रोद्योगः तत्प्रवणत्वम्, **मृतसत्त्वनिषेवणम्** उपरतप्राणिनिषेवणं च [15]सिद्धिहानिकृद्भवति ॥

सूर्येन्दुपतनं शोषो वारिधेर्गिरिकम्पनम्[16] ॥ २० ॥

द्रुमधामपुरध्वंसस्तोरणेन्द्रध्वजक्षतिः ।

राज्योपकरणापायो घोरनीहारसंवृतिः ॥ २१ ॥

वियोनिमैथुनोद्योगो[17]ऽपक्वमांसाद्यसिद्धये ।

[**सूर्येन्दुपतनं**] चन्द्रार्कपातः । **वारिधेः शोषः** । [**गिरिकम्पनम्**] अद्रिचलनम् । [**द्रुम-धाम-पुर-ध्वंसः**] वृक्षगृहनगरविशरणम् । [**तोरणेन्द्रध्वजक्षतिः**] [18]तोरणस्य ध्वजयष्टेश्च [19]भङ्गः ।

[1] cf. *śloka* 22a
[2] C : सिद्धिहान्यै कल्प्यत
[3] C : अग्रस्थितेन pour अग्रस्थेन
[4] C et D : क्रोष्टुरगागमः
[5] A : राक्त pour रक्त
[6] B ajoute च
[7] B : क्रोष्टा
[8] B : कृष्णानां pour कृष्णवर्णानां
[9] C omet वासो
[10] A et C : गीतानि pour गीतादि
[11] C : स्नेहोऽभ्यङ्गः
[12] C : उद्योतो pour उद्योगो
[13] B : आक्ष्वेलनं
[14] B : क्ष्वेलितनिका
[15] C : सिद्धिः pour सिद्धि
[16] B : कल्पनम् pour कम्पनम्
[17] A : उद्वेगः pour उद्योगो
[18] B : तोरणध्यजयष्टेश्च
[19] C : भगवच्छत्रचामरादिनाशः

**[राज्योपकरणापायः]** छत्रचामरादिनाशः । **[घोरनीहारसंवृतिः]** [1]भीषणनीहारादिभवान्धकाराभिभवः । **[वियोनिमैथुनोद्योगः]** नितम्बिनीपरिष्वङ्गाभिसंधानं [2]विनापि रत्युद्यमः । **[अपक्वमांसादि]** स्विन्नमांसाशनम । एवमाद्यन्यदपि **[असिद्धये]** सिद्धिहानिफलकं[3] ज्ञेयम् ॥

[4]एषां निशान्ते ज्यायस्त्वं मध्यमत्वं निशार्धके[5] ॥ २२ ॥
प्रदोषे लघुतान्येषु त्रियामांशेषु कल्पना ।

**एषाम्** उक्तानां [6]शुभाशुभानां स्वप्नानां, **[निशान्ते]** प्रभातसमये दृष्टानां **[ज्यायस्त्वं]** ज्येष्ठत्वं [7]सातिशयफलत्वमित्यर्थः । **[निशार्धके]** अर्धरात्रे [8]तु **मध्यमत्वम्**। **[प्रदोषे]** निशारम्भे दृष्टानां स्वल्पफलत्वाद् **[लघुता]** लघुत्वम् । **[अन्येषु]** अन्येष्वपि **[त्रियामांशेषु]** रात्र्यंशेषु **[कल्पना]** अनयैव[9] कल्पनयाभ्यूह्यम्[10] ॥

त्रिगुणः स्वप्नः प्रभातावसरे [11]यदि दृष्टस्तदानीम्—

परः [12]साहस्रिको होमो घोरेणास्त्रेण वा भवेत् ॥ २३ ॥
[13]यवीयान् शतिकः शान्त्यै कल्प्योऽन्यत्र धिया बुधैः ।

सहस्रेण [14]निर्वृत्तः [15]**साहस्रिकः परः** प्रकृष्टो **होमः**। [16]प्रकृष्टत्वं च दुःस्वप्नफलविघातहेतुत्वात् । स च **[घोरेण]** बहुरूपेण **अस्त्रेण वा [भवेत्]** कार्यः । [17]यदा तु प्रदोषे दुःस्वप्नो दृष्टस्तदा **यवीयान् शतिकः शान्त्यै** — **[शान्त्यै]** तत्प्रशान्तये **[शतिकः]** शताहुतिः **[यवीयान्]** लघीयान् होमः कार्यः। **कल्प्योऽन्यत्र धिया बुधैः**—**अन्यत्र** तु [18]प्रातरर्धप्रहरापगमे [19]तावच्छिष्टायां रात्रौ दुःस्वप्नो यदि दृष्टस्तदानयैव कल्पनया मध्यः पञ्चशताहुतिर्न्यूनोऽधिको वा स्वप्नानुसारेण[20] **[बुधैः]** विद्वद्भिः **धिया** [21]स्वबुद्ध्या **[कल्प्यः]** अभ्यूह्यः ॥

[1] B : भीषणनीहारादिभवोऽन्धकारः ; C : भीषणान्धकाराभिभवः
[2] B : विना शेफसि सेक्त्युद्योगः
[3] B et C : पूर्वकं pour फलकं
[4] B et C : येषां pour एषां
[5] A et C : निशादले
[6] C : अशुभानां pour शुभाशुभानां
[7] C : समतिशय pour सातिशय
[8] C omet तु
[9] C omet एव
[10] C : अप्यूह्यम् pour अभ्यूह्यम्
[11] C : यद् pour यदि
[12] A, C et D : साहस्रको
[13] C omet le demi-*śloka* 24a
[14] B : निवृत्तः
[15] C : सहस्रकः
[16] C : प्रकृष्टः pour प्रकृष्टत्वं च
[17] B omet यदा à तदा
[18] B : प्रातरर्धप्रभातागमे ; C : प्रहरस्यार्धप्रहरापगमे
[19] B : तावच्छेषायां
[20] C ajoute एव
[21] B omet स्व

एवं प्रासङ्गिकीं दुःस्वप्नशान्तिमभिधाय प्रकृतमिदानीं [1]करणीलक्षणपूर्वकं मण्डललक्षणं वक्तुमाह—

ततः शुद्धेऽध्वरस्थाने करण्या सूत्रयेत्पुरम् ॥ २४ ॥
पुरायतित्रिगुणया क्षौमकार्पासशाणया ।

**ततो**ऽनन्तरं पादस्पर्शादिदोषशान्त्यै पञ्चगव्यगोमयगोलकाद्युपलेपनात्[2] [**शुद्धे**] शुचिनि [**अध्वरस्थाने**] यागगृहे [3]**करण्या** [4]वक्ष्यमाणलक्षणया [**पुरं**] [5]यागमण्डलं[6] **सूत्रयेत्**। कीदृश्या—[**पुरायतित्रिगुणया**] [7]पुरस्य मण्डलस्य [8]यावती आयतिर्दैर्घ्यं [9]ततस्त्रिगुणया [**क्षौम-कार्पास-शाणया**] कार्पासेन क्षौमशाणाभ्यां वा [10]तन्तुजादिना वा [11]निर्वृत्तया ॥

किं च—

सत्कन्या[12]वर्तितादोष[13]त्रेधात्रिगुणसूत्रया ॥ २५ ॥
[14]आढकीस्थूलया श्वेतधातुभस्मरजोभृता ।

[**सत्कन्यावर्तितादोषत्रेधात्रिगुणसूत्रया**] [15]शोभनाभिर्जात्युत्कर्षवतीभिर्द्विजकन्याभिः वर्तितम् अदोषं केशादिरहितम् [16]अनिम्नोन्नतं त्रेधा त्रिगुणं चाध्यात्मादि[17]विभक्तेन तन्तुत्रयेण त्रिगुणीकृतं सूत्रं यस्यां सा तया । एवं[18] [19]तिलकप्रमाणस्तदाकृति[20]र्द्रव्य[21]विशेषः [22]**आढकी** तुवरीशब्देन देशान्तरे प्रसिद्धः[23], तद्वत् स्थूलयेति । नवतन्तुना [24]सूत्रेण तावद्वेष्ट्यते यावदाढकीप्रमाणा[25] भवतीत्यर्थः । [**श्वेतधातुभस्मरजोभृता**] श्वेतधातोः मृत्कोलादेः[26] भस्मनो[27] वा रजसाभ्यक्तया ‘करण्या पुरं सूत्रयेद्[28]’ इति संबन्धः ॥

[1] B : करण pour करणी ; C : करणीय
[2] C : अवलेपनात् pour उपलेपनात्
[3] C omet करण्या
[4] cf. *śloka* 25a
[5] C omet याग
[6] C : यागमण्डले
[7] C : परपुरस्य
[8] C : यावतिरायतिर्दैर्घ्यं
[9] C : तत्र pour ततः
[10] C : तन्तुजातिभ्यां
[11] B : निवृत्तया
[12] A : कर्तृता ; B : कर्तिता
[13] B : अदोषं pour अदोष
[14] A : आढक pour आढकी
[15] B : शोभना pour शोभनाभिः
[16] C omet अ
[17] C : आत्माध्यादि pour अध्यात्मादि
[18] B omet एवं
[19] C : कालायस pour तिलक
[20] B : तदाकृतिः pour तदाकृतिः
[21] B : शब्द pour द्रव्य ; C : सव्य
[22] C : विशेषकः pour विशेषः
[23] C : प्रसिद्धः
[24] B omet सूत्रेण
[25] B : प्रमाणं pour प्रमाणा
[26] B : तालादेः pour कोलादेः
[27] B : भस्मना pour भस्मनो
[28] cf. *śloka* 24b

DĪKṢĀYĀGAŚĀLA




Les petits cercles contenant un chiffre figurent les *kalaśa*, dont les divinités correspondantes sont indiquées au verso.

# DĪKṢĀYĀGAŚĀLĀ

1 Sūrya

2 Śāntikalā
3 Vidyākalā — *Kalā*
4 Nivṛttikalā
5 Pratiṣṭhākalā

6 Nandin
7 Mahākāla
8 Bhṛṅgin
9 Vināyaka
10 Ṛṣabha — *Gaṇa*
11 Skanda
12 Devī
13 Caṇḍa

14 Vāstupati
15 Lakṣmī

16 Indra
17 Agni
18 Yama
19 Nirṛti
20 Varuṇa — *Lokapāla*
21 Vāyu
22 Kubera
23 Īśāna

24 Brahman
25 Viṣṇu
26 Gaṇapati
27 Guru

28 Darpaṇa
29 Kumbha
30 Vṛṣabha
31 Cāmara — *Aṣṭamaṅgala*
32 Svastika
33 Lakṣmī
34 Śaṅkha
35 Dīpa

36 Vajra
37 Śakti
38 Daṇḍa
39 Khaḍga
40 Pāśa — *Daśāyudha*
41 Kavaca
42 Gadā
43 Śūla
44 Padma
45 Cakra

A : *Gaurīlatāmaṇḍala*

A. 1 Īśāna
,, 2 Tatpuruṣa
,, 3 Aghora
,, 4 Vāmadeva
,, 5 Sadyojāta

B : *Iṣṭaliṅga*

C : *Iṣṭamūrtimaṇḍala*

C. 1 Ananta
,, 2 Uttama
,, 3 Śivottama
,, 4 Ekanetra
,, 5 Ekarudra
,, 6 Trimūrti
,, 7 Śrīkaṇṭha
,, 8 Śikhaṇḍin

D : *Acāryābhiṣekamaṇḍala*

D. 1 Īśāna
,, 2 Tatpuruṣa
,, 3 Aghora
,, 4 Vāmadeva
,, 5 Sadyojāta

E : *Śivakumbha*

F : *Vardhanī*

G : *Homakuṇḍa*

H : *Ācārya*

I : *Ācārya*

J : *Aṅkurārpaṇa*

K : *Pañcagavya*

कृत्वा पूर्वापरां रेखां तन्मध्ये दक्षिणोत्तराम् ॥ २६ ॥
तदर्धेन [1]विदिक्चिह्नान्युन्मील्य चतुरश्रकम् ।
भवेदभिमतं[2] क्षेत्रं दिक्षु सूत्रनिपातनात्[3] ॥ २७ ॥

" [4]ध्रुवपुष्यादिवेधेन छायया वा खरद्युतेः । दिक्सूत्राण्युपलभ्यादौ " इत्युक्तत्वाद् दिक्सूत्रोपलम्भमेव[5] स्मारयति । तत्र [**पूर्वापरां**] पूर्वापरदिक्प्रसृतसूत्रप्रतिबिम्बरूपां **रेखां** [**तन्मध्ये**] [6]कृतमध्यचिह्नपृष्ठे [**दक्षिणोत्तरां**] दक्षिणोत्तरायतां सूत्रप्रतिबिम्बरश्मिकामेव रेखां [**कृत्वा**] विधाय [7]ततः [**तदर्धेन**] उभयोः सूत्रयोरर्धेन [**विदिक्चिह्नानि**] विदिशां चिह्नानि मत्स्याकृतीनि [**उन्मील्य**] उत्पाद्य तदुपरि [**दिक्षु**] दिक्चतुष्टये [**सूत्रनिपातनात्**] सूत्रास्फालनाद् यावत्प्रमाणकमेतत् **क्षेत्रम् अभिमतं** [**भवेत्**] [8]तावद्वर्तनाद् साधयेदित्यर्थः ॥ २६ - २७ ॥

एवं चतुरश्रसिद्धौ[9] सत्यां पद्मावर्तमाह—

वेदभक्तेऽब्ज[10]कण्ठार्धे चतुर्वृत्तावधि स्थितम् ।
कर्णिकादिदलाग्रान्तं[11] पङ्कजाङ्गचतुष्टयम् ॥ २८ ॥

[**अब्जकण्ठार्धे**] चिकीर्षित[12]पद्मक्षेत्रस्य व्योम[13]रेखोल्लेखनावच्छिन्नमानस्य यः कण्ठो विदिक्प्रसृतसूत्ररूपस्तदर्धे [**वेदभक्ते**] वेदेन[14] चतुर्धा भक्ते सति व्योमरेखया सह चत्वारि वृत्तानि कुर्यात् । आदौ व्योमरेखार्थं बहिर्वृत्तं दत्त्वा [15]तदन्तःस्थमन्यत्त्रयं दद्यादित्याशयः । [**चतुर्वृत्तावधि स्थितं**] तथाविधवृत्तचतुष्टयान्तं [16]यावत् [**पङ्कजाङ्गचतुष्टयं कर्णिकादिदलाग्रान्तं**] कर्णिकाकेसरदलदलाग्रादिविभागीकरणं साधारणमुक्तम् ॥ २८ ॥

1 C : विदित्वाह्वान्युन्मील्य
2 C : मुखं pour मतं
3 A ajoute au texte le demi-*śloka*: ध्रुवपुष्यादिवेधेन छायया वा खरद्युतेः ।
4 cf. *Kriyāpāda, paṭala* 7, *śloka* 7.
5 B : उपलभ्यमेव ; C : उपलम्भं वा
6 B omet le passage कृतमध्यचिह्नपृष्ठे à रेखां
7 C : ततोभयब्रह्मसूत्रयोरर्धेन
8 B : तावद्वर्तयेत् सिद्धयेदित्यर्थः ॥
9 B : सिद्धयै pour सिद्धौ
10 A et C : कर्ण pour कण्ठ
11 B : आक्रान्तं pour अग्रान्तं
12 C : पद्मं pour पद्म
13 B : लेखोल्लेखन pour रेखालेखन
14 C omet न
15 B : तदधःस्थम् pour तदन्तःस्थम्
16 B omet यावत्

इदानीं [1]कतिदलपद्मं कुर्यादित्याह—

**तदष्टपत्रं[2] द्वात्रिंशत्केसरं करमानकम् ।**
**पुरे द्वित्रिचतुर्हस्ते [3]वीथीशोभा तु शेषतः ॥ २९ ॥**

[**तत्**] तच्च पद्मं [**द्वात्रिंशत्केसरं**] चतुष्षष्टिकेसरम् [**अष्टपत्रं**] दलाष्टकं **द्वित्रिचतुर्हस्ते** [पु मण्डले [**करमानकं**] हस्तप्रमाणकं कार्यम्। तेषां यद्द्वित्रिचतुर्हस्तानां हस्तप्रमाणपद्मकरणाद् [**शेष** अवशिष्टे भागे[4] [**वीथीशोभा**] वीथिशोभोपशोभादिकं कुर्यात्। अत्र [5]च कस्य कियता वीथीशोभा भवतीति वक्ष्यमाणमहामण्डलस्यापि विभागस्याश्रुतत्वात्[6] संहितान्तरश्रुतक्रमोऽवेक्षणीयः[7] ॥ २९ ॥

**पञ्चकादिवसुप्रान्ते द्वात्रिंशदनुपानतः ।**
**वेदवृत्तोदरं पीठं [8]तदेकं चाल्पकेऽध्वरे ॥ ३० ॥**

[**पञ्चकादिवसुप्रान्ते**] पञ्चषट्सप्ताष्टहस्तके [9]यागे [**द्वात्रिंशदनुपानतः**] यथाक्रमं षड्विंशत्य विंशतित्रिंशद्द्वात्रिंशदङ्गुलं **पीठम्** इति [10]परमेश्वरासनं पद्मं कुर्यात् । [**वेदवृत्तोदरं**] वेदसंख्यालक्ष प्रागुक्तवत् कर्णिकाकेसरविभागदर्शिभिश्चतुर्भिर्भागैर्वृत्तं कृतावर्तनमुदरं गर्भो यस्य तत्तथा । [**तत्**] [**एकम्**] एकमेव पद्मम् [**अल्पकेऽध्वरे**] स्वल्पयागे कुर्यात्। महति वक्ष्यमाणवद् बहूनि कार्याणि ॥३

इदानीं कामनाभेदेन [11]दलाकृतिवैचित्र्यमाह—

**अभ्युन्नतदलप्रान्तं भूतये मुक्तये स्फुटम् ।**
**[12]स्मरादियागे तीक्ष्णाग्रं दिग्भृतां मन्थराग्रकम्[13] ॥ ३१ ॥**

[**अभ्युन्नतदलप्रान्तम्**] अभितः समन्तादुन्नतो दलप्रान्तो यस्य तत् तथाविधम्बुजं [**भूत** [14]सिद्ध्यर्थं '[15]हितम्' इत्यग्रस्थेन संबन्धः । [16]**मुक्तये स्फुटम्** [17]इत्यनिम्नोन्नताग्रं सममिति याव

[1] C : कतिदलं
[2] A et B : पत्र pour पत्रं
[3] A : विधिशोभा नु शेषतः
[4] B : अवशिष्टभागे
[5] C omet च
[6] C : श्रुतत्वात् pour अश्रुतत्वात्
[7] B : अपेक्षणीयः
[8] A : तदेकां
[9] C : योगे
[10] C : पारमेश्वरमासनं
[11] B : दलकृति pour दलाकृति
[12] B : स्मरन्ति यागे
[13] A : दिग्भृतामन्थरात्मकम् ; B : दिग्भृतामन्तराग्रकम् ; C : दिग्भृतां मन्दराग्रकम्
[14] B : सिद्ध्यर्थमभिहितं
[15] cf. *śloka* 32b.
[16] C : मुक्त्यै उन्नतम्
[17] B : इति निम्नोन्नतासु सममिति

[**स्मरादियागे**] स्मरयागनिमित्तम् आदिग्रहणात् [1]सौभाग्यप्रददेवताविशेषयागेषु[2] [**तीक्ष्णाग्रं**] [3]सुशितप्रान्तवत् कुर्यात् । [**दिग्भृतां**] लोकपालानां तु **मन्थराग्रकं** विततपुरोभागमा[4]भुग्नप्रान्तं चेत्यर्थः ॥ ३१ ॥

[5]**गोकर्णाग्रकमीशानां गणानां मण्डलाग्रकम् ।**
**अश्वत्थदलसंस्थान[6]पत्रकं हितमम्बुजम् ॥ ३२ ॥**
**गौरीवागीश्वरादीनां ग्रहाणामधिपोक्तवत् ।**
**गणेषु चण्डनाथस्य गजवक्त्रस्य चेष्यते ॥ ३३ ॥**

[**गोकर्णाग्रकं**] गोकर्णसदृशप्रान्तम् [**अम्बुजं**] पद्मम् **ईशानां** विद्येश्वराणां यागे **हितम्** [7]अभ्युदयावहम् । **गणानां** तु [8]**मण्डलाग्रकं** वृत्तप्रान्तमित्यर्थः । [**गौरी-वाग्-ईश्वरादीनां**] गौरीयागे [9]वाचश्च भगवत्या वागीश्वर्याः पूजायाम् ईश्वराणां रुद्राणाम् अन्येषां च [**अश्वत्थदलसंस्थानपत्रकम्**] अश्वत्थपत्राकृतिदलं पद्मं हितम् । [**ग्रहाणां**] ग्रहयागे तु [**अधिपोक्तवत्**] लोकपालोक्तवन्मन्थराग्रकं व्याभुग्नदलप्रान्तमिति यावत् । इदमेव **गणेषु** पूज्येषु कुर्यादित्ययं गणपूजायां द्वितीयो दलसंस्थानभेदः । "गणानां मण्डलाग्रकम्" इत्यनेनैकस्य पूर्वमुक्तत्वात्[10] । [**चण्डनाथस्य**] चण्डेश्वरस्य [**गजवक्त्रस्य च**] गणपतेश्च यागे [11]ईदृशमेव **इष्यते** मन्थराग्रकमेव शास्त्रेऽभ्यनुज्ञायते ॥ ३३ - ३२ ॥

मुख्यपद्मस्य तावद् वर्णविभागं वक्तुमाह—

**हेमाभकर्णिकं [12]नीलनवबीजं सितच्छदम् ।**
**पीतरक्तसितोदग्रकेसरालंकृतोदरम् ॥ ३४ ॥**
**चित्र[13]दिग्गात्रकं रक्तकोणाब्जं नीलकीलकम् ।**
**पीठं माहेश्वरं कुर्यान्मण्डलं चतुरश्रकम् ॥ ३५ ॥**
**पद्ममानार्धनिर्वृत्तचतुर्द्वारो[14]पशोभितम् ।**

[15]एषां [16]मध्ये **यन्माहेश्वरं पीठं** शिवयागाब्जं तदेवंविधं **कुर्यात्** । कीदृशम्—[**हेमाभकर्णिकं**]

1 B : सौम्य pour सौभाग्य
2 C omet षु
3 C : सुशितप्रान्तं रोदिनां ग्रहाणामधिपो कुर्यात्
4 C omet भु
5 A : गोकर्ण्याग्रकमीशाङ्गं
6 A : संस्थानं pour संस्थान
7 B : शुभदावहम्
8 C : मण्डलाग्रं
9 C : वागीश्याश्च भवत्या
10 C : उक्त्वा च pour उक्तत्वात्
11 B : इदृशं वेष्यते
12 A et C : नीलं नवबीजं
13 B : दृग् pour दिग्
14 B : भ pour प
15 B et C : येषां pour एषां
16 C : मध्यान्माहेश्वरं

काञ्चननिभकर्णिकं **[नीलनवबीजं]** नीलानि इन्द्रनीलभासभाञ्जि नव बीजानि यस्य तत्तथा। **सितच्छदं** शुक्लदलम्। **[पीत-रक्त-सित-उदग्रकेसर-अलंकृत-उदरम्]** [1]मूलदलादारभ्य पीतरक्तसितैरुन्नताग्रैश्च केसरैरलंकृतमुदरं गर्भो यस्य। **[चित्र-दिग्-गात्रकं]** चित्राणि अनेकवर्णानि दिक्षु गात्राणि पीठरचना-विशेषो यस्य। **[रक्तकोणाब्जं]** रक्तानि च कोणाब्जानि यस्य। **[नीलकीलकं]** नीलाश्च कीलकाः संधानकीलकाः प्रतिकोणं [2]द्विद्विसंख्यया स्थिता यस्य। यदुक्तम्—

" संधानकीलकाः कार्या अतसीपुष्पसंनिभाः। " इति।

तच्चैतत्पीठं **[चतुरश्रकं]** चतुरश्रमथवा **मण्डलं** वृत्तं **[पद्ममानार्ध-निर्वृत-चतुर्द्वार-उपशोभितं]** पद्ममानार्धेन कृतैश्चतुर्भिर्द्वारैः शोभितं कुर्यात् ॥ ३४ - ३५ ॥

कामानुगुण्येन [3]मण्डलान्तरसंस्थानवर्णविभागान् वक्तुमाह—

**चण्डेशामृतविद्यानां श्वेतमर्धेन्दुसंस्थितिः ॥ ३६ ॥**
**रक्तं सौभाग्यविद्यानां योनि[4]दृक्कार्मुकोपमम् ।**

**[चण्डेशामृतविद्यानां]** [5]चण्डेश्वरस्यामृतविद्यानां च यागे **[श्वेतमर्धेन्दुसंस्थितिः]** श्वेतमर्धेन्दुसंस्थानं च मण्डलं कार्यम्। **सौभाग्यविद्यानां** वशीकरणाकर्षणकारिणीनां **रक्तम्** उज्ज्वलं **[योनि-दृक्-कार्मुकोपमम्]** अश्वत्थपत्रलोचनचापसंस्थानं च कुर्यात् ॥ ३६ ॥

किं च—

**आप्यायने घटाकारं वृष्ट्यर्थं पूर्णमण्डलम् ॥ ३७ ॥**
**मत्स्योदरं सितं वापि [6]कूर्मजन्माथवा हितम् ।**
**स्ववर्णमीश्वरादीनां [7]यथाकाममथापि वा ॥ ३८ ॥**

**[घटाकारं]** कलशोदरसंस्थानम् **[आप्यायने]** आप्यायनार्थम्। **[वृष्ट्यर्थं]** [8]वृष्टिनिमित्तं तु **[पूर्णमण्डलं]** पूर्णेन्दूदरस्थम् [9]अर्थाच्चेषत्पीतं[10] सुधांशुवर्णं कुर्यात्। उभयत्राप्याप्यायनस्य साध्यत्वात्। **[अथवा]** यद्वा **वृष्ट्यर्थं** [11]**मत्स्योदरं** [12]मत्स्योदरस्थं **[कूर्मजन्म]** कूर्मोदरस्थं **वा सितं** पद्मं **हितम्**

[1] C : मूलादारभ्य
[2] B : द्विद्विसंख्याः स्थिता
[3] C : मण्डलानां pour मण्डलान्तर
[4] A : भृत् pour दृक् ; B : दिक्
[5] C : चण्डेशस्य pour चण्डेश्वरस्य
[6] C : कूर्मजन्माधिवाहिकम्
[7] C : यथोक्तमथवापि वा
[8] B : पुष्टिनिमित्तं
[9] B : कुर्यात् pour अर्थात्
[10] B : एतत्पीतं pour ईषत्पीतं
[11] B omet मत्स्योदरं
[12] C omet मत्स्योदरस्थं

अभिमतदं[1] भवति । **ईश्वरादीनाम्** इति विद्येश्वरादीनां [**स्ववर्णैः**] "हेमानलतमालालि[2]" इत्यादिना यागप्रकरणोक्त[3]प्रातिस्विकवर्णसदृशमेकैकस्य पद्मं कुर्यात् । अथ **वा** स्व[4]स्वर्णानपेक्षयैव [**यथाकामं**] कामनानुगुण्येन [5]सितपीतरक्तकृष्णादि कार्यम् ॥ ३४ ॥

रजसां प्रकृतिमाह—

**रेखा सच्छालिपिष्टेन [6]सिता रक्ताद्रिधातुना ।**
**[7]हरिद्रकादिना पीता कृष्णा दग्धयवादिना ॥ ३९ ॥**

भुक्तिमुक्तिविषयाणां यागानां **सिता रेखा** [**सच्छालिपिष्टेन**] शुक्लशालितण्डुलपिष्टेन कार्या । **रक्ता** तु [**अद्रिधातुना**] पर्वतधातुना सिन्दूरगैरिकादिना । **पीता** [**हरिद्रकादिना**] हरिद्राहरितालादिना । **दग्धयवादिना कृष्णा** ॥ ३९ ॥

सिद्धिनिमित्तं तु—

**मुक्ताविद्रुमहेमाद्यैर्भूतिसन्मङ्गलोदये[8] ।**
**[9]चिताभस्मेष्टकाङ्गारप्रमुखैश्चाभिचारके[10] ॥ ४० ॥**

[**भूतिसन्मङ्गलोदये**] भूत्यभ्युदयकामैः[11] सन्मङ्गलाविर्भावनेच्छुभिश्च [**मुक्ताविद्रुमहेमाद्यैः**] मुक्ताविद्रुमहेमवैडूर्यैः[12] सितादिरेखाः कार्याः । [**आभिचारके**] मारणोच्चाटनाद्यभिचारकर्मणि [**चिताभस्मेष्टकाङ्गारप्रमुखैः**] [13]चिताभस्मना [14]तत्रत्येन पक्वेष्टकाङ्गारादि[15]चूर्णेन च रेखाः कार्याः ॥ ४० ॥

तासां स्थौल्यवैपुल्यमानमन्तरमानं चाह—

**रेखाङ्गुलोन्नता पृथ्वी [16]प्राग्यवोना यवान्तराः ।**
**तदन्या विषमास्ताश्च मुक्तये भुक्तये समाः ॥ ४१ ॥**

1 B : अभिमतं
2 cf. *Kriyāpāda, paṭala* 2, *śloka* 21b.
3 B : प्रतिबिम्बकवर्ण pour प्रातिस्विकवर्ण
4 C omet स्व
5 C : सितरक्तपीतकृष्णादि
6 A : सितरक्तादिधातुना ; C : सिता रक्तादिधातुना
7 B : हरिद्राकृतिना
8 B : सन्मङ्गलादये pour सन्मङ्गलोदये
9 B : सिता pour चिता ; D : चिते
10 B : आभिचारिके pour आभिचारके
11 B : कामौ pour कामैः
12 B : वैदूर्यैः pour वैडूर्यैः
13 B : सितभस्मना
14 B : तद्वत् pour तत्रत्येन
15 C : अङ्गारकादि pour अङ्गारादि
16 A : प्राग्यवोना यवान्तरा ; B : प्राग्यवोनयवान्तरा ; C : प्राग्ययेन यवान्तरा ; D : प्राग्ययोना यवान्तरा

**[प्राक्]** प्रागादि आद्या **रेखा अङ्गुलोन्नता** **[पृथ्वी]** विपुला [1]च देया । **[तदन्याः]** तस्याः सकाशादन्या यास्ताः **[यवोनाः]** यवेन न्यूनाः **[यवान्तराः]** यवप्रमाणव्यवधानाश्च कार्याः । **[ताश्च मुक्तये विषमाः]** आसां च वैषम्यं मुक्त्यर्थिनां यागे कार्यम् । **[भुक्तये]** [2]भुक्त्यर्थिनां तु सर्वा एव **समाः** कर्तव्याः ॥ ४१ ॥

इदानीं मण्डले कौसुमी पूजा कियद्विस्तारोच्छ्राया कर्तव्येत्याह—

[3]तन्त्रोक्तविधिना शंभोः कर्णिकांशप्रविस्तरा[4] ।
कार्या पद्मोच्छ्रिता पूजा [5]कामे हीनाधिकापि वा ॥ ४२ ॥

**[तन्त्रोक्तविधिना कर्णिकांशप्रविस्तरा]** प्रतितन्त्रमुक्तो यः कर्णिकांशस्य [6]विस्तारस्तावत्प्रमाण[7]विष्कम्भा स्रगादिभिः [8]**पूजा कार्या** । क्वचित्किल द्वादशाङ्गुलं पद्ममाम्नातम् । अन्यत्र तु षोडशाङ्गुलम् । क्वापि च विंशत्यङ्गुलम् । इह पुनश्चतुर्विंशत्यङ्गुलादारभ्य द्वात्रिंशदङ्गुलान्तं [9]मुख्यपद्ममानमुक्तम्[10] । परिवारपद्मान्यपि सूक्ष्ममानकानि वक्ष्यति । [11]एकैकस्य च [12]स्वस्वमानेन यावान्कर्णिकाभागस्य विस्तारस्तावती [13]विस्तीर्णा पूजा विधेया । **[पद्मोच्छ्रिता]** [14]सरोरुहप्रमाणेनोच्छ्रिता षट्सप्ताङ्गुलमानेत्यर्थः । एतन्मानं भुक्ति[15]मुक्तिविषयम् । **[कामे]** काम्ये पुनः **[हीनाधिकापि]** न्यूनाधिकविस्तारोच्छ्रयापि कर्तव्या ॥ ४२ ॥

प्रागुक्तानुक्रमेणावरणमाह—

बहिः पीठाद्यजेद्देवान् पुरादस्त्राणि पूर्ववत् ।
[16]मतान्तराद्वा पत्युर्हि धाम नाभात्यनावृतम् ॥ ४३ ॥

**पीठात्** परमेश्वरासनभूतात् पद्माद् **बहिः देवान्** विद्येश्वरादीन् **[यजेद्]** अर्चयेत् । बाह्यावरणसहितात्[17] **पुराद्** मण्डलाद् **बहिः अस्त्राणि** वज्रादीनि । **पूर्ववद्** इति शक्राग्नियमादिहस्तनि-

[1] B omet च
[2] C : भूत्यर्थिनां
[3] B : तत्र pour तन्त्र
[4] A : प्रविस्तरे pour प्रविस्तरा
[5] C : कारिणी नायिकापि वा
[6] C : विस्तरः pour विस्तारः
[7] B : प्रमाणी pour प्रमाण
[8] B : पूर्वा pour पूजा
[9] B : मुख pour मुख्य ; C : मुख्यम्
[10] C omet पद्ममानमुक्तम्
[11] C : एकस्य pour एकैकस्य
[12] C : स्वात्ममानेन यावद् pour स्वस्वमानेन यावान्
[13] B : विस्तीर्णपूजा
[14] B : सरोहा pour सरोरुह
[15] B omet मुक्ति
[16] En ms. B ce demi-*śloka* se trouve après आवरणपूजाया उपपत्तिमाह ; cf. page 135, note 9.
[17] B : सहितान् pour सहितात्

विष्टत्वेन । तथा [1]ह्युक्तं प्राक्—“ [2]एवमाशाभृतोऽपि स्युः किं तु वज्रादिपाणयः ।” इति[3] ।

**मतान्तराद्वा** इति । [4]श्रीमन्**मतङ्गा**द्युक्तक्रमेण [5]विविक्तान्येवास्त्राणि वर्तयित्वा बहिर्मण्डलात् पूजयेत् । [6]श्रीमत्**स्वतन्त्रा**द्युक्तरीत्या[7] वास्त्रावरणस्थान[8]र्चयेत् । आवरणपूजाया उपपत्तिमाह[9]—**पत्युर्हि धाम नाभात्यनावृतम्** इति । [10]**हि** यस्मात् [**पत्युः**] पतिशब्दाभिधेयस्य[11] कस्यचिद् **धाम** गृहम् **अनावृतम्**[12] अङ्गवीथ्या[13] विना कृतं **नाभाति**। किं पुनः परमेश्वरस्यावास[14]स्थानं [15]यन्मण्डलं तत्कथम-परिवृतं [16]शोभेत । तस्माद् [17]आवरणैर्युक्तमेव कर्तव्यमिति तात्पर्यम् ॥ ४३ ॥

अतः—

**[18]एकावरणको यागः सर्वावरणकोऽपि वा ।**
**सर्वकामोपयोगित्वादुच्यते [19]सार्वकामिकः ॥ ४४ ॥**

सर्व[20]कामसाधकत्वात्सर्वावरणकस्तावन्मुख्यो [21]यागः कार्यः । गृहविस्तारासंभवे त्वेकावरण-कोऽप्याम्नातः ॥ ४४ ॥

एकावरणत्वे च पर्यायेण सर्वावरणेभ्यः फलभेदमाह—

**ज्ञानावाप्त्यै पतिप्रान्तो [22]गणान्तो दिव्यसिद्धये ।**
**मध्यमाधमसिद्ध्यर्थं [23]लोकपालायुधावधि ॥ ४५ ॥**

[**ज्ञानावाप्त्यै**] ज्ञानप्रेप्सुना [**पतिप्रान्तो**] विद्येश्वरावरण[24]युक्तो यागः कार्यः । [**दिव्यसिद्धये**] दिव्यसिद्धीच्छुना [**गणान्तो**] गणैकावरणयुक्तः । [**मध्यमाधमसिद्ध्यर्थं**] मध्यमाधमसिद्ध्यर्थिना [**लोकपालायुधावधि**] वज्रादि[25]लोकपालायुधावधिकैकावरणः ॥ ४५ ॥

[1] B : अपि pour हि
[2] cf. *Kriyāpāda, paṭala* 3, *śloka* 23b.
[3] B : omet इति
[4] C : श्रीमत्किरणाद्युक्तक्रमेण
[5] B : विविक्तान्यस्त्राणि
[6] B : omet श्रीमत्
[7] B : नीत्या pour रीत्या
[8] B : आवरणान् pour आवरणस्थान्
[9] Le demi-*śloka* 43b se trouve ici en ms. B ; cf. page 134, note 16.
[10] B : पत्युर्हीति ; C : हीति
[11] B ajoute सर्वस्य
[12] B : अनावरणम्
[13] B : अङ्गवीथीं
[14] C : आवासं pour आवास
[15] C : मण्डलं pour यन्मण्डलं
[16] B : शोभते
[17] C : आवरणयुक्तं कार्यमिति
[18] B et C : एकावरणिको
[19] A : सार्वकामिकम् ; C : सार्वकामितः
[20] B : कर्म pour काम
[21] B : यागः । कार्यगृहविस्तारासंभवे
[22] C : गुणान्तो
[23] A : लोकापाला यथाविधि
[24] C : एकावरण pour आवरण
[25] C : लोकापालास्तैः कारणैः ॥

मिश्रे तु त्र्यावृतिः कामे चतुरावृतिरेव[1] वा ।
कामदस्य प्रभोर्यागः कामिके शक्तिमण्डले ॥ ४६ ॥

[**कामिके शक्तिमण्डले**] सकलकामदत्वात्कामिकं शक्तीनां मातॄणां संबन्धि यन्मण्डलं तत्र [**मिश्रे कामे**] युगपदनेककामिके[2] सिद्ध्यै [**त्र्यावृतिः चतुरावृतिः वा**] त्र्यावरणश्चतुरावरणो [3]वा यागः कार्यः। तन्मध्ये च [**कामदस्य प्रभोर्यागः**] सर्वकामप्रदो भगवान् पूज्यः। उक्तं [4]हि श्रीमत्**कामिके**—

"मध्ये कामेश्वरो देवस्ततश्चाष्टाष्टक[5]क्रमात् ।
शक्तिमण्डलमभ्यर्च्य सर्वान्कामानवाप्नुयात् ॥" इति ।

[6]अथ पद्मवर्तनार्थं प्रमाणविधिमाह—

द्वात्रिंशदङ्गुलादूर्ध्वं प्रकृतावपि नाम्बुजम् ।

[**प्रकृतावपि**] प्रकृतिः मुख्ययागः तत्रापि **न** [**द्वात्रिंशदङ्गुलाद्**] [7]अङ्गुलद्वात्रिंशत **ऊर्ध्वम्** [**अम्बुजं**] पद्मं कुर्यादिति नियमः। अत एवोक्तं प्राक्—

"[8]पञ्चकादिवसुप्रान्ते द्वात्रिंशदनुपानतः।" इति ।

अतस्तस्यैव मुख्ययागस्य वर्तनोच्यते—

पञ्चवर्गमहापीठे दन्तद्वारोपशोभिते ॥ ४७ ॥
सत्र्यंशमङ्गुलं हित्वा तत्र पद्मावृतेः कृते[9] ।
पीठं चाब्जदलत्र्यंशं [10]विस्तृतांशचतुष्टयम् ॥ ४८ ॥ ॥
देवाम्बुजाष्टकं कुर्यादपीदमिह लक्षणम् ।
[11]किंत्वावृतित्रयादैशमष्टांशेनातिरिच्यते ॥ ४९ ॥
तदन्तराणि द्वात्रिंशद्दिक्षु द्वाराणि पूर्ववत् ।

[1] A : आवृत्तिरेव pour आवृत्ति
[2] C : कामिक pour कमिके
[3] C omet वा
[4] B omet हि
[5] B : अष्टकः pour अष्टक
[6] B omet अथ
[7] C : अङ्गुलाद् pour अङ्गुल
[8] cf. *Kriyāpāda, paṭala* 8, *śloka* 30a.
[9] A et B : पद्मावृतिस्थिता
[10] B : विस्तृतांशं चतुष्टयम्
[11] A et B : कृत्वा pour किंतु

[1]निर्वर्त्य कल्पयेच्छोभां यत्र यत्रोपपद्यते[2] ॥ ५० ॥
लोकभर्तृषु तद्धाम्नः सत्येशगरुडध्वजौ ।
स्वास्त्रमूलोर्ध्वगौ पुण्यौ [3]विद्यादावुक्तवद्बहिः ॥ ५१ ॥

[**पञ्चवर्गमहापीठे**] पञ्चानां वर्गस्तावद्भिरेव गुणितं, पञ्चविंशतिसंख्या इति यावत्, तावत्संख्यैः पद्मैर्यन्महापीठमण्डलं मुख्यं तस्मिन् [**दन्तद्वारोपशोभिते**] दन्तसंख्यैः द्वात्रिंशता द्वारैरुपशोभिते प्रागुक्तमानं[4] द्वात्रिंशदङ्गुलं पद्मं कुर्यात्। [5]सत्र्यंशमङ्गुलं च पद्मावृतेः व्योमरेखायाः कृते[6] कल्पनीयम्। [7]तदयमत्र तात्पर्यार्थः। प्रागुक्त[8]रीत्याष्टहस्तान्तत्वं मुख्ययागस्य [9]यन्नियमितं ततो द्विनवत्यधिकं शतमङ्गुलानां यद्भवति तत्र [10]द्विद्यङ्गुलाः षण्णवतिर्भागाः कार्याः। तेभ्यः षोडशभिर्भागैर्मध्ये पद्मम्। यत्र चतुर्भागमाना कर्णिका केसरदल[11]संधिदलाग्रदेशा[12] द्विद्विभागमानाः[13]। एवं च [**अब्जदलत्र्यंशं**] मुख्यस्य[14] पद्मस्य दलमध्यं[15] षोडशाङ्गुलं [16]तत्र त्र्यंशं सत्रिभागमङ्गुलपञ्चकम्। ततः **सत्र्यंशमङ्गुलं पद्मावृतेः** व्योमरेखायाः **कृते हित्वा** संत्यज्य शिष्टं यद् [**विस्तृतांशचतुष्टयम्**] अङ्गुलचतुष्टयं तावता मानेन[17] तस्या एव पद्मावृतेर्बहिः प्रागुक्तव्यवधानक्रमेण[18] रेखाचतुष्टयरचितं[19] [20]**पीठम्** इति पद्माश्रयभूत[21]गात्रपादुकाद्युपशोभितं रचनाविशेषं कुर्यात्। [**इदमपि लक्षणं देवाम्बुजाष्टकम्**] एवमेव[22] विद्येश्वरगणेश्वरलोकपालाख्यैर्देवैरधिष्ठेयं[23] पद्माष्टकम् [**इह**] **कुर्यात्**। विद्येश्वरावरणे यत्पद्माष्टकं यच्च गणेश्वरावरणे लोकपालावरणे च तस्याब्जाष्टकत्रयस्य[24] स्वसात्स्वसान्मानात् षष्ठांशं चतुर्दिक्षु [25]पीठमवस्थाप्य चतुर्षु चतुर्ष्वंशेषु तानि पद्मानि कार्याणीत्याशयः। **किं तु** [**आवृतित्रयात्**] तेभ्यस्त्रिभ्य आवरणेभ्यो मध्याद् **ऐशम्** ईशानं विद्येश्व-

[1] A et B : निवृत्य

[2] C : यत्रोपलभ्यते

[3] A et D : बहिर्विद्यादि पूर्ववत्; B (en note) : बहिर्विद्यादि पूर्ववदिति पाठः ; C : बहिर्द्वन्द्वादि पूर्ववत्

[4] B omet नं

[5] C : सा pour स

[6] B : कृतेः

[7] B : तदत्र तात्पर्यम्

[8] B : नीत्या pour रीत्या

[9] C : यन्नियमनं

[10] B : द्व्यङ्गुलाः pour द्विद्व्यङ्गुलाः

[11] B : ग्रन्थि pour संधि

[12] B : देशाद् pour देशा

[13] B : माना pour मानाः

[14] C : मुख्यपद्मस्य

[15] C : अर्धं pour मध्यं

[16] B : सत्र्यंशं pour तत्र त्र्यंशं

[17] B : अनेन pour मानेन

[18] C: प्रमाणकरेण pour क्रमेण

[19] C : विरचितां pour रचितं

[20] C : पीठाद् pour पीठम्

[21] B : गात्रकपादपाद्युपशोभितं

[22] B : एतदेव pour एवमेव

[23] B : अधिष्ठेयायाः pour अधिष्ठेयं

[24] B : त्र्यंशस्य pour त्रयस्य

[25] C : पत्यर्थमवस्थाप्य

राणां [1]साक्षादावरणं तदन्यावरणद्वयापेक्षया [2]**अष्टांशेन** [3]अष्टमांशेन **अतिरिच्यते**ऽधिकीभवति । [**दिक्षु तदन्तराणि**] एषां चतुर्विंशतिसंख्यानां पद्मानां यान्यन्तराणि दिक्स्थानि व्यवधानानि तान्येव [4]कण्ठोपकण्ठादिरचनया **द्वाराणि** कार्याणि। अन्यथानुपपत्त्या च मुख्याद्बहिस्तदर्धेनाष्टभि[5]र्भागैर्वीथिका। [6]तस्यास्त्र्यंशेनोक्तवद्व्योमरेखादिपञ्चकेन गात्रपादुकैश्च युक्तं पीठम्। [7]ततस्तद्बहिस्तदन्यावरणद्वयादष्टमांशेनाधिके[8] सति [9]पीठं षोडशाङ्गुलमानकं प्रथमावरण[10]मुख्यवीध्यर्ध[11]प्रमाणवीथी[12]द्वारद्वयान्तरितसपीठचतुर्दशाङ्गुलपद्मयुक्तं गणेश्वराद्यावरणद्वययुतम् । तद्बहिस्तु [13]चतुरङ्गुलद्वारव्यवधानवीथी यस्यां चतुरङ्गुलाभ्यां कण्ठोपकण्ठाभ्यामुपलक्षिते प्रतिदिशं द्वे द्वे द्वारे कार्ये। इत्येवं तन्मण्डलं **निर्वर्त्य शोभां** प्रागुक्तचतुर्वर्ण[14]कविभागरचनात्मिकां [**कल्पयेद्**] निष्पादयेत्। **यत्र यत्रोपपद्यत** इति । यथोदितेषु स्थानेषु कमलकुमुदोत्पलपत्र[15]भङ्गादि कार्यमित्यर्थः। **लोकभर्तृषु** इन्द्रादिषु लोकपालेषु मध्यात् **सत्येशगरुडध्वजौ** ब्रह्मविष्णू। [16]**तद्धाम्नो बहिः** इति । लोकपालावरणाद्बाह्ये [17]यदा वास्त्रावरणं क्रियते तदा [**स्वास्त्रमूलोर्ध्वगौ**] स्वास्त्रयोश्चक्रपद्मयोर्नैर्ऋतेशानदिग्भागस्थयोर्मूलोर्ध्वगौ बिन्दूत्पलस्वस्तिकादिस्थौ [**पूज्यौ**] पूजनीयौ । चक्रस्यमूलेऽधोभागे विष्णुः पद्मस्योर्ध्वे ब्रह्मा । **उक्तवद्** इति । यथा पूर्वं [**विद्यादौ**] मन्त्रयागादौ तत्पूजनमुक्तमित्यर्थः ॥ ४७-५१ ॥

**पुरेष्वल्पेषु देवानां स्वस्तिकोत्पलबिन्दुषु ।**
[18]**यागो विधानवत्कार्यः**[19] **शस्त्राणां च द्विजोत्तम ॥ ५२ ॥**

[**अल्पेषु**] स्वल्पेषु [**पुरेषु**] मण्डलेषु [**देवानां**] विद्येश्वरगणेश्वरलोकपालानां [**शस्त्राणाम्**] अस्त्राणां **च** [**स्वस्तिकोत्पलबिन्दुषु**] स्वस्तिकेषु उत्पलेषु बिन्दुषु [20]वा [**यागः कार्यः**] पूजनं कार्यम् ॥ ५२ ॥

देशकालविस्ताराभावे द्रव्यादिसामर्थ्यसंभवे[21] [22]वा शक्त्यनुकूलकल्पनार्थमाह—

[1] C : संक्रमावरणं
[2] C omet अष्टांशेन
[3] B omet अष्टमांशेन
[4] B : कर्णोपकर्णादिरचनया
[5] C : अष्टाभिः pour अष्टभिः
[6] C : एतस्याः pour तस्याः
[7] C : तच्च pour ततः
[8] C : आधिक्ये pour अधिके
[9] B : पीठ pour पीठं
[10] C : आवरणं pour आवरण
[11] B : अर्धं pour अर्ध ; C : अर्थ
[12] B omet द्वार ; C : द्वारयान्तरित
[13] C : चतुरङ्गुला वा व्यवधाना वीथी
[14] C : वक्त्र pour वर्ण
[15] C : भङ्गादिककार्यमित्यर्थः
[16] B : धाम्नश्च pour तद्धाम्नः
[17] C : यद्यत्रावरणं क्रियते
[18] A : योगो ; C : यागे
[19] A : विधानतत्कार्यः ; D : विधानवत्कुर्यात्
[20] C : वर pour वा
[21] C : संभवेऽपि pour संभवे
[22] C : वाद्यनुकल्पार्थमाह

पीठे चतुर्दलाब्जे वा पञ्चबीजेऽर्धकेसरे[1] ।
इष्ट्वा शिवं पशोर्दीक्षां कुर्यात्स्थण्डिलकेऽपि वा ॥ ५३ ॥

[**चतुर्दलाब्जे पञ्चबीजे अर्धकेसरे**] चतुर्दलपञ्चबीजषोडशकेसरपद्मगर्भे **वा पीठे** [**स्थण्डिलकेऽपि वा**] शोभने स्थण्डिल एव [2]वा [**शिवम् इष्ट्वा**] परमेश्वरमभ्यर्च्य [**पशोः**] दीक्ष्यस्य **दीक्षां** [**कुर्याद्**] विदध्यात् ॥ ५३ ॥

एवं च निष्पादितमण्डलः[3] [4]किं कुर्यादित्याह—

ताड्य [5]प्रोक्ष्य शतालब्धं मार्गपार्श्वाहितायुधम् ।
[6]बहिः कृतास्त्रदिग्बन्धं धाम कृत्वा घनावृतम्[7] ॥ ५४ ॥
इष्ट्वोक्तवन्महेशानं प्रणम्यामन्त्र्य चोदितः ।
चित्रावसौ यजेत्प्राग्वत्प्रायश्चित्तोक्तमान्तकम्[8] ॥ ५५ ॥

**धाम** पूजाश्रयमण्डलं [**कृत्वा**] [9]निर्वर्त्यान्ते [**ताड्य प्रोक्ष्य**] ताडनप्रोक्षणाभ्यां संशोध्य मन्त्राश्रवणात्साधारणेन हृन्मन्त्रेण वा [**शतालब्धं**] शताभिजप्तं कृत्वा [**मार्गपार्श्वाहितायुधं**] द्वारपार्श्वनिवेशितास्त्रमन्त्रं **बहिश्च** [**कृतास्त्रदिग्बन्धं**] अस्त्रप्राकारकृतदिग्बन्धनं[10] [**घनावृतं**] कवचावृतं च **कृत्वा** तस्मिन् [**उक्तवत्**] प्रागुक्तवद् [**महेशानं**] भगवन्तम् [**इष्ट्वा**] अभ्यर्च्य **प्रणम्य** [**आमन्त्र्य**] ज्ञाप्यार्थ्य [**चोदितः**] [11]लब्धानुज्ञः **प्राग्वद्** अग्निस्थमिष्ट्वा संतर्प्य [**प्रायश्चित्तोक्तमान्तकं**] साहस्रप्रायश्चित्तान्तं [**चित्रावसौ यजेद्**] अग्निकार्यं कुर्यात् ॥ ५४ - ५५ ॥

एवं च कृते सति—

तत्पत्युर्मण्डलस्थस्य कृतमावेदयेत्स्फुटम् ।
त्वत्प्रसादादिदं कर्म भवतूत्तरसाधकम् ॥ ५६ ॥

[1] C : केसरैः pour केसरे
[2] C omet वा
[3] B : मण्डलं pour मण्डलः
[4] B omet किं
[5] C : प्रेक्ष्य
[6] A : बहिष्कृत्यास्त्रदिग्बन्धं ; C : बहिःकृतास्तत्तुदुर्गं
[7] C : घनावृतः
[8] B : आन्तिकम् pour आन्तकम्
[9] B : निवृत्यान्ते
[10] C : दिग्बन्धं pour दिग्बन्धनं
[11] B omet लब्धानुज्ञः

**हृदा [1]रुद्रांशतायै च**

**तं** शिष्यं [**चित्रांशोः समीपं नीत्वा**] अग्निसमीपे [**आसने**] प्रणवासने [**संनिधाय**] सम्यग् निधायोपवेश्य [**प्रोक्ष्य**] अभ्युक्ष्य मन्त्रसंहितया **आलभ्य अर्च्य** [**संधाय**] मन्त्रसंधानादनन्तरं [**संपात्य**] संपातहोमेन संस्कृत्य [**अणून् प्रतर्पयेत्**] तन्मन्त्रतर्पणं कुर्यात्। [**छिद्रं**] छिद्रहोमं च **हुत्वा** [**पूर्णां**] पूर्णाहुतिं निक्षिप्य [**बीजाशनाशयोत्थानां दोषाणामपनुत्तये**] बीजस्य [2]आहारस्य भावस्य शुद्ध्यर्थं तद्गतदोषप्रशमाय [3]च [**रुद्रांशतायै च**] [4]रुद्रांशापादनाय च [**आहुतित्रयम्**] आहुतीनां [5]त्रयं त्रयमेकैककार्यनिष्पत्त्यै [**हृदा**] हृन्मन्त्रेण जुहुयात् ॥ ६३ - ६४ ॥

अथ किमिदं रुद्रांशापादनं नामेत्याह—

**[6]रुद्राणी शक्तिरुच्यते ।**
**तद्गर्भयोग्यता नाम रुद्रांशत्वं न रुद्रता ॥ ६५ ॥**

“ [7]ततो दत्त्वासनं देवीं न्यसेद्विश्वस्य मातरम्।” इति वक्ष्यमाणश्रुतेः शक्तिगर्भे किल तस्य शिष्यस्य योजनं कार्यम्। **शक्तिश्च रुद्राणी** [8]कलान्तेऽध्वनि गायत्री, तदूर्ध्वे गणाम्बिका। उपर्यपि शुद्धविद्या। [**तद्गर्भयोग्यता नाम**] तद्गर्भे योग्यतापादनं [**रुद्रांशत्वं**] रुद्रांशकत्वं [**न रुद्रता**] न तु रुद्रतापत्तिः ॥ ६५ ॥

कथं तत्कार्यमित्याह—

**ताड्य प्रोक्ष्यासिना [9]नाड्या [10]प्रविश्यैनं वियोज्य च ।**
**कर्षयेत्प्राणशक्त्यैव [11]द्वादशान्ते विगृह्य च ॥ ६६ ॥**
**संहारमुद्रयादाय ब्रह्मविष्ण्वादिवर्त्मना ।**
**प्रापितः परमं स्थानं योग्यो भवति कर्मणः ॥ ६७ ॥**
**[12]ततो हृदि ततो नाड्या योजयेद्वपुषि स्वके ।**

[1] A et B : रुद्रांशतायैव

[2] C : आहाराभ्यभावस्य शुद्ध्यर्थं

[3] C omet च

[4] B : रुद्रांशापात्तनाय ; C : रुद्रांशोपादानाय

[5] B omet त्रयं

[6] Le *śloka* 65 et le passage du commentaire शक्तिश्च रुद्राणी à उपर्यपि शुद्धविद्या sont cités par Nirmalamaṇi, p. 258.

[7] cf. *śloka* 75a

[8] B : कालान्तेऽध्वनि

[9] C : नास्या

[10] D : प्रविश्येनं

[11] A : द्वादशान्तेऽपि गृह्य च

[12] En ms. C on trouve le *śloka* 68 après अर्होऽसौ भवति ; cf. page 143, note 6.

विशेषयोग्यतासिद्धिरेवं [1]निष्ठां यियासतः ॥ ६८ ॥

[असिना ताड्य प्रोक्ष्य] ताडनमभ्युक्षणं चास्त्रमन्त्रेण कृत्वा [नाड्या] वामनाड्या शिष्यदेहं प्रविश्य [एनं] [2]तं जीवं [वियोज्य] विश्लेष्य कर्षण्या मुद्रया [कर्षयेत्] प्राणशक्त्या आवाह्य [द्वादशान्ते विगृह्य] द्वादशान्तं [3]यावदाकृष्य तत्र हृन्मन्त्र[4]संपुटात्मकविग्रहस्थं [संहारमुद्रयादाय] संहारमुद्रया दक्षिणनाड्या स्वहृदयं प्रविष्टं सामरस्येन स्थितं विचिन्त्य ततः [ब्रह्मविष्ण्वादिवर्त्मना] कारणयोगक्रमेण [परमं स्थानं प्रापितः] ऊर्ध्वं द्वादशान्तं यावन्नयेत् । इत्थं [5]कर्मणः रुद्राणीगर्भनिवेशनाख्यस्य [योग्यः] अर्होऽसौ भवति[6]। [7]तत इति अनन्तरं ततः स्वदेहाद् [नाड्या] दक्षिणया नाड्या निर्गत्य [स्वके वपुषि] शिष्यदेहे तच्छिष्यजीवं [योजयेद्] नियोज्याप्याययेत् । [एवं निष्ठां यियासतः] इत्येवं निष्ठां जिगमिषोर्मुक्त्यर्थिनः पुंसो विशेषयोग्यतासिद्धिः भवति, मुक्त्यर्हता संजायत इत्यर्थः ॥ ६६ - ६८ ॥

उपवीतं ततो दत्त्वा [8]शिवालब्धं द्विजन्मने ।
विशेषतर्पणं कुर्यान्मन्त्राणां [9]पूर्ववद्विधिः ॥ ६९ ॥

[ततः] परतः [शिवालब्धं] शिवाभिजप्तम् उपवीतं द्विजन्मने द्विजत्वापादनाय दत्त्वा तदर्थं [मन्त्राणां] सर्वमन्त्राणां विशेषतर्पणं कुर्यात् । [10]पूर्ववद् इति [11]मूलाद्दशांशेनान्येषामित्यतिदिश्यते ॥ ६९ ॥

ततश्च—

[12]प्रलम्ब्य विग्रहे पाशसूत्रकं मस्तकादधः ।
पश्येत्तद्गतमध्वानं शिष्यदेहे स्वविग्रहे ॥ ७० ॥
कुम्भे [13]पुरे शिवाग्नौ च [14]भाव्यैकं जुहुयाच्छतम् ।

संपातसंस्कृतमधिवासदिवसे कलशसमीपस्थं यत्पाशसूत्रं कृतं तदिदानीं [विग्रहे] शिष्यदेहे

[1] A : निष्ठा धिया सतः ; D : निष्ठा धियश्रितः
[2] B : तं जीवनं ; C : तज्जीवं
[3] Le passage यावदाकृष्य तत्र à ऊर्ध्वं द्वादशान्तं manque en ms. B.
[4] C : संपुटात्मकं विग्रहस्तं
[5] B : कर्मणा
[6] cf. page 142, note 12
[7] C omet तत इति
[8] A : शिवालब्धद्विजन्मने ; C : शिवलब्धं द्विजन्मने
[9] A et C : विधिपूर्वकम्
[10] C : प्राग्वदिति
[11] C : मूलाद्दशमांशेन pour मूलाद्दशांशेन
[12] Les *śloka* 70 et 71a sont cités par Nirmalamaṇi, dans son commentaire sur l'*Aghoraśivācāryapaddhati*, p. 309.
[13] D : पुरा
[14] B : मूलेन pour भाव्यैकं ; C : भाव्यैक्यं

[**मस्तकादधः**] मस्तकात्प्रभृति **प्रलम्ब्य** [**अध्वानं**] [1]प्रागुक्तं प्रमेयजातं [**तद्गतं**] तत्रस्थं [**पश्येद्**] अवलोकयेत् । ततश्चास्याध्वनो व्यापकतया [**शिष्यदेहे स्वविग्रहे पुरे कुम्भे शिवाग्नौ च भाव्यैकं**] शिष्यदेह[2]स्वविग्रहमण्डलकलशाग्निष्ववस्थितस्य संधानार्थं मूलमन्त्रेण **शतं जुहुयात्** ॥ ७० ॥

**कलावस्थानि तत्त्वानि तत्त्वस्थो भुवनव्रजः ॥ ७१ ॥**
**कुर्यात्तदभिसंधानं [3]नाड्या सर्वपदस्पृशा ।**
**हृदा तदर्थं[4] जुहुयादाहुतित्रयमात्मवान् ॥ ७२ ॥**

[5]कलादीक्षायां [**कलावस्थानि तत्त्वानि**] कलायां पृथिव्यादि परमशिवान्तं तत्त्वजातमारूढम्, [**तत्त्वस्थो भुवनव्रजः**] तेषु चैतेषु तत्त्वेष्वनन्तादिबिन्दुनादभुवनान्तान्यवस्थितानि । इत्थं सति [**नाड्या सर्वपदस्पृशा तदभिसंधानं कुर्यात्**] कलातत्त्वभुवनेषु वैश्वरूपेणावस्थितां तां नाडीं चिन्तयेत् । परव्याप्त्यवलम्बनतः सर्वात्मकतत्त्वभावनया **आत्मवान्** इति [**तदर्थं**] तत्संधानार्थं [**हृदा**] हृन्मन्त्रेण **आहुतित्रयं जुहुयात्** ॥

किं च—

**चतुर्मुखादिनाथानां बोधनाय [6]त्रयं त्रयम् ।**
**सांनिध्याय[7] पुनस्तेषां कलानां च तथा मुने ॥ ७३ ॥**
**[8]संमुखीकरणायापि[9] कलानां तद्वदेव हि ।**
**तदुपस्थापनं नाम्ना स्वेन स्वाहेति होमयेत् ॥ ७४ ॥**

[**चतुर्मुखादिनाथानां**] ब्रह्मादीनां कारणेशानां [**बोधनाय**] प्रबोधनार्थं [**तेषां**] प्रबुद्धानां च [**सांनिध्याय**] सांनिध्यार्थं [**त्रयं त्रयं**] तिस्रस्तिस्र आहुतीर्दद्यात् । [**कलानां च तथा**] तथैव प्रबोधनाय [10]सांनिध्यार्थं चैकैकस्याः[11] [12]षडाहुतयो देयाः । [**तदुपस्थापनं**] सर्वेषामप्येतेषां यदुपस्थापन-

[1] B : प्रागुक्तप्रमेयजातं
[2] C omet स्वविग्रह
[3] B : अर्घ्यं सर्वमपि त्यज
[4] C : तदर्धं
[5] Le commentaire कलादीक्षायां à जुहुयात् manque en ms. B.
[6] A : त्रयस्त्रयः
[7] C : सांनिध्यैव
[8] Le demi-*śloka* manque en mss. B et C.
[9] D : संमुखीकरणं वापि
[10] C : संनिध्यर्थं
[11] C : चैकैकस्य
[12] C : षडषडाहुतयो

मामन्त्रणं तदर्थं चतुर्थ्यन्तेन **स्वेन नाम्ना** [**स्वाहेति होमयेत्**] स्वाहान्तेनैकैकस्य होमः कार्यः ॥ ७३ - ७४ ॥

[1]ततो दत्त्वासनं न्यस्य देवीं विश्वस्य मातरम् ।
तनुभिर्विश्वरूपाभिर्विश्वमाक्रम्य [2]रोचनीम् ॥ ७५ ॥
कर्माण्यपि विचित्राणि पक्वानि युगपत्स्मरेत्[3] ।
लौकिकादीनि भागेषु यथासंभवमध्वनः ॥ ७६ ॥

[**ततः**] अनन्तरम् [**आसनं दत्त्वा**] आसनकल्पनां कृत्वा तत्र **विश्वस्य मातरम्** अशेषजगत्कारणभूतां **विश्वरूपाभिः** [**तनुभिः**] मूर्तिभिः [**विश्वमाक्रम्य**] विश्वमधिष्ठाय [**रोचनीं**] भासयन्तीं **देवीं** वागीश्वरीमावाह्य न्यसेत् । [**विचित्राणि अपि**] अनेकरूपाणि [4]च **कर्माणि** लौकिक[5]वैदिकाध्यात्मिकातिमार्गशैवाख्यानि **अध्वनो भागेषु यथासंभवं** [**युगपत्**] तुल्यकालं **पक्वानि** [**स्मरेद्**] भावयेत् ॥ ७५ - ७६ ॥

अथ कर्मणामुक्त[6]लौकिकादिकर्मविशेषाणां कुत्र कुत्राध्वभागे संभव इति जिज्ञासया मुनेः प्रश्नः—

कियद्भेदं प्रपन्नानि कर्माण्यंशेऽध्वनः क्व वा ।
केषामसत्ता सत्ता वेत्युच्यतां मरुतां पते ॥ ७७ ॥

[**कर्माणि कियद्भेदं प्रपन्नानि**] लौकिकादिकत्वं यत्कर्मणामुक्तं तत्र कियद्भिर्भेदैर्भिन्नानि [7]तानि [**क्व वा अध्वनः अंशे**] कस्मिन्नध्वनो भागे **केषां** कर्मणां [**सत्ता असत्ता वा**] सत्त्वमसत्त्वं वेति [**उच्यताम्**] आदिश्यतां [**मरुतां पते**] त्रिदशेश्वरेति प्रश्नार्थः । ७७ ॥

अत्रोत्तरम्—

[8]लोकाम्नायातिमार्गाभिसंधिशैवात्मकान्यणोः ।

[1] Cité par Nirmalamaṇi, page 316.
[2] Nirmalamaṇi : रोचिनीम्
[3] B : स्मरन्
[4] C omet च
[5] C omet वैदिक
[6] B omet उक्त
[7] B omet तानि
[8] B : लोका नो याति मार्गाणि ; C : लोकात्मा याति मार्गाणि ; les *śloka* 78a et 79 sont cités par Nirmalamaṇi, pp. 317-318.

कर्माणि [1]क्षेत्रिकादीशगणकाङ्गान्तकानि तु ॥ ७८ ॥
[2]कर्मतत्कृच्छ्रवैराग्यजन्यानि त्रिषु धामसु ।
योगविज्ञानजन्यानि [3]परतः परतो मुने ॥ ७९ ॥

[4]क्षेत्रिकाः [5]पञ्चकाष्टकरुद्राः ते आदयो येषां ते क्षेत्रिकादयः । [6]क्षेत्रिकादयश्च ते ईशानगणकाश्च **क्षेत्रिकादीशगणकाः** पञ्चाष्टकादयो रुद्रस्य[7] समूहाः । तत्र **लौकिकानि** तावत्कर्माणि वापीकूप-[8]प्रपादीनि पूर्ताख्यानि पञ्चकाष्टकान्तेऽध्वनि । उक्तं हि श्रीमत् **पौष्करे**—

" कालाग्निरुद्रात्प्रभृति क्रमात्पञ्चाष्टकावधि ।
लौकिकानुग्रहः कार्यः " इति ।

तानि तु कर्मजन्यानि न तु वैदिकाध्यात्मिकादिवत्कर्मकृच्छ्रवैराग्यादिजन्यानि । **आम्नायो** वेदः । तदुक्तानि तु कर्माणि कर्मकृच्छ्रजन्यानि सोमसंस्थादिरूपाणि इष्टशब्देन प्रसिद्धानि । यथा तत्रैवोक्तम्—

" वैदिकः सोमसंस्थोऽर्थ[9] इष्टधर्म इति स्मृतः " इति ।

तानि च वामदेवाधिदैवतप्रतिष्ठा[10]व्याप्त्यन्तरस्थिततत्तदीशसमूहपर्यन्ताध्ववर्तीनीति तत्राप्युक्तम्— ' वैदिको वामदेवेन ' इति । तदनन्तरं पाठक्रमादर्थक्रमो बलीयानिति कृत्वा श्रद्धात्मिकत्वे सत्य[11]बाह्य-क्रियाजन्यत्वेन **अभिसन्धि**रूपाणि [12]वैराग्यात्मकानि कर्माणि अघोराधिदैवतविद्याव्याप्त्यवधीनि शोध्यानि । [13]यस्मादेषां लौकिकादीनां स्थानं[14] यथासंख्यं **कर्मतत्कृच्छ्रवैराग्यजन्यानि । त्रिषु धामसु** इत्यार्थिकक्रमं[15] प्रति नियम इत्युक्तम्[16] । [**परतः**] [17]ततस्तु **अतिमार्गाणि** [18]कर्माणि **योग**जन्यानि [19]तत्पुरुषाधिदैवतशान्तिकलाव्याप्त्यन्तानि शोध्यानि । **परतश्च शैवात्मकानि विज्ञानजन्यानि** सदा-शिव[20]पदाब्जावस्थितसर्वात्मसु [**अङ्गान्तकानि**] शिवज्वालिन्याद्यङ्गान्तं यावत् [21]स्थितानि शोध्यानि ।

[1] B : क्षेत्रक pour क्षेत्रिक
[2] B : कर्म तत्कृच्च pour कर्मतत्कृच्छ्
[3] C : परतश्च ततो मुने
[4] B : क्षेत्रकाः
[5] C : पञ्चाष्टकरुद्राः
[6] B omet le passage क्षेत्रिकादयः à क्षेत्रिकादीश
[7] B omet स्य
[8] B : प्रभा pour प्रपा
[9] C : अथ pour अर्थ
[10] B : व्यापि pour व्याप्ति
[11] B : वाह्य pour बाह्य
[12] C : वैराग्यानि कानि pour वैराग्यात्मकानि
[13] C : नियमाद् pour यस्माद्
[14] C : लौकिकादिस्थानां
[15] B omet आर्थिकक्रमं
[16] B : इत्युक्तः
[17] B : ततास्त्विति मार्गाणि ; C : ततस्त्विति मार्गकाणि
[18] C omet कर्माणि
[19] B omet le passage तत्पुरुषाधि à विज्ञानजन्यानि
[20] B : पदावस्थित
[21] C : सिक्तानि

[1]योगविज्ञानजन्यानां कर्मणां शोध्यत्वमश्रेयस्त्वमिति चेन्नैवम् । तेषां सत्यपि शुभफलत्वे तत्तत्पदप्राप्तिहेतुतया प्रेर्यत्वानिवृत्तौ सत्यां [2]रोधकत्वानपगमात् । तदिदमुक्तं **विद्यापादे**[3]—

"कर्म [4]व्यञ्जकमप्येतद्रोधि सद्यन्न मुक्तये" इति ॥ ७८-७९ ॥

एवं यथासंभवमध्वनो भागेषु यानि कर्माणि दीक्ष्यस्य शोध्यतयावस्थितानि—

**ससाधनानि संधाय तानि [5]स्कन्ध उपस्थिते ।**
**शस्त्रेण जुहुयादष्टावाहुतीर्वक्ष्यमाणवत् ॥ ८० ॥**

[6]**उपस्थिते** प्रारब्धव्यापारतया प्रत्यासन्ने निवृत्त्यादौ **स्कन्धे** अध्वभागे **तानि** लौकिकादीनि [**ससाधनानि**] साधनैः स्वोदितैस्तनूकरणादिभिः सहितानि **संधाय** संचिन्त्य [**शस्त्रेण**] अस्त्रेण [**वक्ष्यमाणवद्** ] [7]वक्ष्यमाणप्रयोगतोऽ**ष्टावाहुतीः** [**जुहुयाद्** ] होमयेत् ॥ ८० ॥

अथ किमित्याह—

[8]**प्रणवास्त्राद्विपच्यन्तां कर्माणि सह साधनैः ।**
**शिवाज्ञया नमश्चान्ते स्वाहेति जुहुयादिति ॥ ८१ ॥**

[**प्रणवास्त्रात्** ] [9]प्रणवपूर्वास्त्रमन्त्रादनन्तरं **शिवाज्ञयास्य** पशोः [**साधनैः सह कर्माणि**] [10]ससाधनानि कर्माणि [**विपच्यन्तां**] पच्यन्ताम् । [**नमः स्वाहेति जुहुयाद्** ] नमः [11]स्वाहेत्येवम् अस्मिन् कर्मणि होमः कार्यः ॥ ८१ ॥

**ततः कर्मोत्तमं कुर्याद्दीक्षाख्यममरस्तुतम् ।**
[12]**ज्ञानवान् स्मृतिमान्दान्तो गुरुः संपन्नकारकः ॥ ८२ ॥**

[1] cité par Nirmalamaṇi, p. 345 [2] B : शोधक pour रोधक

[3] cf. *Mṛgendrāgama*, *Vidyāpāda*, *karmavicāraprakaraṇa*, *śloka* 6 (p. 224, édition de Devakoṭṭai) ; cf. commentaire : किंचैतत्कर्म शुभस्वरूपत्वात् पुण्यव्यञ्जकमपि सद् रोधि रोधकं संसारकारणमित्यर्थः । कुत इत्याह-सद्यन्न मुक्तये इति । यस्मात् पुण्यात्मकमपि सत् विद्यमानं न मुक्तये नापवर्गाय । अपि तु तत्प्रतिबन्धायैव कल्पते ।

[4] B : व्यञ्जन pour व्यञ्जक [5] B : स्कन्द उपस्थिते

[6] C omet उपस्थिते [7] B : उच्यमानप्रयोगतो

[8] A : प्रणवास्त्रं विपच्यन्तां ; B : प्रणवास्ताद्विपच्यन्तां ; C : प्रणवोऽस्त्रं विपच्यन्तां

[9] C : प्रणवपूर्वास्त्रादनन्तरं [10] B omet स ; C : सस्नानानि

[11] B : स्वाहेत्येवं स्मरन् कर्मणां होमः कार्यः [12] C : ज्ञानवान् सस्मृतो दान्तो

**मायाकर्ममहारोगनिराकृतरुचश्चितः ।**
**भेषजं परमं यत्तत्कथयन्ति विपश्चितः ॥ ८३ ॥**

[**ततः**] अनन्तरम् [**अमरस्तुतं**] त्रिदश[1]कृताशंसं **दीक्षाख्यं कर्म** [**उत्तमं**] श्रेष्ठं **गुरुः** [**ज्ञानवान्**] ज्ञानोपबृंहितत्वात् [**स्मृतिमान्**] [2]प्रकृष्टतरस्मरणयुक्तो [**दान्तः**] [3]दमेनोपशमेन चोपपन्नः [**संपन्नकारकः**] संभारादिसामग्रीयुक्तश्च[4] **कुर्यात्** । कीदृक् तत्कर्मेत्याह— **मायाकर्मेति । चितः** आत्मनः **मायाकर्म**लक्षणेन क्लेशेन **महारोगेण** च [5]अविद्यावृतिरुग्ग्लानिसंज्ञेन दुःसाध्येन व्याधिना **निराकृतरुचः** प्रतिह[6]तनिरतिशयसह[7]जप्रकाशस्य [8]**परमम्** असामान्यं **यद् भेषजम्** औषधं [**कथयन्ति**] अभिदधति [**विपश्चितः**] तद्विदः । यथा किल रोगिणश्चिकित्साकृतेन मायाकर्मणा [9]शाठ्यचिकित्सितेन निराकृतरुचः प्रणष्टभोजनादि[10]रुचेः प्रकृष्टेन केनचिदौषधेनामयः प्रशाम्यति, एवमस्येत्यर्थः ॥ ८२ - ८३ ॥

[11]अत एव—

**तच्चेदविकलं कोऽर्थः साध्यो यो नाप्यते नरैः ।**
**वैकल्ययोग्यतामूलमङ्गन्यूनत्वलक्षणम् ॥ ८४ ॥**

**तद्** दीक्षाख्यं कर्म [**अविकलं चेद्**] यद्यविकलं परिपूर्णसर्वाङ्गं तदा [**कोऽर्थः**] कस्तादृगर्थो **यः** [**नरैः**] पुरुषैः **नाप्यते,** अपि तु यद्यदभिवाञ्छितं तत्तत्सर्वमेव निर्विघ्नमासाद्यते[12]। [13]**वैकल्ययोग्यतामूलम्** इति वैकल्यस्य [14]योग्यता मन्दतरशक्तिपातत्वेनानुग्रहानर्हत्वं[15], तीव्रतरशक्ति[16]पाताघ्रातस्य परमेश्वरप्रसादादेव दीक्षाविधिवैकल्यासंभवात् । यत्र तु निरतिशयमञ्जनपरिपाकः संजातस्तत्र मन्दमन्दतरशक्ति[17]पातवशादवश्यं परिपूर्णसामग्रीको दीक्षाख्योऽनुग्रहो भवति । [18]अतस्तथाविधयोग्यता कारणम् [**अङ्गन्यूनत्वलक्षणम्**] अङ्गन्यूनत्वलक्षणस्य दीक्षावैकल्यस्येति स्थितम् ॥ ८४ ॥

[1] B : कृताशं pour कृताशंसं
[2] B : प्रकृत pour प्रकृष्टतर
[3] B : दमेनोपशोमेन ; C : दमेन चोपशमेन
[4] B omet च
[5] C : विद्यावृत्ति pour अविद्यावृति
[6] B omet त
[7] C omet ज
[8] C : परमसामान्यं
[9] C : शाठ्यः pour शाठ्य
[10] C : रुचः pour रुचेः
[11] B omet अत एव
[12] B : आप्यते pour आसाद्यते
[13] C : वैकल्यं चात्र योग्यतामूलम्
[14] C : योग्या pour योग्यता
[15] C : अनुग्रहो न भवतु pour अनुग्रहानर्हत्वं
[16] C : पातापातस्य
[17] B : पादांशवदवश्यं ; C : पातांशवदवश्यं
[18] C : अतस्तथाविधा या सा योग्यता तस्याः कारणम्

[1]अथैतदेव प्रपञ्चयितुं मुनिः प्रश्नयति—

**का दीक्षा कानि चाङ्गानि तस्या येषामसंपदा ।**
**[2]भगवन् शक्तिपातस्य [3]वैकल्यमनुमीयते ॥ ८५ ॥**

“ [4]अथेष्टसाधनी[5] दीक्षा ” इत्यादिनास्य प्रकरणस्यारम्भे यद्यप्यनेकभेदभिन्नत्वं दीक्षायाः प्रदर्शितं तथापि [**का दीक्षा**] दीक्षाशब्दस्यैव तावत्कोऽर्थः **तस्याश्च कान्यङ्गानि येषामसंपदा**[6] असामग्र्या कार्यभूतया [7]कारणं तु तस्य **शक्तिपातस्य वैकल्यमनुमीयत** इति [8]प्रश्नार्थः ॥ ८५ ॥

[9]अत्रोत्तरम्—

**दीक्षा शुद्धिरशुद्धस्य[10] तदङ्गानि समासतः ।**
**संयोगभोगविश्लेषप्रोत्क्षेपाः सपरिच्छदाः ॥ ८६ ॥**

**अशुद्धस्य** मलादिपाश[11]प्रतिबद्धस्वरूपस्य आत्मनः [**शुद्धिः**] मन्त्रप्रभावतस्तद्व्युदासेन स्वरूपाभिव्यञ्जनं **दीक्षा** । [**तदङ्गानि**] तस्याश्चाङ्गानि **समासतः** संक्षेपतः **संयोगा**दीनि । [12]**सपरिच्छद**त्वमेकैकस्याग्रे[13] वक्ष्यति ॥ ८६ ॥

तत्र तावत् कोऽयं संयोगो नाम । [14]कोऽस्य च परिच्छद इत्याह—

**समग्रैः [15]कारकैर्योगः संयोगोऽङ्गानि तस्य च ।**
**[16]शक्तिस्थापनमाधानं जन्म [17]भोक्तुं च [18]योग्यता ॥ ८७ ॥**

[**समग्रैः**] सकलैः **कारकैः** अभिधास्यमानैरङ्गैः शक्त्युपस्थापनादिभिर्दीक्ष्यस्य सम्यग् योगः **संयोगः** । [**तस्य**] [19]संयोगस्य चास्य **अङ्गानि** [**शक्तिस्थापनम् आधानं जन्म भोक्तुं च योग्यता**] शक्तिस्थापन-तद्गर्भाधान[20]जनन-भोगयोग्यतानुरूपाणि ॥ ८७ ॥

[1] B omet अथ
[2] C : भगवच्छक्तिपातस्य
[3] A : कैवल्यम् pour वैकल्यम्
[4] cf. *Kriyāpāda, paṭala* 8, *śloka* 1
[5] B : साधनं pour साधनी
[6] C omet असंपदा
[7] B : करणं pour कारणं
[8] B : प्रदर्शनार्थः
[9] B omet अत्रोत्तरम्
[10] D : असिद्धस्य pour अशुद्धस्य
[11] C : प्रतिबन्ध pour प्रतिबद्ध
[12] C omet स
[13] B ajoute मुनिः
[14] B : कस्य च ; C : कश्च
[15] C : कारणः pour कारकैः
[16] B : शक्तिस्थापनमाधानां
[17] B : भोक्तुश्च pour भोक्तुं च
[18] B : योगता
[19] C : तानि pour संयोगस्य
[20] C : तद्गर्भाधानं

[1]अथैतान्येव व्याख्यातुमाह—

[2]स्थापनं नाम सांनिध्यमाधानं देहनिष्कृतिः ।
[3]जन्म भोगावनिश्लेषो[4] वयःकालादि योग्यता ॥ ८८ ॥

[**स्थापनं नाम**] शक्तेः प्रागुक्ताया [5]यदेतदुपस्थापनं[6] नाम तत् **सांनिध्यम्** अस्याः [7]संवेदनीयम्। **आधानं** तु [**देहनिष्कृतिः**] देहस्य निष्पत्तिः। **जन्म** च [**भोगावनिश्लेषः**] तत्सकाशात्पुंसां यद्भोगभूमिषु सर्वासु संभवनम्। [**योग्यता**] भोगयोग्यता तु [**वयःकालादि**] देशकालवयोऽवस्थाद्युपलक्षितमर्हत्वम् ॥ ८८ ॥

इत्थं संयोगभोगविश्लेष[8]प्रोत्क्षेपाख्यमुख्याङ्गचतुष्टयात् संयोगस्तावत् सपरिच्छदो[9] व्याख्यातः। अस्यैव भोगोऽप्यङ्गमिति वक्तुमाह—

ज्ञेयोऽसावपि भोगाङ्गः सकारककृतो यतः ।

**असौ** प्रागुपक्रान्तः संयोगो [10]**भोगाङ्गोऽपि ज्ञेय** इति। [11]अपिशब्दो भिन्नक्रमः। संयोगस्यैवाङ्गत्वेन भोगो ज्ञेयः। [12]कुत इत्याह—[13]**सकारककृतो यतः** यस्मात्संयोगः समग्रकारकयोगरूपयुक्तोऽतो भोगस्याप्यभिप्रेतार्थनिष्पादकत्वेन कारकत्वे सति संयोगाङ्गत्वम् ॥

अथास्यैव भोगस्य प्रथमा कोटिर्भोगशब्दवाच्या, उत्तरा तु संस्काररूपा लयशब्दाभिधेयेत्यभिधातुमाह—

[14]प्राग्भुक्तरूपताच्छायां [15]गतेऽर्थेऽनुभवक्षणे ॥ ८९ ॥
[16]यत्किंचित्कालसंस्कारो लयश्च विधिपूच्यते ।

**अर्थे** विषयरूपे सुखदुःखमोह[17]हेतौ [**अनुभवक्षणे**] योऽनुभवक्षणः संवेदनावसरः स

[1] C : तथा pour अथ
[2] cité par Nirmalamaṇi , p. 328.
[3] *ibid.*, p. 317.
[4] A : भोगपरिश्लेषो
[5] B : तत्तद् pour यदेतद्
[6] C : उपस्थानं pour उपस्थापनं
[7] C : सु pour सं
[8] B : प्रोत्क्षेपात् pour प्रोत्क्षेपाख्य
[9] B : परिच्छदो pour सपरिच्छदो
[10] B : भोगाङ्गो विज्ञेय इति
[11] C : अपिशब्दोऽपि न क्रमः
[12] B : कृतः pour कुतः
[13] B : सकारकृतयोगतः
[14] Les *śloka* 89b, 90 et 91a sont cités par Nirmalamaṇi, p. 319.
[15] B : गत्यर्थे pour गतेऽर्थे ; Nirmalamaṇi : गते वा
[16] A : कंचित्कालं स संस्कारो C : किंचित्कालं स संस्कारः
[17] C : हेतोरनुभवक्षणः

तावद्भोगसंज्ञया प्रतीतः तस्मिन्नेवातिक्रान्तत्वात् [**प्राग्भुक्तरूपताच्छायां**] पूर्वभुक्तच्छायां [**गते**] प्राप्ते घण्टानुकरणन्यायेन [**यत्किंचित्कालसंस्कारः**] [1]यत्किंचित्कालं तदीयसंस्कारः[2] समतीतेऽपि [3]तस्मिन् तन्मयीभावानुगमः[4] **स विधिषु** शास्त्रेषु **लय**संज्ञया[5] [**उच्यते**] [6]भण्यते ॥

अत एवाह—

[7]**तं भोगक्षण एवायं जनयन्प्रविलीयते ॥ ९० ॥**
[8]**स भोग्यकर्महेतुत्वाद्भोगान्न व्यतिरिच्यते**[9] **।**

[10]अथानुभवक्षणत्वेन[11] पूर्वमुक्तो यः सोऽयं [12]**भोगक्षण** एव **तं** लयम् [**जनयन्**] उत्पादयन् **प्रविलीयते** तिरोहतीत्यर्थः । **स** चायं [**भोग्यकर्महेतुत्वाद्**] भोग्ये वस्तुनि यत्कर्म व्यापारः तद्धेतुतया **भोगान्न व्यतिरिच्यते** । [13]य एव[14] किल भोगस्य कर्मफलानुभवरूपो व्यापारः स तस्यापीत्याशयः ॥

[15]**सोऽप्यङ्गं निष्कृतेः**[16] **सा हि विशुद्धिः** [17]**सामुदायिकी ॥ ९१ ॥**

**सोऽपि** भोगो लयश्च **निष्कृतेः** [**अङ्गम्**] अङ्गत्वेन ज्ञेयः । यस्मात् **सा हि** निष्कृतिः **विशुद्धिः**[18] **सामुदायिकी** [19]इति समुदायेनानेकाङ्गसमाहारेण निर्वर्त्या । अत एव तान्यङ्गान्यस्याः ॥

[20]**वर्त्मनो देहहेतुत्वं तदाद्याधारता च या ।**
**प्रेरकत्वं तदीशस्य जात्यायुर्भोगहेतुता**[21] **॥ ९२ ॥**
[22]**कृतेरेवं पशोरर्था यद्यप्यर्थानुषङ्गजाः ।**

[1] C: यः किंचित्कालं
[2] B : संस्कारे pour संस्कारः
[3] B : तस्मिंस्तस्मिन्
[4] B : तन्मयीभावानुगमक्षणः
[5] C : संज्ञा pour संज्ञया
[6] C : गण्यते
[7] C : तं भोगलक्षणो वायं
[8] A : सं pour स
[9] A : भोगानप्यतिरिच्यते
[10] B : तथा pour अथ
[11] B : लक्षणत्वेन pour क्षणत्वेन
[12] B : भोगलक्षणत्वेन
[13] C omet य
[14] C ajoute कं
[15] cité par Nirmalamaṇi, p. 322
[16] D : सोऽप्यङ्गनिष्कृतेः
[17] A et D : समुदायिकी
[18] C ajoute इति
[19] C omet इति
[20] Les *śloka* 92 et 93 sont cités par Nirmalamaṇi, p. 322.
[21] B : हेतुना pour हेतुता
[22] Nirmalamaṇi, A et D : इत्यादयः pour कृतेरेवं

**तथाप्यागम[1]संसिद्धा शुद्धिरेषां विशेषतः ॥ ९३ ॥**

**वर्त्मनो** [2]सितासिताध्वनो [**देहहेतुत्वं**] यद् देहनिमित्तत्वम्[3]। **या च** [**तदाद्याधारता**] देहेन्द्रियविषयाधारता। यच्च [**तदीशस्य**] [4]तत्तद्भुवनेश्वराणां भोगभोजक[5]तया **प्रेरकत्वम्**। या च **कृतेः** कर्मणो [6]**जात्यायुर्भोगहेतुता** जात्यायुर्भोग[7]निमित्तता[8] शरीरिणामिति [**एवम्**] एवमादयोऽर्थाः **पशोः यद्यपि** [**अर्थानुषङ्गजाः**] **अर्थस्य** [9]दीक्षाख्यस्य अनुषङ्गेण प्रभावप्राप्तत्वेन संस्काररूपाः सर्वे करणीयाः **तथापि एषाम्** [**आगमसंसिद्धा**] आगमोक्तनिष्कृत्यन्तर्भावेन [**विशेषतः शुद्धिः**] विशेषशुद्धिः कार्या ॥ ९२ - ९३ ॥

किं च—

[10]**मूलं यच्चास्य विश्वस्य** [11]**मलः पत्युर्बल**[12]**द्वयम्।**
**व्यपैति निष्कृतावेव** [13]**सहोक्तैर्वक्ष्यमाणवत् ॥ ९४ ॥**

[**अस्य विश्वस्य**] सर्वस्यास्य बन्धमोक्षात्मनोऽर्थस्य **मूलं यो मलः पत्युश्च** परमेश्वरस्य [14]यन्मायाख्यं रोधनाख्यं [15]**बलद्वयं** [16]शक्तिद्वयमेतदपि [**निष्कृतावेव**] निष्कृत्यन्तर्भूतत्वेनैव[17] शोधितं बन्धकत्वाद् [18]**व्यपैति**। **उक्तैः सह** इत्येतद्धेतुकत्वेन कथितैर्देहादिभिः सह। **वक्ष्यमाणवद्** इति मलमायारोधशक्तीनां तत्प्रतिबन्धकनिवृत्तिर्नाम [19]सा शुद्धिः। यद्वक्ष्यति—

"[20]चिद्वर्तिपाशसंघातशक्तिसंशोधनिष्कृतिम्। विधाय भासयेद्धाम" इति ॥ ९४ ॥

अत एव च—

[21]**भोग्यस्यापि परा शुद्धिरस्यामेवोपजायते।**

[1] A et B : संसिद्धाः pour संसिद्धा ; C : संविद्धः
[2] B omet सितासिताध्वनो
[3] B : देहनिमित्तं
[4] B : तद् pour तत्तद्
[5] C : भोजन pour भोजक
[6] B omet जात्यायुर्भोगहेतुता
[7] C : भोगाः pour भोग
[8] C omet निमित्तता
[9] C : अदीक्षाख्यस्य
[10] B : कीलं pour मूलं
[11] A et C : मलं
[12] B : मल pour बल
[13] B : सहोक्तः pour सहोक्तैः
[14] B : यन्मायाख्यरोधनाख्यं ; C : सत्कर्ममायाख्यं रोधनाख्यं
[15] B : मल pour बल
[16] B omet शक्तिद्वयं
[17] C : भूतैनैव pour भूतत्वेनैव
[18] B omet le passage व्यपैति à वक्ष्यमाणवद् इति
[19] B : संशुद्धिः pour सा शुद्धिः
[20] cf. *śloka* 97
[21] B : भोगस्यापि

**येन सृष्ट्यन्तरे देहः श्रूयते केवलात्मनः ॥ ९५ ॥**

जनकाधारकं भोग्यम् । अनेन कर्मप्रकरणे [**भोग्यस्यापि**] [1]भोग्यपदेनोक्तस्य कर्मणोऽपि **परा** प्रकृष्टा **शुद्धिः** [**अस्यां**] निष्कृतावेव [**उपजायते**] संपद्यते [**येन**] यस्मात्तस्मिन्नशोधिते[2] [**केवलात्मनः**] [**सृष्ट्यन्तरे**] पुनरहर्मुखे [**देहः**] देहयोगः शास्त्रेषु **श्रूयते** ॥ ९५ ॥

**सृष्ट्यन्तरान्तिको रोधो जाग्रन्मूलस्य कर्मणः[3] ।**
**दृष्टो मूलवतो मूलक्षयात्सर्वात्मना क्षयः ॥ ९६ ॥**

[**जाग्रन्मूलस्य कर्मणः**] मूलकर्मयोगिनः [4]प्रलयकेवलस्यात्मनः [5]कर्मबन्धे सत्यपि प्रलयसमयोपरुद्धशक्तित्वाद्यो **रोधः** प्रतिबद्धफलत्वं तत [**सृष्ट्यन्तरान्तिकः**] [6]सृष्ट्यन्तरनिकटं यावद् भाति। प्रलयनिर्वृत्तौ[7] पुनरहर्मुखे जाग्रदवस्थाकृतानि कर्माणि [8]फलदानि भवन्तीत्यर्थः । [9]स्वप्नावस्थायामपि कृतस्य कर्मणः [10]फलमवश्यभोग्यं[11] तत्तु लघीयस्तरं[12] तन्न सृष्ट्यन्तरान्तं कालं प्रतीक्षितुं क्षममसातत्यात् । [13]तदर्थं कर्मणो जाग्रन्मूलशब्देन विशेषणम् । तदेव कर्मादेः पाशबन्धस्य [14]तत्सद्भावे सति प्ररोहान्मूलमिव मूलं प्राक् प्रतिपादितम् । तस्य तज्जन्यतत्फलविनाशाय दीक्षायां विच्छेदः कर्तव्यः । यतो **मूलक्षयात् सर्वात्मना विशेषेण मूलवतो** वृक्षादेर्यथा **क्षयो दृष्ट** एवं मूलभूतस्य कर्मणो विच्छेदात् [15]तत्फलबन्धो ध्वस्त इति न कश्चिद् दोषः ॥ ९६ ॥

अत एवाह—

**[16]चिद्वृत्तिपाशसंघातशक्तिसंरोधनिष्कृतिम् ।**
**विधाय भासयेद्धाम पाश[17]विच्छित्ति[18]वर्त्मना ॥ ९७ ॥**
**सा परा निष्कृतिः शक्तिव्यक्ति[19]निष्करणादणोः ।**

[1] B : भोगत्वेनोक्तस्य
[2] B : शोधिते pour अशोधिते
[3] B : कर्मणा
[4] B omet प्रलय
[5] B omet कर्म
[6] C : सृष्ट्यन्तरान्तानि कथितानि यावद्भवति ।
[7] B : निवृत्तौ pour निर्वृत्तौ
[8] C : फलानि pour फलदानि
[9] B : सुषुप्ति pour स्वप्न
[10] B omet फलम्
[11] B : अचलभोग्यं pour अवश्यभोग्यं
[12] B omet तरं
[13] C omet तदर्थं कर्मणो
[14] B : तत्तद्भावे
[15] B : तत्तत्फलबन्धो ध्वस्त इति न ; C : तत्फलबन्धध्वंसस्तन्न
[16] A : चिद्व्यक्ति pour चिद्वृत्ति
[17] A : विच्छिन्न pour विच्छित्ति
[18] C : वर्त्मने pour वर्त्मना
[19] B : निष्करणाद् pour निष्कारणाद्

**चित** आत्मनः **फलं न** [**विधत्ते**] संपादयति । [1]तच्चात्र **वैकल्यम् अहेतुकं** न भवति । अपि तु मन्दतरशक्तिपाताघ्रातस्यैव[2] भवतीति कृत्वा [**शिवेच्छा**] शिवेच्छैवात्र [**हेतुः**] कारणम् । नहि [**योग्ये**] निरतिशयाञ्जनपरिपाकभाजि [**चिति**] [3]जन्तौ [**सा**] परमेश्वरेच्छा **विक्रियाम् एति** मुक्त्यन्तराय[4]कारिणी[5] भवति । [**अधुना**] **तस्या**श्चैवंरूपाया निष्कृतेः [**विधिः**] क्रमोऽयं **वक्तुं प्राप्तस्तं** [**मे प्रतिबोध**] ममाभिदधतोऽवधारय ॥

[6]**अथ योनिषु सर्वासु विद्यामृतुमतीं स्मरेत् ॥ १०४ ॥**
**युगपत्स्वेन मन्त्रेण समुद्रेणोपचर्य ताम् ।**

चतुर्दशविधभूतसर्गसंबन्धिनीषु **सर्वासु योनिषु** [**युगपत्**] तुल्यकालं [**विद्यां**] देवीं वागीश्वरीम् **ऋतुमतीं** स्नातां स्मृत्वा उपस्थाप्य [**स्वेन मन्त्रेण**] तद्वाचकेन मन्त्रेण [**समुद्रेण**] मुद्रया च,

" [7]निरुक्तानुक्तमन्त्राणां सांनिध्यकरिणी परा "

इति मुद्राप्रकरणोक्तया[8] नमस्काराख्यया [**ताम्**] **उपचर्य** संपूज्य ॥

किं कुर्यादित्याह—

[9]**ताडयेद्धृदि संहत्यै पुष्प**[10]**व्यक्तासिना नरम् ॥ १०५ ॥**
**नाड्या प्रविश्य तेनैव**[11] **वियोज्याकर्षयेद्धृदा ।**
**हृदैव संपुटीकृत्य नाड्या स्वहृदि विन्यसेत् ॥ १०६ ॥**

[**पुष्पव्यक्तासिना**] [12]पुष्पाभिव्यक्तेनास्त्रमन्त्रेण [**संहृत्यै**] [13]स्वस्वरूपानुप्रवेशनरूपां [14]चितं संहृतीकर्तुं [**नरं**] दीक्ष्यमणुं **हृदि ताडयेत्** । ततः [15]प्राग्वद् [**नाड्या**] वामनाड्या तदन्तः **प्रविश्य तेनैव** अस्त्रमन्त्रेण [**वियोज्य**] [16]विश्लेषं कृत्वा [**हृदा**] हृन्मन्त्रेणाकृष्य [**हृदैव**] हृन्मन्त्रेणैव[17] संपुटीकृतां [**नाड्या**] वामनाड्या प्रविश्य **स्वहृदि** [**विन्यसेद्**] निदध्यात् ॥ १०५-१०६ ॥

[1] B : तच्छास्त्रवैकल्यम्
[2] C : एवं pour एव
[3] C : जन्तोः
[4] B : अनन्तराय pour अन्तराय
[5] C : कारणी pour कारिणी
[6] cité par Nirmalamaṇi, p. 316
[7] cf. *Kriyāpāda, paṭala* 5, *śloka* 11b
[8] C : श्रुतेन pour उक्तया
[9] cité par Nirmalamaṇi, p. 316
[10] A : युक्त pour व्यक्त
[11] A : एवं pour एव
[12] C : पुष्पादि pour पुष्पाभि
[13] C omet स्व
[14] C omet चितं
[15] C : प्राग् pour प्राग्वद्
[16] C omet विश्लेषं कृत्वा
[17] C omet एव

किं भूतं कुतः कथमित्याह—

**कदम्बगोलकाकारं[1] शक्तेः संहारमुद्रया ।**
**[2]कुम्भकेन परावस्थामालम्ब्यो[3]त्क्षिप्य पूर्ववत् ॥ १०७ ॥**
**गृह्य नाड्यैव तद्योनौ हृदा वामेन वा क्षिपेत् ।**

[**कदम्बगोलकाकारम्**] अतिभास्वररूपमणुं [**शक्तेः**] [4]पशोः द्वादशान्तात् [**संहारमुद्रया**] लयमुद्रया गृहीत्वा स्वात्मनि न्यसेत् । ततश्च[5] [6]**कुम्भकेन** इति प्राणापानसंरोधेन[7] [**परावस्थां**] [8]परां [9]शिवस्वरूपामवस्थाम् [**आलम्ब्य**] आश्रित्य [**पूर्ववद्**] रुद्रांशापादनावसरोक्तवत्कारणत्यागक्रमेण आद्वादशान्तं यावद् **उत्क्षिप्य** [10]उद्भवमुद्रया [**गृह्य**] गृहीत्वा [**नाड्या**] वामनाड्या [**तद्योनौ**] विद्यायोनौ [**क्षिपेद्**] निक्षिपेत् ॥

[11]ततश्च-

**[12]आधानमपि[13] निष्पत्त्यै धारणं चेतसा गुरुः ॥ १०८ ॥**
**संधाय वामदेवेन जुहुयादाहुतित्रयम् ।**

इत्येवम् **आधानमपि निष्पत्त्यै**[14] **धारणं** च **चेतसा** [**संधाय**] अभिसंधाय **गुरुः आहुतित्रयं वामदेवेन जुहुयात्** ॥

इति शक्तिस्थापनमाधानं चोक्त्वा संजननभोगलयाख्यान् वक्तुमाह—

**[15]सद्येन जनयेत्सद्यो नानानिष्पन्नविग्रहम् ॥ १०९ ॥**
**देशकालवयोऽवस्थाभोगानामार्जनं च यत् ।**

[1] B : आकारां pour आकारं

[2] En ms. C les *śloka* 107b, 108 et 109a se trouvent après ततश्च ; cf. note 5.

[3] A : आलभ्य pour आलम्ब्य

[4] B : पशुं pour पशोः

[5] cf. note 2

[6] C omet कुम्भकेनेति

[7] B : संरोधन pour संरोधेन

[8] B omet परां

[9] B : शिवरूपाम् pour शिवस्वरूपाम्

[10] C : उभयमुद्रया

[11] C omet ततश्च

[12] cf. note 2

[13] A : आधारमपि

[14] C : निष्पत्तेः pour निष्पत्त्यै

[15] Le demi-*śloka* est cité par Nārāyaṇakaṇṭha dans son commentaire sur *Mṛgendrāgama, Vidyāpāda*, p. 139.

**लम्भयेद्बहुरूपेण भोगान्वक्त्रेण [1]भोजयेत् ॥ ११० ॥**

**तिसृभिस्तिसृभिस्तद्वदीशानेन लयं नयेत् ।**

**सद्यः** संकल्पसमनन्तरं [**नानानिष्पन्नविग्रहं**] विविधशरीरयोगिनमणुं [**सद्येन**] सद्योजातेन [2]मन्त्रेण **जनयेत्** । तदुक्तं प्राक्—

"[3]सद्योऽणूनां मूर्तयः संभवन्ति यस्येच्छातस्तेन सद्योऽभिधानः ।" इति ।

जन्मनोऽनन्तरं [**देशकालवयोऽवस्थाभोगानां**] भोगदेशकालवयोऽवस्थानाम् **आर्जनं** [**बहुरूपेण**] अघोरेण [**लम्भयेत्**] प्रापयेत् । [**वक्त्रेण**] तत्पुरुषेण तु **भोगान् भोजयेत्** । एतच्च सर्वं [4]**तिसृभिस्तिसृभिः** आहुतिभिः कृत्वा [**तद्वत्**] तिसृभिरेव [**ईशानेन**] ईशाननाथेन लयं प्रागुक्तं [**नयेत्**] कुर्यात् ॥

ततस्तु—

**तत्त्वादिधर्मान्संधाय वशितापरिबन्धिनः[5] ॥ १११ ॥**

**शिवेनाष्टशतं[6] दद्यादाहुतीनां गुरूत्तमः ।**

[**वशितापरिबन्धिनः**] [7]स्वातन्त्र्यपरिबन्धकान् [**तत्त्वादिधर्मान्**] तत्त्वभुवन[8]कलादीन् गुणान् बन्धकत्वेन स्थितान् **संधाय** [**शिवेन**] मूलमन्त्रेण [**आहुतीनाम् अष्टशतं दद्याद्**] अष्टोत्तरशतिकं होमं कुर्यात् ॥

**मन्त्रसंरुद्धशक्तीनां पाशानामसिनाहुतीः[9] ॥ ११२ ॥**

**दद्यादष्टौ वियोगाय सद्यफण्मध्यवर्तिना ।**

[**सद्यफण्मध्यवर्तिना**] सद्योजातमन्त्रस्य फट्कारस्य चान्तरस्थेनास्त्रमन्त्रेण [**मन्त्रसंरुद्धशक्तीनां पाशानां वियोगाय**] मन्त्रसंरुद्धसामर्थ्यपाशविश्लेषाय [**असिना**] **अष्टौ** आहुतीः [**दद्याद्**] जुहुयात् ॥

**ततः शिवेन [10]सास्त्रेण हुंफडन्तेन सस्वरम् ॥ ११३ ॥**

[1] A : योजयेत्

[2] C omet मन्त्रेण

[3] cf. *Mṛgendrāgama, Vidyāpāda, patilakṣaṇa-parīkṣāprakaraṇa, śloka* 13b (p. 139, édition de Devakoṭṭai).

[4] B omet तिसृभिः

[5] A et C : वशितापरिपन्थिनः

[6] D : अष्टाशतं pour अष्टशतं

[7] C : स्वातन्त्र्यावनिबन्धकान्

[8] C : कलादिगुणान्

[9] A et B : आहुतिः pour आहुतीः

[10] B : शास्त्रेण pour सास्त्रेण

[1]छिन्द्यात्तत्त्वावधेः पाशान्कर्तर्या शस्त्रजप्तया ।

[ततः] अनन्तरं [शिवेन] मूलमन्त्रेण [सास्त्रेण] अस्त्रयुक्तेन [हुंफडन्तेन] हुंफट्कारान्तेन [सस्वरं] [2]प्लुतोच्चारप्रयोगेण [तत्त्वावधेः] [3]अभिप्रेताच्छोधितात्कलातत्त्वभुवनादिरूपादवधेः[4] [शस्त्रजप्तया] अस्त्रजप्तया [5]कर्तर्या [पाशान् छिन्द्यात्] पाशच्छेदं कुर्यात् । कर्तरी चात्र [6]पारमेश्वरी शक्तिरिति भावनीया । [7]तथा चोक्तं हंसपारमेश्वरे—

"शिवशक्तिरमोघेयं कर्तरी पाशनाशिका" इति ॥

ततस्तान् स्रुवमारोप्य जुहुयादाज्यसंयुतान् ॥ ११४ ॥
तेनैव मन्त्रयोगेन ततोऽन्याः षोडशाहुतीः ।

[ततः] [8]अनन्तरं तान् छिन्नान् सूत्रभागस्थान् पाशान् [आज्यसंयुतान् स्रुवमारोप्य जुहुयात्] स्रुवेणाज्यपूर्णेन जुहुयात् । ततोऽपि पश्चात् प्रागुक्तेन तेनैव मन्त्रयोगेन मूलमन्त्रेण हुंफडन्तेन अन्याः षोडशाहुतीः पाशहोमनिष्कृत्यै जुहुयादिति संबन्धः ॥

किं च—

[9]बाह्याध्यात्माङ्गहीनत्वपूरणायासिनाहुतीः ॥ ११५ ॥
अष्टौ[10] पूर्णान्विता[11] [12]दत्त्वा हृदा विद्यां [13]विसर्जयेत् ।

[बाह्याध्यात्माङ्गहीनत्वपूरणाय] बाह्याङ्गस्य [14]द्रव्यक्रियादेरभ्यन्तरस्य च [15]मन्त्रसन्धान[16]मनोऽवधानादेर्हीनत्वमाशङ्क्यैतत्पूरणाय[17] [असिना] अस्त्रमन्त्रेण [अष्टौ पूर्णान्विता दत्त्वा] [18]अष्टावाहुतीः च दत्त्वा [हृदा] हृन्मन्त्रेण [विद्यां] वागीश्वरीं विसर्जयेत् ॥

1 A : छिन्द्यात्तावदधो पाशान्
2 C : परितोच्चारणप्रयोगेण
3 C : अभिप्रेताच्छोधितान्
4 C : अवयवेन pour अवधेः
5 C : कार्या pour कर्तर्या
6 B omet अत्र
7 B : यथोक्तं pour तथा चोक्तं
8 Le passage अनन्तरं à षोडशाहुतीः manque en ms. B.
9 Ce demi-*śloka* manque en ms. A ; B : बाह्यस्यात्माङ्गहीनस्य
10 B : अष्ट pour अष्टौ
11 A : पूर्णान्वितान्
12 D : तत्त्व pour दत्त्वा
13 A : विवर्जयेत्
14 B omet द्रव्यक्रियादेरभ्यन्तरस्य
15 B omet मन्त्र
16 B : मनोध्यानादेः pour मनोवधानादेः
17 B : अशक्त्यैव तत्पूरणाय pour आशङ्क्यैतत्पूरणाय
18 B : अष्टाहुतीः

ततश्च—

**स्कन्धान्तरगतं ध्यात्वा शरीर[1]करणोज्झितम् ॥ ११६ ॥**
**प्राणशक्त्या समादाय प्राग्वत्स्वहृदि विन्यसेत् ।**

[**स्कन्धान्तरगतं**] स्कन्धस्य पर्वणो निवृत्त्याख्यस्यान्तर्वर्तिनं [**शरीरकरणोज्झितं**] देहेन्द्रियविमुक्तत्वात् स्फुरत्तारारुचिरं [2]**ध्यात्वा** [**प्राणशक्त्या**] पूरकप्रयोगेण [**समादाय**] सम्यगादाय [**प्राग्वत्**] पूर्ववत् **स्वहृदि** [**विन्यसेत्**] न्यसेत् । इत्येतदुत्क्षेपाख्यं प्रागुद्दिष्टं मुख्यं चतुर्थदीक्षाङ्गमुक्तम्[3] ।

**स्थित्वा किंचिन्निरोधेन [4]विरेच्य [5]ग्रन्थिसंगतम् ॥ ११७ ॥**
**प्राग्वदादाय नाड्यैव शिष्यदेहे नियोजयेत् ।**

[**निरोधेन**] प्राणापाननिरोधतः सामरस्यभावनया [**किंचित् स्थित्वा**] क्षणं स्थित्वा [**ग्रन्थिसंगतं**] ग्रन्थिस्थेषु ब्रह्मादिकारणेषु संगतं [6]कृतसंयोजनं तं **विरेच्य** [**आदाय**] आकर्षण्यात्मानं[7] द्वादशान्ताद् गृहीत्वा [**नाड्यैव**] वामनाड्यैव[8] **प्राग्वद्** उद्भवमुद्रया **शिष्यदेहे नियोजयेत्** ॥

**[9]उत्क्षेपार्थं हृदा तिस्रो देहयोगाय चाहुतीः ॥ ११८ ॥**
**दद्यात्तदितरत्रापि किं तु संधानपूर्वकम् ।**

[10]अथ [**उत्क्षेपार्थम्**] उत्क्षेपणकर्मणो निष्पत्त्यै [11]**हृदा** [**तिस्र आहुतीः दद्याद्**] [12]आहुतित्रयं देयम् । तथैव [**देहयोगाय च**] शिष्यदेहयोगार्थम् आहुतित्रयं दद्यात् । [**तदितरत्रापि**] एतच्चान्येष्वपि स्कन्धेषु कार्यम् । **किं तु संधानपूर्वकम्** एतत्कुर्यात् ॥

तदेव संधानं व्याख्यातुमाह—

**[13]संधानं नाम विलयः शुद्धस्याशुद्धवर्त्मनि ॥ ११९ ॥**

[1] A : करुण pour करण
[2] B : पूत: pour ध्यात्वा
[3] B : उत्तमम् pour उक्तम्
[4] A · विरोच्य
[5] C : ग्रन्थिंसगमम् ; C : ग्रन्थिसंगताम्
[6] C : कृतं योजनं सन्तं pour कृतयोजनं तं
[7] B : आत्मक pour आत्मानं ; C : आत्म
[8] C : नास्यैव pour नाड्यैव
[9] B : उत्क्षेपार्थे
[10] C : अग्नितः pour अथ
[11] B omet हृदा
[12] C : आहुतित्रयदानम् pour आहुतित्रयं देयम्
[13] cité par Nirmalamaṇi, p. 328.

**तन्मन्त्रयोगादाहुत्यो [1]नाथामन्त्रणपूर्विकाः[2] ।**

[**शुद्धस्य**] शोधितस्य [3]कलादेः [**अशुद्धवर्त्मनि**] तदूर्ध्वे[4]वर्त्मन्यशोधिते [5]द्वितीयस्मिन् **विलयः** उपसंहारः तत् **संधानम्** । तत्र [**नाथामन्त्रणपूर्विकाः**] [6]तदधिपत्युपस्थापन[7]पूर्वकं [**तन्मन्त्रयोगाद्**] एतन्मन्त्रप्रयोगेण [**आहुत्यः**] आहुतयस्तिस्रो देयाः ।

कथमित्याह—

**[8]ओं निवृत्तिप्रतिष्ठायै स्वाहेत्येकाग्रमानसः ॥ १२० ॥**

'**ओं निवृत्तिप्रतिष्ठायै स्वाहा**' इत्येवंविधेन ह्रस्वदीर्घक्रमोच्चारितमन्त्रप्रयोगेण [**एकाग्रमानसः**] एकाग्रचित्तः सन् ॥ १२० ॥

अनेनैव च क्रमेण—

**प्रतिष्ठाविद्ययोः [9]शान्तेस्तदतीतस्य चात्मनः ।**
**शान्त्यतीतपदे शुद्धे शुद्धशक्त्यभिसंधिते ॥ १२१ ॥**
**तत्सायुज्यमणुं प्राप्तं तद्वदेव निवर्तयेत् ।**
**[10]सा विशुद्धा[11]प्यधिष्ठेया प्रेर्या च [12]शिवतेजसः ॥ १२२ ॥**
**तद्धर्मिता नरस्यापि तात्स्थ्याच्च [13]विनिवर्तयेत् ।**

[14]एवं [**प्रतिष्ठाविद्ययोः शान्तेः तदतीतस्य आत्मनश्च**] प्रतिष्ठाविद्यायै विद्याशान्त्यै[15] शान्तिशान्त्यतीतायै शान्त्यतीता[16]पराशक्त्यै स्वाहेति [**शान्त्यतीतपदे**] [17]शान्त्यतीते पदे **शुद्धे** [**शुद्धशक्त्यभिसंधिते**] निष्कलशक्त्यनुसंधानं कृत्वा [**तत्सायुज्यं प्राप्तं**] तत्सायुज्यं प्राप्तमपि [**अणुं**] शिष्यं, **तद्वद्**

[1] A : नाथमन्त्रेण पूर्वकाः ; B : नाथामन्त्रेण पूर्वकाः

[2] En ms. C le demi-*śloka* 120b se trouve ici.

[3] B : कालादेः pour कलादेः

[4] C : वर्तिनि pour वर्त्मनि

[5] B : द्वितीयेस्मिन्

[6] B : तदपि pour तदधि

[7] C : उपस्थान pour उपस्थापन

[8] cf. note 2

[9] C : शान्तिः pour शान्तेः

[10] Les demi-*śloka* 122b et 123a sont cités par Nirmalamaṇi, p. 349.

[11] A et Nirmalamaṇi : सापि शुद्धा pour सा विशुद्धा

[12] Nirmalamaṇi : शिवतेजसा । तद्धर्मितां

[13] A : विनिवृत्तये

[14] C : एवमेवं

[15] B : विद्याशक्त्यै

[16] C : पर pour परा

[17] C : शान्त्यतीतापदे

इति प्रतिष्ठाविद्यायोजनावद् **निवर्तयेत्** ततोऽपि परतत्त्वयोजनमाहरेत्[1] । यतः **सा** शक्तिः पारमेश्वर्यानन्यानुरूपतया [**विशुद्धापि**] निरतिशय[2]शुद्धियोगिन्यपि निष्कलस्वरूपाद्भगवत इच्छात्मकप्रथमप्रसरस्वरूपतया **शिवतेजसः प्रेर्या** । यथोक्तं विद्यापादे—"[3]शक्तिर्मीष्टे स्वयं हरः" इति । [**तात्स्थ्याच्च**] तत्संयोजितस्य च [**नरस्यापि**] पुंसोऽपि [**तद्धर्मिता**] प्रेर्यता मा भूदित्येवमर्थं ततोऽप्यणुं निष्ठार्थं [**विनिवर्तयेत्**] निवर्तयेत् ॥ १२१ - १२२ ॥

**विधाय पाशविश्लेषं तच्छेदावसरे शिखाम् ॥ १२३ ॥**
**छिन्द्यान्निरोधिकां [4]मत्वा जुहुयादाज्यसंयुताम् ।**
**[5]निधायान्यस्य पाणौ तां [6]स्वयं स्नातस्य पूर्ववत् ॥ १२४ ॥**
**कृतस्थापनविन्यासपूजनाद्यादिकर्मणः ।**

[**विधाय पाशविश्लेषं**] प्रागुक्तवत्पाशविश्लेषान्तं [7]सर्वं कर्म कृत्वा [**तच्छेदावसरे**] तच्छेदसमये [8]**निरोधिकां** निरोधशक्तिरूपां [**मत्वा**] अभिसंधाय [**शिखां**] शिष्यशिखां छित्त्वा **ताम्** [**अन्यस्य**] कस्यचित् **पाणौ** [**निधाय**] दत्त्वा **स्वयं** [**स्नातस्य**] कृतस्नानस्य शिष्यस्य [**पूर्ववत्**] पूर्वोक्तवत् [**कृतस्थापन-विन्यास-पूजनाद्यादिकर्मणः**] [9]आसनकल्पन-निवेशन-नाडीसंधान-संपूजनादीनि[10] कृत्वा तां शिखाम् [**आज्यसंयुतां जुहुयाद्**] आज्येन सहाग्नौ जुहुयादिति पूर्वेण संबन्धः ॥

ततश्च—

**कर्मच्छिद्रे हुते शम्भुमामन्त्र्योत्क्षिप्य योजयेत् ॥ १२५ ॥**
**[11]स्वदेहे शिवयोगाय विधियोगेन शास्त्रवित् ।**

ततः [**शास्त्रवित्**] शास्त्रार्थज्ञो गुरुः [**कर्मच्छिद्रे हुते**] [12]बाह्याभ्यन्तरकर्मच्छिद्रशान्त्यै होमं कृत्वा [**शम्भुमामन्त्र्य**] "हे परमेश्वरास्य च पशोः कृतसमस्त[13]पाशच्छेदस्य त्वदादिष्टक्रियाक्रमस्य प्रभोराज्ञया त्वद्धामसंयोजनायात्मन्युत्क्षेपं करोमि । तदनुजानीहि माम्" इत्येवं भगवन्तमामन्त्र्य वह्नेः

[1] B : आरमेत् pour आहरेत्
[2] B : शुद्ध pour शुद्धि
[3] cf. *Mṛgendrāgama, Vidyāpāda, adhvaprakaraṇa, śloka* 193a.
[4] A : मुक्त्वा ; B : अङ्त्वा
[5] A : किंचिन्निधायान्यस्यापि पाणौ स्नातस्य पूर्ववत्
[6] C : स्नातः pour स्वयं
[7] C : स्वयं pour सर्वं
[8] C omet निरोधिकां
[9] C : आसनकल्पनं तन्निवेशन pour आसनकल्पननिवेशन
[10] C : संपूजनानि pour संपूजनादीनि
[11] B : स्वदेहशिवयोगाय
[12] C : बाह्यान्तर pour बाह्याभ्यन्तर
[13] C : पाशच्छेदादित्वादिक्रियाक्रमस्य

**उत्क्षिप्य** [**स्वदेहे**] [**शिवयोगाय**] शिवसंयोगकरणार्थं[1] [**विधियोगेन योजयेत्**] प्रागुक्तविधिना हृदि विन्यसेत् ॥

[2]**ततः** [3]**स्वतन्त्रममलं सर्वज्ञं सर्वकारणम्** ॥ १२६ ॥
**सहजानुपमाह्लादसद्धामनिधिमच्युतम्** ।
**शिवतत्त्वमुपस्थाप्य कृत्वा कर्म** [4]**लयान्तकम्** ॥ १२७ ॥
**विशेषयोजनं कुर्यात्पूर्णया तद्गुणान्स्मरन्** ।

[**ततः**] अनन्तरम् । सकलकारणातीतत्वात् **स्वतन्त्रम्** । निष्कलरूपत्वाद् **अमलम्** । अतिपरिपूर्णनैसर्गिक[5]ज्ञानशक्तिकत्वात् **सर्वज्ञम्** । [**सर्वकारणं**] सर्वकारणत्वादिगुणकम्[6] । [**सहजानुपमाह्लादसद्धामनिधिम्** अकृत्रिमनिरुपमानन्दरस[7]निष्यन्दिनः प्रकृष्टस्य धाम्नो निवासभूतम् । [**अच्युतम्**] अप्रसृतस्वरूपम् । **शिवतत्त्वमुपस्थाप्य** सर्वगत्वेऽप्यस्य प्रस्तुतक्रियाक्रमनिष्पत्त्यै विशेषत उपस्थापनमभ्यर्थ्य [**लयान्तकम्**] आधानादिलयान्तं **कर्म कृत्वा** [8]**तद्गुणान्** [9]सर्वज्ञतादीन् [**स्मरन्**] भावयन् गुरुः [**पूर्णया**] पूर्णाहुत्या [10]**विशेषयोजनं** [**कुर्यात्**] निष्पादयेत् ॥ १२६ - १२७ ॥

नन्वत्र सर्वातिशयविश्रान्तिलक्षणे [11]निष्कले शिवस्वरूपे स्थूलरूपेषु तत्त्वान्तरेष्विव संयोजनजननभोगाद्यनुपपन्नमित्याशङ्कां प्रतिसमाधातुमाह—

[12]**तदाधानं समावेशो**[13] **जननं दृक्क्रियोदयः**[14] ॥ १२८ ॥
**अधिकारस्तु**[15] **साम्राज्यं भोगो ह्लादो निजः परः** ।
[16]**पाशातीतो** [17]**महान्नित्यो लयस्तत्तुल्ययोगिता**[18] ॥ १२९ ॥

[**तदाधानं**] तस्मिन्निष्कलस्वरूपे भगवति आधानं [**समावेशः**] [19]तथाविधस्वस्वरूपाभिव्यक्त्यु-

[1] B : अर्थे pour अर्थं
[2] Les *śloka* 126b, 127 et 128a sont cités par Nirmalamaṇi, p. 352.
[3] C : स्वमन्त्रम् pour स्वतन्त्रम्
[4] A, C et Nirmalamaṇi : लयान्तिकम्
[5] C : सावज्ञसर्वशक्तित्वात् pour ज्ञानशक्तिकत्वात्
[6] C : गुणागुणं pour गुणकं
[7] C omet le passage निष्यन्दिनः à प्रस्तुतक्रियाक्रमनिष्पत्त्यै
[8] C omet तद्
[9] C : सर्वज्ञादीन्
[10] C omet विशेषयोजनं
[11] C : निष्कलशिवरूपस्थूलरूपेषु
[12] Les *śloka* 128b et 129 sont cités par Nirmalamaṇi, p. 353.
[13] A : तदाधानसमावेशो
[14] A : जननदृक्क्रियोदयः ; B : जननं दृक्क्रियादयः
[15] Nirmalamaṇi : च pour तु
[16] B : पाशातीते
[17] B : महानित्यो
[18] Nirmalamaṇi : योग्यता pour योगिता
[19] B : तथारूप pour तथाविध

पक्रमः । **जननमपि** तन्माहात्म्यतः [**दृक्क्रियोदयः**] सहजज्ञानक्रियोदयः । **अधिकारश्च** [**साम्राज्यं**] परमेश्वरप्रेर्येभ्यः सकलाध्वचक्रवर्तिभ्योऽप्युत्कृष्टत्वात्तेषामप्याधिपत्यम् । **भोगस्तु** [**निजो ह्लादः**] सहजाह्लादानुभवलक्षणः । **लयश्च** प्रागुक्तेभ्यः कलातत्त्वादिपाशव्रातेभ्यो[1] लयेभ्यः [**परः**] उत्तरः । [2]तत्सकाशाच्च **महान्** अन्यस्यातिशयवतोऽसंभवात्[3] । **नित्यश्च** [4]अविनश्वरत्वात् । [**पाशातीतः**] उपसंहार्यस्वरूपेभ्यः कलाभुवनतत्त्वादिषु [5]कृतेभ्यः प्रागुक्तेभ्यो लयेभ्यः पाशरूपेभ्य उत्तीर्णत्वात् । एवं [6]चेदृग्गुणविशिष्टः कोऽसौ लय इत्याह—**तत्तुल्ययोगिता** इति । [7]योऽयं [8]परमेश्वरस्तस्य तुल्यगुणत्वेन [9]तद्योगिता तत्स्वरूपतेति यावत् ॥ १२८ - १२९ ॥

**सर्पिषा स्रुवमापूर्य स्वातन्त्र्यामलतादयः ।**
**प्रकाशन्तामिति ध्यायन् क्षिपेदाशिवसंविदम्[10] ॥ १३० ॥**

अस्यात्मनः [**स्वातन्त्र्यामलतादयः**] [11]स्वतन्त्रतातृप्त्यनादिबोधादयो गुणाः **प्रकाशन्ताम् आशिवसंविदम्**[12] इति शिवज्ञानसदृश[13]विज्ञाननिष्पत्त्यन्तं यावद् [14]**ध्यायन्** तन्निष्पत्त्यर्थं शिवेनैव [**सर्पिषा स्रुवमापूर्य क्षिपेद्**] सर्पिःपूर्णं स्रुवं कृत्वा वह्नौ जुहुयात् ॥ १३० ॥

**[15]स्रुचि चाध्वानमारोप्य कलशस्कन्धगण्डिका ।**
**वेदीग्रीवामुखांशेषु[16] निवृत्त्यादिविभागशः ॥ १३१ ॥**
**नाडीं तदग्रे संधाय न्यसेदानाय्य पुद्गलम् ।**
**सूर्यमण्डलसंकाशं पाशातीतं शिवोन्मुखम् ॥ १३२ ॥**

[**निवृत्त्यादिविभागशः**] निवृत्तेरारभ्य [17]शान्त्यतीतान्तं यावद् [**अध्वानं**] कलापञ्चकं [18]पराशक्त्या सहितं [**स्रुचि**] स्रुक्संबन्धिषु [**कलश-स्कन्ध-गण्डिका-वेदी-ग्रीवा-मुखांशेषु**] कलशस्कन्ध-

[1] C : प्राक्तनेभ्यो pour व्रातेभ्यो
[2] B : तत्सङ्गाच्च pour तत्सकाशाच्च
[3] C : असंभावनात् pour असंभवात्
[4] B omet अ
[5] C : कृत्येभ्यः
[6] B : चेद् दृग्गुणविशिष्टः कोऽसौ ; C : चोद्वृतगुणविशिष्टकोऽसौ
[7] C : येयं
[8] B : परमेश्वरस्तस्य तुल्यं गुणत्वेन ; C : परमेश्वरतुल्यगुणत्वेन
[9] B : तत्तुल्ययोगिता pour तद्योगिता
[10] A : संविदः pour संविदम्
[11] C : स्वतन्त्रतापत्यनादि
[12] C : संविदः pour संविदम्
[13] C omet वि
[14] B : ध्यायेत् pour ध्यायन्
[15] Les *śloka* 131 et 132a sont cités par Nirmalamaṇi, p. 359.
[16] A et C : अङ्गेषु pour अंशेषु
[17] C : शान्त्यतीतास्थशक्त्यन्तं
[18] B omet le passage पराशक्त्यां सहितं à स्रुचः प्रान्तेषु

गण्डिकावेदीकण्ठमुखभागेषु [आरोप्य] अभिध्यायन् [तदग्रे नाडीं संधाय] तस्याः स्रुचः प्रान्तेषु सुषुम्नानाडीं [1]पराशक्तिस्वरूपां ज्ञात्वा [2]तयैव शक्त्या [पुद्गलम्] आत्मानम् आनाय्य प्रकाशीकृत्य [पाशातीतं] पाशेभ्य आणवादिभ्योऽतीतम् अतिक्रान्तम् अत एवाभिव्यक्तनिरतिशयनिजतेजःप्रसरत्वात् [सूर्यमण्डलसङ्काशं] सूर्यमण्डलसदृशप्रभं [शिवोन्मुखं] शिवे चानुत्तरे निःश्रेयसे तत्परं [न्यसेत्] प्रागुक्तायां शक्तिरूपायां नाड्यां निवेशयेत् ॥ १३१ - १३२ ॥

किं च—

**ततः प्राणबलारूढं प्रणवं वपुरैश्वरम् ।**
**सर्वाध्वावयवं विद्वान् [3]स्रुगनन्यदनुस्मरेत् ॥ १३३ ॥**

[ततः] [4]अनन्तरं [प्राणबलारूढं] प्राणशक्तावारूढं [प्रणवं] प्रणवस्वरूपं [सर्वाध्वावयवं] समस्ताध्वाधिष्ठेयतया अवयवत्वेन स्थितो यस्य[5] तथाविधम् ऐश्वरं वपुः [स्रुगनन्यत्] स्रुचः सकाशाद् [6]अनन्यद् अभिन्नम् [7]ऐक्येनावस्थितम् अनुस्मरेद् भावयेत् । षट्त्रिंशदङ्गुलायां स्रुचि तावदङ्गुलव्यापिकः [8]प्राणचारः [9]शिवस्वरूपेण [10]व्याप्यमानश्चिन्त्यत इत्याशयः ॥ १३३ ॥

एवं च कृते सति—

**बिन्दुप्रान्तेन वर्णेन [11]स्रुग्देहः पुष्करावधिः ।**
**[12]कल्प्यस्तदुद्गतस्निग्धध्वनिधाराधिरूढया ॥ १३४ ॥**
**[13]शिवशक्त्या समुत्क्षिप्य शिवधाम नयेत्परम् ।**

[बिन्दुप्रान्तेन वर्णेन] बिन्दुः प्रान्ते [14]कारणतयावस्थितो यस्य तेन बिन्द्वन्तव्यापिना वर्णेन प्रागुक्तेन प्रणवेन । यथोक्तं प्राक्[15]—

"शक्तेर्नादोऽभवद्बिन्दुरक्षरं मातृका ततः ।" इति

तेन प्रणवेन स्रुग्देहः पुष्करावधिरिति आज्याश्रयणपद्मान्तं यावत् कल्प्यः । [तदुद्गत-

[1] C : परशक्ति pour पराशक्ति
[2] C : तथैव pour तयैव
[3] B : स्रुगनन्यमनुस्मरेत्
[4] B omet अनन्तरं
[5] C ajoute तं
[6] B : अनन्यम् pour अनन्यद्
[7] C : ऐक्येन स्थितं
[8] C : प्राणाचारः
[9] C : शिवरूपेण
[10] C : व्याप्यमानं pour व्याप्यमानः
[11] A : स्रग्देहः
[12] A : कल्पः pour कल्प्यः
[13] cité par Nirmalamaṇi, pp. 358 - 359
[14] B : करण pour कारण
[15] cf. *Kriyāpāda, paṭala* 1, *śloka* 2a

**स्निग्ध-ध्वनि-धाराधिरूढया शिवशक्त्या]** [1]**तदुद्गतः** तदूर्ध्वस्थो यः '[2]ष्णिह प्रीतौ' इति धात्वर्थ-गत्या **स्निग्ध** इति [3]परानन्दरसस्यन्दी **ध्वनिः** नादः, तदात्मिका यासौ [4]**धारा** आज्य[5]स्रुतिः, तस्याम् **अधिरूढा** तदुपरिवर्तिनी यासौ परा **शक्तिः** तया स्वसंविच्छिवरूपं शिष्यचैतन्यम् आज्यानल-मन्त्रस्वरूपाव्यतिरेकत्व[6]लक्षणं परभावावलम्बनतः [**समुत्क्षिप्य**] सम्यगुत्क्षिप्य शिष्यं **परं** प्रकृष्टं [**शिव-धाम**] पारमेश्वरं तेजः [**नयेत्**] प्रापयेत् ॥ १३४ ॥

[7]**गुणानापादयेत्तत्र सिद्धानाहुतिभिस्त्रिभिः ॥ १३५ ॥**

[8]**स्वातन्त्र्यादीन् विधेर्दार्ढ्यादिच्छन्त्येवं[9] विपश्चितः ।**

[10]ततोऽनन्तरं **तत्र** एवंविधशिवस्वरूपाभिव्यक्तौ [**स्वातन्त्र्यादीन् गुणान् सिद्धान्**] ये सर्व-ज्ञतातृप्त्यनादि[11] बोधस्वतन्त्रताद्या गुणा[12] निसर्गतः सिद्धास्तान् । [**त्रिभिः आहुतिभिः**] [13]त्रिभिः स्रुवै-

[1] C : तत उद्गतः pour तदुद्गतः

[2] cf. *Pāṇinīyadhātupāṭha*, 1209

[3] C : परानन्दरसस्य दीर्घध्वनिः

[4] C : या या pour धारा

[5] B : श्रुतिः pour स्रुतिः

[6] C : अव्यतिकरकत्व pour अव्यतिरेकत्व

[7] cité par Nirmalamaṇi, p. 359

[8] A et Nirmalamaṇi : स्वातन्त्र्यादिविधेः pour स्वातन्त्र्यादीन् विधेः

[9] A : दिक्शक्त्यैव ; B : इच्छन्त्येव pour इच्छन्त्येवं

[10] Dans ces deux manuscrits B et C nous trouvons dans le commentaire ततोऽनन्तरं ; mais le mot ततः ne se trouve pas dans le texte. De plus les mots इच्छन्त्येवं विपश्चितः ne sont pas directement commentés ; nous trouvons en leur place विद्वद्भिः कथितं en B et तद्विद्भिः कथितं en C. Ceci suggère que la lecture choisie par le commentateur est विद्वद्भिः कथितं ततः (ou तद्विद्भिः कथितं ततः) au lieu de इच्छन्त्येवं विपश्चितः, mais les mss. utilisés (A, B, C et D) ne corroborent pas cette lecture ; aussi avons nous maintenu le texte donné par eux.

[11] C : आदि pour अनादि

[12] Pour les définitions des six qualités de Śiva telles que सर्वज्ञता, तृप्ति, अनादिबोध, स्वतन्त्रता, अलुप्तशक्ति et अनन्तशक्ति voir *Niśśvāsakārikā, jñānakāṇḍa, paṭala* 29

सार्वज्ञ्यादिगुणा देव गीयन्ते सर्वतः शिवे । तानहं श्रोतुमिच्छामि भगवन्वक्तुमर्हसि ॥
पशुं पाशांस्तथा तत्त्वान्युद्भवं प्रलयं तथा । सर्वं जानाति देवेशि सर्वज्ञस्तेन सोच्यते ॥
सर्वैश्वर्यसुसंपूर्णः सर्वाश्रयनिराश्रयः । सर्वगः परिपूर्णश्च परितृप्तः स उच्यते ॥
अनादित्वात्स्वभावत्वात् सर्वात्मा गूढगोचरः । स्वशक्त्या बोधयेद्यस्मात्तस्माद्बोधः प्रकीर्तितः ॥
उत्पादयेज्जगत्कृत्स्नं त्रैलोक्यं सचराचरम् । स्थितिं नाशं च देवेशि स्वतन्त्रस्तेन सोच्यते ॥
नित्यत्वादजनित्वाच्च सर्वज्ञत्वाच्च शङ्करः । योगैरव्याहतत्वाच्च अलुप्तस्तेन सोच्यते ॥
अनादिमध्यनिधनं परं वेत्ति न कश्चन । शक्तेरव्याहतत्वाच्च अनन्तस्तेन सोच्यते ॥
एते ह्यङ्गा महेशस्य वेदितव्याः प्रयत्नतः ॥

[13] C : तिसृभिः pour त्रिभिः

राज्याहुतयस्ताभिः, अर्थात् तिसृभिरेवाहुतिभिः । **आपादयेत्** निसर्गसिद्धानप्यनादिपाशकदर्थित[1]त्वाद् उत्तेजयेत् । [**विपश्चितः विधेः दाढर्याद् एवम् इच्छन्ति**] सर्वज्ञतादिगुणापादनक्रियाविधेर्दार्ढ्यहेतोर्विद्वद्भिः[2] कथितं यत्तद्विदध्यादित्यर्थः ॥

अथैतदुपसंहरन्नाह[3]—

**इत्युच्यमान[4]सत्कर्मव्युत्क्रमापायरक्षणे ॥ १३६ ॥**
**शक्तानां [5]साधनं मुक्तेर्विधानमिदमीरितम् ।**

[**इति**] इत्थम् [**इदम्**] एतद् **मुक्तेः [6]साधनं** निष्पादकं [7]**विधानम् ईरितम्** उक्तम् । केषामित्याह—[8]**उच्यमाने**त्यादि । [9]**उच्यमान[10]सत्कर्म-व्युत्क्रमापायरक्षणे शक्तानाम्** अभिधास्यमानो योऽसौ सत्कर्मव्युत्क्रमापायः शोभनसमयाचारपालनलक्षणधर्मोल्लङ्घनजनितप्रत्यवायः तद्रक्षणे क्षमाणां समयाचारानुष्ठानसमर्थानां सापेक्षदीक्षाभाजामिति यावत् ॥

**[11]एवमेवैतदन्येषां किं तु विध्यन्तरान्वितम् ॥ १३७ ॥**
**तदप्यवसरप्राप्तं निबोध द्विजसत्तम ।**

[**अन्येषाम्**] अन्येषामपि[12] [13]निरपेक्षदीक्षाभाजाम् [**एवमेवैतद्**] एवमेव[14] तत्कार्यम् । **किं तु** [**विध्यन्तरान्वितं**] विध्यन्तरेण येन सहितं **तदपि**[15] [**अवसरप्राप्तम्**] अवसरागतं [**द्विजसत्तम**] मुनिप्रवर [**निबोध**] आकर्णय ॥

[16]कीदृक् तदित्याह—

**यदप्राप्य नराः पूर्वे प्राप्ते कर्मणि यातनाः ॥ १३८ ॥**
**प्राप्नुवन्ति वपुः प्राप्य पैशाचं [17]सद्विगर्हितम्**

[1] C : पाशादर्थित pour पाशकदर्थित
[2] C : तद्विद्भिः pour विद्वद्भिः
[3] B : उपसंहारमाह pour उपसंहरन्नाह
[4] B : सद्धर्म pour सत्कर्म
[5] C : साधकं pour साधनं
[6] B : साधकं
[7] B omet विधानम्
[8] C omet उच्यमानेत्यादि
[9] B omet उच्यमान à शक्तानाम्
[10] B : सद्धर्म pour सत्कर्म
[11] Les *śloka* 137b à 143 sont cités par Nirmalamaṇi, p. 322.
[12] C : इति pour अपि
[13] B : निरपेक्षा pour निरपेक्ष
[14] C : एव pour एवमेव
[15] C : अभि pour अपि
[16] C : कीदृशमित्याह
[17] C : यद् pour सद्

[यदप्राप्य] यस्मिन्ननिवृत्ते [नराः] पुमांसः पिण्डपातानन्तरं [पूर्वे कर्मणि] पूर्वस्मिन्समयाचारोल्लङ्घनरूपे कर्मणि [1]दीक्षायामेवाकृतविघातत्वात् प्राप्ते सति [पैशाचं वपुः] पिशाचादिवपुः [2]सद्विगर्हितं[3] प्राप्य [4]यातनाः प्राप्नुवन्ति ॥

[5]अथैतदेव स्पष्टयितुमाह—

भूवारिगोचराः सोल्का वेतालाः [6]क्षेत्रपाश्च ते ॥ १३९ ॥
ब्रह्मादिदेवता[7]प्लुत्यनुगतस्थितियोगिनः[8] ।

[9]तत्तल्लङ्घितसमयाचाराः [ब्रह्मादिदेवताप्लुत्यनुगतस्थितियोगिनः] ब्रह्मविष्णुरुद्रादिदेवताकवक्ष्यमाणश्रवणादीन्द्रियविहितापराधानुसारप्राप्तेन भोगादिस्थितिहेतुत्वात् स्थितिशब्दवाच्येन देहेन योगो येषां ते । [ते] एवंविधाः [भूवारिगोचराः] [10]क्ष्माजलाश्रयाः [सोल्का वेतालाः क्षेत्रपाश्च] वेतालोल्काक्षेत्रपालरूपा भवन्तीत्यध्याहारः ॥

अथ का विप्लुतिः किंफलपर्यन्तावसायिनी[11] भवतीत्याह—

[12]श्रुतित्वग्विप्लुतिर्ब्राह्मी ब्रह्मक्रव्यादयोनिदा ॥ १४० ॥
रासनी वैष्णवी रौद्री [13]घ्राणलोचनहेतुकी
ऐश्वरी गर्वधीमूला मानसी शिवदेवता ॥ १४१ ॥

[श्रुतित्वग्विप्लुतिः] [14]श्रवणेन्द्रियत्वगिन्द्रियाभ्यां विहितानाचरणनिषिद्धाचरणरूपा विप्लुतिः शास्त्राज्ञाव्युत्क्रान्तिः ब्राह्मी ब्रह्मराक्षसादियोनिप्रदा । तदर्थं निर्बीजदीक्षायां पुर्यष्टकाच्छब्दस्पर्शार्पणं ब्रह्मणः कार्यम् । एवं च [रासनी] रसनाविप्लुतिः [वैष्णवी] विष्ण्वंशक्रव्यादजन्मदायिनीति कृत्वा [15]रस

[1] C : दीक्षाकाल एवाकृष्याघातत्वात्
[2] C : सद्गर्हितं
[3] C ajoute यान्
[4] C : यातनवन्ति
[5] C : तथैव pour अथैतदेव
[6] A : क्षत्रपाश्च
[7] Nirmalamaṇi : देवताः pour देवता ; D : देवतां
[8] A : प्लुत्यनुगतः स्थितियोगिनः ; C : प्लुत्यनुगस्थिर्विधियोगिनः ; D : प्लुत्यनुगतस्थिरयोगिनः
[9] C : तल्लङ्घित pour तत्तल्लङ्घित
[10] B : क्षमा pour क्ष्मा
[11] C : अवसायीति pour अवसायिनी
[12] A : श्रुतित्वविप्लुतिब्राह्मी
[13] Nirmalamaṇi : घ्राणालोचन pour घ्राणलोचन
[14] C : श्रवणेन्द्रियाभ्यां विहितानाचरणविप्लुतिः
[15] B omet रस

समर्पणं विष्णोः कार्यम् । तथैव [**घ्राणलोचनहेतुकी**] घ्राणलोचनजनिता[1] विप्लुतिः [**रौद्री**] रौद्रांशकव्याददेहावहा[2] स्यादिति गन्ध[3]रूपसमर्पणं [4]रुद्रस्य क्रियते । [**गर्व-धी-मूला**] बुद्ध्यहंकारविप्लुतिः [**ऐश्वरी**] तदंशकव्याददेहावहा स्यादिति ईश्वरे[5] बुद्ध्यहंकारार्पणं कर्तव्यम् । एवं च [**मानसी**] मनोविप्लुतिः [**शिवदेवता**] [6]सादाशिवी [7]तत्कृतापराधाच्छिवांशकव्यादजन्म[8] स्यादिति मनसोऽर्पणं शिवाख्ये कारणेश्वरे कार्यम् ॥ १४०-१४१ ॥

[9]स्पर्शार्थत्वात्कर्मदेवाश्चत्वारस्त्वचि संस्थिताः ।
शब्दार्थत्वाच्छ्रुतौ [10]वाणी विधावत्रेति सूरयः[11] ॥ १४२ ॥

[**चत्वारः कर्मदेवाः**] [12]पादपाणिपायूपस्थसंज्ञस्य[13] [14]कर्मेन्द्रियचतुष्टयस्यात्र संग्रहान्नाव्याप्तिः यतस्तेषां चतुर्णामपि [**स्पर्शार्थत्वात्**] स्पर्शार्थत्वाद्धेतोः [**त्वचि संस्थिताः**] त्वगिन्द्रिय एवान्तर्भावः[15] । ततश्च[16] तत्तत्कर्मेन्द्रियविप्लुतिस्त्वगिन्द्रियसंग्रहणेनैव[17] संगृहीता । [**वाणी**] वागिन्द्रियं तु **शब्दार्थत्वात् श्रुतौ** अन्तर्भवति । **अत्र विधौ** [**इति**] इत्थं **सूरयः** [18]तद्विदः [19]आहुरित्यध्याहारः ॥ १४२ ॥

[20]बाह्यार्थांस्तिसृभिः[21] सार्धमन्तःकरणवृत्तिभिः ।
पाशविश्लेषवद्भूत्वा [22]देवतास्वधिरोपयेत् ॥ १४३ ॥

[23]एतांश्च **बाह्यार्थान्** कर्मेन्द्रियबुद्धीन्द्रियवृत्तीः [**तिसृभिः अन्तःकरणवृत्तिभिः सार्धं**]

[1] C : जनिका pour जनिता
[2] C : योन्यावहा pour देहावहा
[3] C : रस pour रूप
[4] C : रुद्रीक्रियते pour रुद्रस्य क्रियते
[5] C : ईश्वरस्य pour ईश्वरे
[6] C omet सादाशिवी
[7] C omet तत्
[8] C : जन्या pour जन्म
[9] En ms. B ce *śloka* se trouve après त्वगिन्द्रिय एवान्तर्भावः ; cf. note 15.
[10] A : पाणी ; D : पाणौ
[11] En ms. C le *śloka* 143 se trouve ici ; cf. note 20
[12] C : पाणिपाद pour पादपाणि
[13] C : संज्ञकस्य pour संज्ञस्य
[14] Ms. C omet le passage कर्मेन्द्रियचतुष्टयस्यात्र à ततश्च
[15] En ms. B le *śloka* 142 se trouve ici ; cf. note 9
[16] cf. note 14
[17] C : त्वगीन्द्रियस्वग्रहेणैव pour त्वगिन्द्रियसंग्रहणेनैव
[18] C omet तद्विदः
[19] C : आहुतिः pour आहुः
[20] En ms. C ce *śloka* se trouve après le *śloka* 142 ; cf. note 15
[21] A, D et Nirmalamaṇi, बाह्यार्थास्तिसृभिः ; B: बाह्यानां तिसृभिः
[22] A, B et C : देवतास्तु pour देवतासु
[23] B omet एतांश्च बाह्यार्थान् ; C : एताश्च बाह्यार्थाः

मनोबुद्ध्यहङ्कारवृत्तित्रयेणापरेण सह [**पाशविश्लेषवद् भूत्वा**] प्रागुक्तपाशविश्लेषक्रमेण कृत्वा ब्रह्माद्यासु **देवतासु** [**अधिरोपयेद्**] उक्तवत्समर्पयेत् ॥ १४३ ॥

**ततः पूर्णाहुतिं दत्त्वा समुत्क्षिप्य तनौ न्यसेत् ।**
**[1]शेषवृत्त्युपभोगाय सद्यो निर्वाणदा [2]तु या ॥ १४४ ॥**
**तां कुर्याद्देशिकः सिद्धश्चेतसा वीक्ष्य योग्यताम्[3] ।**

[**ततः**] पश्चात् [**पूर्णाहुतिं दत्त्वा**] पूर्णाहुतौ दत्तायां [**शेषवृत्त्युपभोगाय**] शेषवृत्त्युपभोगार्थं मृत्युंजयादिना कृताप्यायनविधिं वह्नितः **समुत्क्षिप्य** [**तनौ**] स्वस्मिन्शरीरे [4]**न्यसेत्** । देहधारकस्य कर्मण उपभोगेनैव संक्षय इति कृत्वा तद्दाहो न कार्यः । तथा चोक्तं श्रीमत्**किरणे**[5]—

" अनेकभविकं कर्म दग्धं बीजमिवाणुभिः ।
भविष्यदपि संरुद्धं येनेदं [6]तद्विभोगतः ॥ " इति ।

**या तु सद्यः** तत्क्षणेनैव [7]**निर्वाणदा** मुक्तिहेतुः तद्दीक्षार्थं [**सिद्धः**] सिद्धमन्त्रो [**देशिकः**] गुरुः [**योग्यतां**] शिष्ययोग्यतां तीव्रतरशक्ति[8]पाताघ्रातत्वलक्षणां[9] **वीक्ष्य तां** दीक्षां **कुर्यात्** ॥

कथमित्याह[10]—

**[11]संधाय [12]निखिलान्पाशान् [13]संनिधावितरत्र वा ॥ १४५ ॥**

प्राग्वत् **पाशान् संधाय** दाह्यत्वेनाभिसंधाय सर्वाणि प्रारब्धदेहलक्षणकार्याण्यपि कर्माण्यस्यां दीक्षायां दहेदेवेत्यर्थः । **संनिधावितरत्र वा** इति[14] । न [15]परोक्षे संस्थितस्यापि शिष्यस्य सिद्धमन्त्रेणाचार्येणैवंविधदीक्षा[16] कर्तव्या । अनेन व्रतोद्धाराख्योऽपि[17] विधिः [18]संगृहीतः ॥

[1] B शेषवृत्त्यनुभोगाय
[2] B : नु pour तु
[3] En ms C le demi-*śloka* 145b se trouve ici ; cf. note 11.
[4] C : विन्यसेत्
[5] cf. *Kiraṇāgama*, 1, 6, 13b-14a
[6] C : तंविभोगतः
[7] B : निर्वाणता pour निर्वाणदा
[8] C : पाताद् घ्रातत्व pour पाताघ्रातत्व
[9] C : लक्षणदीक्षां pour लक्षणां
[10] C ajoute संधाय सकलान् पाशानिति
[11] En ms. C ce demi-*śloka* se trouve après le *śloka* 145a ; cf. note 3
[12] C : सकलान् pour निखिलान्
[13] A omet संनिधावितरत्र वा
[14] B omet इति
[15] C : परोक्षस्तस्यापि pour परोक्षे संस्थितस्यापि
[16] C : एवंविधा दीक्षा pour एवंविधदीक्षा
[17] B omet अपि
[18] B : संहृतः pour संगृहीतः

[1]एवमेव क्रियायोगाद्भौतिक्यपि परापरा ।
किं तु [2]देहावियोगार्थं [3]प्रारब्धं कर्म देहिनः ॥ १४६ ॥
शैवसाधनसाध्येन संधाय परिपालयेत् ।
सानुबन्धं दहेदन्यद्दीप्ते दीक्षाहुताशने ॥ १४७ ॥
[4]कष्टाकष्टपदान्तस्थे [5]साधके पञ्चकेश्वरे ।
[6]योगोऽस्यात्मिकदेशिन्यामन्यस्यामिष्टविग्रहे[7] ॥ १४८ ॥

[**एवमेव क्रियायोगाद्**] यादृगेवायं विधिः नैष्ठिकदीक्षायामुक्तः एवमेव [8]**परापरा भौतिक्यपि** कार्या । **किं तु** [9]एतावानस्यां भौतिक्यां विशेषः । [**कष्टाकष्टपदान्तस्थे साधके पञ्चकेश्वरे**] यत्कष्टस्य भवपदस्य अकष्टस्य अभवपदस्य च अन्ते स्थितो यः [10]साधकरूपः पञ्चकेश्वरः सदाशिवनाथः तस्मिन्नेव [**अस्य**] [11]केवलस्य **आत्मिकदेशिन्यां** परस्यां दीक्षायां [12]कर्तव्यायां **योगः** कार्यः । **अन्यस्यां** तु अपररूपायाम् । **इष्टविग्रह** इति यत्र यत्र भुवने भोगाभिलाषस्तत्र [13]तत्र देह[14]निर्माणतोऽभिप्रेतभोगस्य भोजनम्[15] । यथोक्तं श्रीमत्**स्वायंभुवे**[16]—

"**यो** यत्राभिलषेद्भोगान् स तत्रैव नियोजितः । सिद्धिभाङ्मन्त्रसामर्थ्यात्" इति ।

शिष्टं तु सर्वं प्राग्वदेव कार्यम् । [**प्रारब्धं**] [17]**कर्म** प्रारब्धकार्यं **देहिनः** जन्तोः [**देहावियोगार्थं**] शरीरपातसंरक्षार्थं **शैवसाधनसाध्येन**[18] समयाचारपालनेन **संधाय** संयोज्य **परिपालयेत्** रक्षयेत् । **अन्यत्** तु [19]तद्व्यतिरिक्तं सर्वं कर्म [**सानुबन्धं**] भूयः [20]फलानुबन्धि मा भूदिति [**दीप्ते**] उत्कटे [**दीक्षाहुताशने**] दीक्षाग्नौ **दहेत्** ॥ १४६ - १४८ ॥

[1] Ce demi-*śloka* est cité par Nirmalamaṇi, p. 264 ; A omet एवमेव क्रियायोगाद्
[2] A : देहवियोगार्थं
[3] A : प्रारब्धकर्म देहिनः
[4] A : अष्टा अष्ट pour कष्टाकष्ट
[5] A : साध्यके ; C : साध्यन्ते
[6] A : योगो ह्यात्मिकदेशिन्याम् ; C : योगोसास्त्रिकदेशिन्याम्
[7] C : अन्यस्यादिष्टविग्रहे
[8] B : परापरभौतिक्यपि ; C : परा भौतिक्यपि
[9] C : एतावदस्यां
[10] B : साध्यकरूपः ; C : सांनिध्यरूपः
[11] B : केवलात्मिकदेशिन्यां
[12] C : कर्तव्यायायं pour कर्तव्यायां
[13] C omet तत्र
[14] C : नित्राणतो pour निर्माणतो
[15] B : अभिप्रेतं भोगभोजनम् pour अभिप्रेतभोगस्य भोजनम्
[16] B : cf. *Svāyambhuvāgama, paṭala* 39, *śloka* 2
[17] B : कर्माप्यारब्धकार्यं देहिनः जन्तोः ; C : कर्माप्याजन्तोः
[18] B : सामर्थ्येन pour साध्येन
[19] C omet तद्व्यतिरिक्तं
[20] C : फलानुसन्धि

अथ लोकधर्मिणी दीक्षोच्यते—

लोकधर्मिणमारोप्य [1]मते भुवनभर्तरि ।
[2]तद्धर्मापादनं कुर्याच्छिवे वा मुक्तिकाङ्क्षिणाम् ॥ १४९ ॥
यस्य योऽध्वा [3]तदन्तस्तमुपस्थाप्य सतद्बलम् ।
मन्त्रान्ते तारमुच्चार्य योजयेत् [4]कष्टमस्पृशन्[5] ॥ १५० ॥

[**लोकधर्मिणम्**] पूर्वम्—

" [6]भोगभूमिषु सर्वासु दुष्कृतांशे हते सति ।
देहोत्तराणिमाद्यर्थं शिष्टेष्टा लोकधर्मिणी ॥ "

इत्यनेनोक्तलक्षणा लोकधर्मिणी दीक्षा [7]यस्य कर्तुमारब्धा तं **मते** अभिप्रेते [**भुवनभर्तरि**] भुवनेश्वरे [**आरोप्य**] [8]संयोज्य [**तद्धर्मापादनं**] तद्भुवनेश्वरधर्मापादनं [9]**कुर्यात्** तद्गतान् [10]सर्वज्ञतादीन् गुणानापादयेदित्यर्थः । [**मुक्तिकाङ्क्षिणां वा**] ये वा [11]लोकधर्मिण्यामपि दीक्षायां मुक्त्याकाङ्क्षिण तेषां [**शिवे**] परमेश्वरे योजनं कार्यम् । यदा तु भुवनेश्वरेषु योजना क्रियते तदा **यस्य** [12]**यो** यावान् **अध्वा** यावती व्याप्तिः **तदन्तः** तन्मध्ये [13]**तं** भुवनेश्वरं [14]**सतद्बलम्** इति तच्छक्त्या सहितम् **उपस्थाप्य मन्त्रान्ते** तद्वाचकस्य मन्त्रस्यान्ते [**तारमुच्चार्य**] नादमुच्चार्य दुष्कृतांशहतेः पूर्वमयुक्तत्वात् **कष्टम्** अशुभभोगात्मकम् **अस्पृशन्** [15]अननुसंदधद् गुरुरीप्सिते स्थाने[16] **योजयेत्** ॥ १४९ - १५० ।

एतदेव विधानमन्यत्राप्यतिदिशति—

एवमेवाम्बिकासूर्यस्मरविष्णुप्रजासृजाम् ।
सायुज्यं भक्तिमान्नेयस्तदध्वनि विशोधिते ॥ १५१ ॥
मार्गस्थानां परेषां च देवानामेवमेव हि ।

[1] B : मतं pour मते
[2] B : तत्कर्मापादनं
[3] A et B : तदन्तस्थम् pour तदन्तस्तम्
[4] C : कृष्टम् pour कष्टम्
[5] A et D : उच्चरन् pour अस्पृशन्
[6] cf. *śloka* 7 dans ce *paṭala*
[7] C omet यस्य
[8] C : सति योज्य pour संयोज्य
[9] B omet कुर्यात्
[10] C : सर्वज्ञादीन् pour सर्वज्ञतादीन्
[11] C : लोकधर्मिण्यापि
[12] C : योऽध्वानया pour यो यावानध्वा
[13] C : तद् pour तं
[14] C omet स
[15] C : अननुसंधयन्
[16] B : ईप्सितस्थाने pour ईप्सिते स्थाने

**परस्यां सोत्तरोपायो लौकिक्यामिष्टचेष्टितम्**[1] ॥ १५२ ॥

[**एवमेव**] प्रागुक्तेनैव क्रमेण [**अम्बिका-सूर्य-स्मर-विष्णु-प्रजासृजां**] गौरी-रवि-मनोभव-केशव-ब्रह्मणां [**परेषाम्**] अन्येषां [2]**च मार्गस्थानाम्** अध्वमध्येऽवस्थितानां[3] **देवानां भक्तिमान्** दीक्ष्यः [**तदध्वनि**] तस्मिन्नध्वनि **विशोधिते** सति **सायुज्यं** [**नेयः**] [4]प्रापणीयः । **परस्यां** प्रागुक्तायां मुक्तिकाङ्क्षित्वेन[5] शिवसायुज्यरूपायां **सोत्तरोपायः** सन् भक्तिमान् सायुज्यं नेयः । उत्तरोपायेन समयाचारोल्लङ्घनप्रत्यवायनिराकरणविधिना[6] सह निरपेक्षदीक्षायुक्तः[7] सायुज्यं नेय इति यावत् । **लौकिक्यां** तु लोकधर्मिण्यां [8]दीक्षितस्य । **इष्टचेष्टितम्** इति इष्टशब्देनात्र पूर्तमप्युपलक्षितं ज्ञेयम् । लोकधर्मिण्या[9] [10]दीक्षया दीक्षितानामिष्टापूर्तचेष्टितमविरुद्धमित्यध्याहारः । [11]इष्टं यज्ञेषु यद्दानम् । **पूर्तं**—वापीकूपतटाकादि पूर्तकत्वात् प्रचक्ष्यते ॥ १५१ - १५२ ॥

अथ प्रागुक्तमुपसंहरन्नध्वनः षड्विधत्वेन दीक्षाभेदान् दर्शयितुमाह—

**एवं [12]सदाशिवे तत्त्वे [13]संकलय्याधरं जगत् ।**
**कलादिभिर्नयेच्छुद्धिं मातृकार्णात्मकेऽपि[14] वा ॥ १५३ ॥**
**मातृकापदरूपे वा संहिताविग्रहेऽपि वा ।**

**एवम्** उक्तेन प्रकारेण निवृत्त्यादिकलाभेदभिन्ने [**सदाशिवे तत्त्वे**] [15]सदाशिवतत्त्वे [**संकलय्याधरं जगद्**] अधोवर्तिनमध्वानमुत्तरोत्तरक्रमेण [16]संमेल्य **शुद्धिं नयेद्** इति कलादीक्षा । " कलादिर्योऽयमध्वान्तः[17] सदाशिवविभेदजः " इति **पारमेश्वरश्रुतेः** । अस्मिन्नेव [**मातृकार्णात्मकेऽपि**

[1] B : चेष्टिताम् pour चेष्टितम्
[2] C omet च
[3] B : व्यवस्थितानां pour अवस्थितानां
[4] C : प्रापणीयम्
[5] B : कामिकत्वेन pour काङ्क्षित्वेन
[6] B : निराकरणेन विधिना pour निराकरणविधिना
[7] C : दीक्षया युक्तः pour दीक्षायुक्तः
[8] C : दीक्ष्यस्य pour दीक्षितस्य
[9] C : लोकधर्मिण्यां
[10] C omet दीक्षया
[11] cf. *Amarakośa*, *kāṇḍa* 2, *varga* 7, *śloka* 28 : "क्रतुकर्म इष्टम्" "पूर्तं खातादिकर्म यत्" cf. commentaire de Kṣīrasvāmin—
इज्यते स्म इष्टं यागादि । यदाह—एकाग्निहवनं कर्म त्रेतायां यच्च हूयते । अन्तर्वेद्यां च यद्दानम् इष्टं तदभिधीयते ॥ पिपर्ति स्म पूर्तं... खातं वाप्यादि । आह च - वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमार्याः प्रचक्षते ॥
[12] C : सादाशिवे pour सदाशिवे
[13] A : सकलस्याधरं जगत् ; B : सकलाध्वाधरं जगत्
[14] B : आत्मिके pour आत्मके
[15] C : सादाशिवतत्त्वे
[16] B : संमील्य
[17] B : अतः pour अन्तः

वा] मातृकासंबन्धिवर्णात्मके प्राग्वदखिलाधस्तनाध्वसकलानां[1] श्रीमत्स्वायंभुवाद्युक्तवत्[2] वर्णाध्वदीक्षा [3]वा [4]कार्या । यदि वा [मातृकापदरूपे] मातृकापदभेदभिन्नस्याधरस्या[5]ध्वनोऽत्र योजनतो पदाध्वदीक्षा कार्या । [संहिताविग्रहेऽपि वा] शिवैकादशिकसंहितारूपे वात्रैव मन्त्राध्वदीक्षाविधिर्विधातव्यः । सर्वेऽपि चैते भेदाः [6]परमेकं शिवस्वरूपमनुप्रविशन्ति । यथोक्तं श्रीमत्स्वायंभुवे[7]—

"तत्त्वाध्वा च पदाध्वा च वर्णाध्वा भुवनात्मकः ।
मन्त्राध्वा च कलाध्वा च विशन्त्येकं परं शिवम् ॥
अप्रमेयमनिर्देश्यम्" इत्यादि ॥

अथ[8] तत्त्वदीक्षासंक्षेपः—

**पृथग्वा सर्वतत्त्वानि प्रकृत्याद्यानि[9] वा नव[10] ॥ १५४ ॥**
**आत्मविद्याशिवाख्यानि शोध्यं[11] द्वितयमेव वा ।**
**[12]शिवशक्ती [13]शिवाख्यं वा [14]शोध्यं पञ्चकमेव वा ॥ १५५ ॥**

[**सर्वतत्त्वानि वा**] सर्वाणि वा निरवशेषाणि तत्त्वानि [**पृथक्**] पृथक् पृथक् शोध्यानि । [**प्रकृत्याद्यानि वा नव**] यदि वा प्रकृतिपुरुषनियत्यादिशिवान्ततत्त्वनवकान्तर्भावेण सर्वाध्वशुद्धिः कर्तव्या । [**आत्मविद्याशिवाख्यानि**] आत्मविद्याशिवाख्यतत्त्वत्रयव्याप्त्या वा त्रितत्त्वदीक्षा विधेया । [**शिवशक्ती द्वितयमेव वा शोध्यम्**] शिवशक्त्यात्मकतत्त्वद्वयान्तर्गतत्वात् सर्वस्य तत्त्वद्वयशुद्ध्या [15]द्वितत्त्वदीक्षाविधिर्निर्वर्त्यः[16] । [**शिवाख्यं वा**] "या त्वविद्यात्मिका शक्तिः शक्तिरीशस्य सा मता" इत्यनया दृशा शक्त्यनुप्राणितत्वेन सकलविश्वस्य स्थित्यादियोगात्तस्याश्च तद्धर्मत्वेनापृथक्सिद्धेः शिवतत्त्वैकव्याप्त्येकतत्त्वैव वा दीक्षा । [**पञ्चकमेव वा**] यद्वा पञ्चकमेव पृथिव्यादिकं [19]कलोक्तव्याप्तिवत् **शोध्यम्** इति तत्त्वदीक्षाविधिः ॥ १५४ - १५५ ॥

[1] C : सकलान् pour सकलानां
[2] cf. *Svāyambhuvāgama, paṭala* 22-23.
[3] B omet वा
[4] C omet कार्या
[5] C : आधारस्य pour अधरस्य
[6] C : परमेश्वरतमं pour परमेकं
[7] cf. *Svāyambhuvāgama, paṭala* 36, *śloka* 2-3
[8] C ajoute अत:
[9] C : प्रकृत्यादीनि
[10] A : न वा pour नव
[11] C : शोध्य pour शोध्यं
[12] Ce demi-*śloka* manque en A et B
[13] D : शिवीतत्त्वं pour शिवाख्यं वा
[14] C : शिवं pour शोध्यं
[15] C : द्वितत्त्वेन pour द्वितत्त्व
[16] B : निवर्त्यः ; C : निर्वर्तव्यः
[17] C : लोकोक्त pour कलोक्त

अथ भुवनदीक्षा—

**भुवनान्यथ चोक्तानि तदीशान्वा विशोधयेत्[1] ।**

[**अथ**] ब्रह्माण्डाधोवर्तिनोऽनन्तभुवनादारभ्य [**उक्तानि**] **भुवनानि** [**तदीशान्**] **वा** तत्तदधिपतींश्च प्रोक्तक्रमेण **विशोधयेत्** ॥ १५५ ॥

कथमित्याह[2]—

**[3]विद्यायोगे [4]कृताः सर्वाः क्रियाः संधाय निष्कृतौ ॥ १५६ ॥**
**शतं शतं प्रतिपुरं[5] जुहुयाद्योजयेत्ततः[6] ।**

[**विद्यायोगे**] [7]वागीश्युपस्थापनादनन्तरं गर्भाधानाद्याः **सर्वाः** [**कृताः**] कथिताः **क्रियाः** [**संधाय**] संपाद्य [**निष्कृतौ**] निष्कृत्याख्ये कर्मणि प्राप्ते प्रत्येकं [**प्रतिपुरं**] प्रतिभुवनं [**शतं शतं जुहुयात्**] शतं शतं हुत्वा [**ततः योजयेद्**] उत्तरोत्तरक्रमेण निष्कले परस्मिन् शिवे योजयेत् ॥

इति षडध्वदीक्षाविधिसंक्षेपमुक्त्वा [8]ततः सर्वतः संक्षिप्तं विधिं वक्तुमाह—

**[9]मतेन वाध्वना [10]योज्य [11]मुक्त्वा तं प्रतिबन्धकम् ॥ १५७ ॥**
**शतं पञ्च सहस्रं वा हुत्वा संयोजयेत्परे ।**

षण्णामध्वनां मध्याद् [**मतेन**] यथाभिमतेन **अध्वना वा योज्य** [12]परस्मिन् शिवे योजयेदिति । जननादिक्रियाविशेषवर्जितोऽयम् । इह शास्त्रे आगमान्तरोक्तवदापादमस्तकान्तं[13] यावद्व्याविव्याप्तिः कार्या । [14]शक्तौ सर्वाध्वव्याप्तिचिन्तनेन [15]शोध्याध्वानमन्यतमं शक्तितत्त्वादभेदेन विन्यस्य

1 En ms. C les demi-*śloka* 155b et 156a se trouvent ici ; cf. note 3.
2 C ajoute विद्यायोगे कृता इति
3 En ms. C ce *śloka* se trouve après le demi-*śloka* 155b ; cf. note 1.
4 B : क्रिया: pour कृता:
5 A : वपु: pour पुरं
6 B : याजयेत्तत: pour योजयेत्तत:
7 C : वागीश्वरी pour वागीशी
8 C : अथ pour तत:
9 Cité par *Aghoraśivācārya* ; cf. *Aghoraśivācāryapaddhati*, p. 367.
10 A : योज्या pour योज्य ; B : योज्यं
11 *Aghoraśivācārya* ; मुक्त्या pour मुक्त्वा ; A, B et C : मत्वा
12 B : परमशिवे pour परस्मिन् शिवे
13 C : आपादान्मस्तकान्तं
14 B : अशक्तौ pour शक्तौ
15 C : अध्वानम् pour शोध्याध्वानम्

[1]कालाग्नितः शिवान्तं यावत्प्रज्वलदग्निप्रदीप्तायां[2] तस्यां शक्तौ शिष्यं संयोज्य ततः [**प्रतिबन्धकं मुक्त्वा**] प्रतिबन्धकनिवृत्त्यनुसंधानेन प्रत्यंशं स्वविभवानुसारतः [**शतं पञ्च सहस्रं वा हुत्वा**] शतेन शतेन पञ्चभिः पञ्चभिर्वा शतैः सहस्रेण वा होमतः शुद्धनिवृत्तिप्रतिबन्धं [**तं**] शिष्यं स्वहृदये निवेश्य पूर्ववत् [**परे**] शिवे **संयोजयेत्** ॥ यथोक्तं श्रीमन्**मालिनीविजये**—

संप्रोक्ष्य पूर्ववच्छिष्यमृजुदेहं विलोकयेत् ।
शक्तिं संचिन्त्य पादाद्यं मस्तकान्तं विचक्षणः ॥
शोध्याध्वानं ततो न्यस्य सर्वाध्वव्याप्तिभावतः ।
शक्तितत्त्वादभेदेन पूर्वोक्तेनैव वर्त्मना ॥
उपवेश्य ततस्तस्य विधानमिदमाचरेत् ।
मूलशोध्यात्समारभ्य शक्तिं दीप्तानलप्रभाम् ॥
योजयेत्साध्वसंशुद्धिभावनागतमानसः ॥ इति ॥

इति जननादिविवर्जितसंक्षिप्ततरदीक्षोपक्षेपः ॥

अथ भौवनक्रमोपलक्षणेन [3]सर्वाध्वदीक्षासु [4]भूलोकशुद्धावेव तद्वैदिकसंस्कारप्रतिबन्धनिवृत्तिः कार्येति वक्तुमाह—

**भौवन्यां पुरतः क्षेत्रात्प्राक्स्थूलादमराष्टकात्[5] ॥ १५८ ॥**
**आम्नायोदितसंस्कारप्रतिबन्धं निवर्तयेत्[6] ।**

[**भौवन्यां**] भुवनाध्वना निर्वर्त्यायां तावद्दीक्षायाम् **आम्नायोदितसंस्कारप्रतिबन्धं** श्रुत्याम्नातसंस्कारकृतमनर्हत्वं[7] **निवर्तयेद्** विहन्यात् । शैवेन संस्कारकलापेन वक्ष्यमाणवन्निर्वर्तितेन[8] प्रतिबन्धहेतुः श्रौतः[9] संस्कारव्रातो न शैवदीक्षाफलविघ्नभावं भजत इत्यर्थः । भुवनदीक्षायामेव च लौकिकवैदिकादिसंस्काराणां [10]व्याप्तिदर्शनं [11]सूचितम् । न तत्त्ववर्ण[12]पदमन्त्रकलादीक्षास्वपि । यतस्तेष्वधःस्थानेषु नेदृक् स्फुटत्वम् । [13]अतस्तदवधेः । [14]तत्र त्वनेनैवातिदेशं वक्ष्यति—

[1] C : कलाग्नितः pour कालाग्नितः
[2] Le passage अग्निप्रदीप्तायां à दीक्षोपक्षेपः manque en ms. B.
[3] C : सर्वासु दीक्षासु
[4] C : भूर्लोकशुद्धावेव
[5] C : अष्टकान् pour अष्टकात्
[6] A : प्रतिबन्धनिवृत्तये pour प्रतिबन्धं निवर्तयेत्
[7] B : महत्त्वं pour अनर्हत्वं
[8] निर्वर्तनेन pour निर्वर्तितेन
[9] B : प्रतिबन्धहेतुश्रुतेः pour प्रतिबन्धहेतुः श्रौतः
[10] B omet व्याप्ति
[11] B : सूचकम् ; C : अनुज्ञातम्
[12] C omet पद
[13] C omet अतस्तद्
[14] C : तन्त्र pour तत्र

" [1]आवैदिकक्रियाव्याप्तेरन्यत्रापि क्रियाभुवः ।
नाधस्ताद् " इति ।

[2]**पुरतः क्षेत्राद्** इति गुह्याष्टकात्प्रथमात् पञ्चाष्टकक्षेत्रादारभ्य **स्थूलादमराष्टकाद्** [3]बुद्धाववस्थितात्पिशाचादिपितामहान्ताद्देवयोन्यष्टकात् [**प्राक्**] पूर्वं तद्बुध्नभागं यावद् [4]वैदिकक्रियाव्याप्तेः श्रुतत्वात्तयैव तत्प्रतिबन्धनिवर्तनम् । तदेव पञ्चाष्टकबुद्धिभागं [5]यावत्कर्मभूमित्वाल्लौकिकोऽध्वा । तत्र लौकिकसंस्कार[6]प्रतिबन्धनिवृत्तिः कार्या । देवयोन्यष्टकस्याधोभागं यावद्वैदिककर्मफलभोगस्थानम् । अतस्तदन्त एव तत्संस्कारप्रतिबन्धनिवृत्तिरित्याशयः । ननु च **विद्यापादे**[7]—

" सूक्ष्मामरपुराण्यष्टौ बुद्धौ पैशाचमादितः ।"

इत्येतेषां सूक्ष्मत्वश्रुतेः किंकृतेयमिह स्थूलत्वोक्तिः । उच्यते । ब्रह्माण्डान्तं तावदुत्तरोत्तरं चतुष्षष्टिगुणमहिम्ना[8]ममीषामीषत्स्थूलत्वोक्ति[9]रित्यदोषः ॥

अथ किं तदाम्नायोदित[10]संस्कारप्रतिबन्धस्य निवर्तकमित्याह—

**गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः[11] ॥ १५९ ॥**
**जातकर्म तथा नाम निष्क्रामः[12] प्राशनं शिखा ।**
**[13]व्रतं वेदव्रतान्यन्ते गोक्षणं पाणियोगिता ॥ १६० ॥**
**पाकयज्ञा हविर्यज्ञाः [14]सोमसंस्थाः परं ततः ।**
**सत्राणि वनवासित्वं पारिव्राज्यं गुणास्ततः ॥ १६१ ॥**

[1] cf. *śloka* 163
[2] B et C : अतश्च pour पुरतः
[3] C : बुद्ध्या pour बुद्धौ
[4] Le passage वैदिकक्रियाव्याप्तेः à पञ्चाष्टकबुद्धिभागं manque en ms. B.
[5] C : यावत्कर्मभूतं लौकिकोऽध्वा
[6] C : प्रतिबन्धनं pour प्रतिबन्ध
[7] cf. *Mṛgendrāgama*, *Vidyāpāda*, *adhvaprakaraṇa*, *śloka* 143b
[8] B omet अमीषाम्
[9] C : स्थूलतोक्ति pour स्थूलत्वोक्ति
[10] C : उदितो pour उदित
[11] En ms. A, le demi-*śloka* 161b se trouve après 159b.
[12] C : नामनिष्कामौ
[13] En ms. C les *śloka* 160b et 161a se trouvent après हृन्मन्त्रेण कार्यम् ; cf. p. 178, note 4.
[14] A : सोमसंस्थापनं pour सोमसंस्थाः परं

[1]एते गर्भाधानादयः संस्काराश्चन्द्रार्कदर्शनार्थनिष्क्रामान्ता अग्निसंस्कारोक्त[2]क्रमेण कार्याः । ततश्च प्रतिबन्धाभिधेयाः[3] । सर्वं चैतद्वक्ष्यमाणश्रुतेः हृन्मन्त्रेण कार्यम्[4] । [5]**व्रतमिति** व्रतम् उपनयनाख्यम् । तदङ्गानि चत्वारि **वेदव्रतानि** ऐष्टिकं दार्विकं भौतिकं सौमिकं चेति शोध्यानि । अन्यानि च सप्तव्रतानि मेखलाव्रतसंज्ञानि चर्याव्रतानि च भूतेशपाशुपतादीनि सप्तैव । यदुक्तं **पारमेश्वरे**—

" व्रतानि व्रतबन्धेऽस्मिन् शोध्यान्येव चतुर्दश ।
तत्रादौ मेखला दण्डमजिनं त्र्यायुषं तथा ॥
सन्ध्याग्न्युपासने भिक्षा मेखलाव्रतसप्तकम् ।
भूतेशं पाशुपत्यं च गणं गाणेश्वरं तथा ॥
उन्मत्तमसिधाराख्यं गणेशं सप्तमं तथा ।
चर्याव्रतानि शोध्यानि " इति ।

**अन्ते गोक्षणम्** इति [6]गोदानाख्यं संस्कारं [**पाणियोगिता**] विशिष्टं विवाहाख्यं [7]च [8]शोधयेत् । **ततः पाकयज्ञा हविर्यज्ञाः सोमसंस्थाः**[9] सप्त सप्त शोध्याः । [10]यथोक्तम्—

अष्टका पार्वणी श्राद्धं [11]श्रावण्याग्रायणी ततः ।
चैत्री चाश्वयुजी चेति शोध्याः [12]**पाकमखास्त्विमे** ॥
आधेयमग्निहोत्रं च दर्शं वै पौर्णमासिकम् ।

[1] cf. *Aghoraśirācāryapaddhati*, p. 312 pour les détails des *saṃskāra :*

अत्रान्तरे भूलोके गर्भाधानादीनाम्नायोक्तान् संस्कारांश्चत्वारिंशद्धृदाहुतिभिस्तिसृभिस्तिसृभिरापादयेत् । तद्यथा—गर्भाधानं पुंसवनं सीमन्तोन्नयनं जातकर्म नामकरणं निष्क्रामणम् अन्नप्राशनं चौलं, मेखलादिचतुर्दशान्तर्भावेण उपनयनम् , ऐष्टिकं दार्विकं भौतिकं सौमिकम् इति चत्वारि वेदव्रतानि, गोदानं, पञ्चमहायज्ञापत्यन्तनिष्कृत्यन्तर्भावेण विवाहः, अष्टका पार्वणी श्राध्दं श्रावणी आग्रहायणी चैत्री आश्वयुजी इति पाकयज्ञाः सप्त, आधेयम् अग्निहोत्रं दर्शः पौर्णमास्यं चातुर्मास्यं पशुबन्धः सौत्रामणी इति हविर्यज्ञाः सप्त, अग्निष्टोमः अत्यग्निष्टोमः उक्थ्यः षोडशकः वाजपेयः अतिरात्रः अप्तोर्यामः इति सोमसंस्थाः सप्त, हिरण्यपादाद्येकादशसत्रान्तर्भावेणाश्वमेधः, वानप्रस्थः पारिव्राज्यं, दयाद्यात्मगुणाष्टकान्तर्भावेणान्त्येष्टिः, एवं चत्वारिंशत्संस्कारानापाद्य तत्प्रतिबन्धं हृदा आहुतित्रयेण तथैव निर्वर्तयेत् ।

[2] C : अन्त pour उक्त

[3] C : प्रतिबन्धोऽपि यतः pour प्रतिबन्धाभिधेयाः

[4] En ms. C les *śloka* 160b et 161a se trouvent ici ; cf. p. 177, note 13.

[5] C omet व्रतमिति

[6] B : गोदानाख्यं सकारं विशिष्टं विवाहाख्यं ; C : गोदानाख्यसंस्कारविशिष्टविवाहाख्यं

[7] C omet च

[8] C : विशोधयेत्

[9] C : संज्ञाः pour संस्थाः

[10] C omet यथोक्तम्

[11] B : श्रावण्याग्रहायणी ततः

[12] B : पाकमखास्त्विमके

चातुर्मास्यं ततः शोध्यं [1]पशुबन्धं च शोधयेत् ॥
सौत्रामणिं च सप्तैते हविर्यज्ञा मता इमे ॥"

[2]तथा—

"अग्निष्टोमस्ततः [3]शोध्योऽत्यग्निष्टोमस्तथैव च ।
उक्थ्यः षोडशिकश्चैव वाजपेयातिरात्रकौ ॥
अप्तोर्यामश्च सप्तैते सोमसंस्था मतास्त्विह ।" इति ।

**सत्राणि** इति हिरण्यपादहिरण्यत्वगादीनि एकादश अश्वमेधं च। [**वनवासित्वं पारिव्राज्यं**] वानप्रस्थपरिव्राड्व्रतयुग्मम् । [**गुणाः**] अन्त्येष्टिं दयास्पृहाद्यात्मगुणाष्टकं चेति शोधयेदिति । तथा चोक्तम्—

"पादत्वग्गर्भमेदोऽस्थिगुह्यार्चिर्नाभितालुकाः ।
[4]श्रोत्रनेत्रा हिरण्याद्या दश चैकाधिका मखाः ॥
अश्वमेधो हिरण्याद्येकादशैर्वैदिका मखाः ।
वनवासः पारिव्राज्यं शोध्या चान्त्येष्टिरेव च[5] ॥
दया स्पृहानसूया च शान्तिः शौचं तु मङ्गलम ।
अकार्पण्यमनायासः शोध्या आत्मगुणा बुधैः ॥" इति । १५९-१६१ ॥

इत्थं कृते ततश्च—

**[6]दिव्योऽधिकारः[7] सामान्यो भुवर्लोकादिकस्ततः[8]**
**शोधयेद्विधिनोक्तेन [9]संस्कारान्हृदयेन तु ॥ १६२ ॥**

**ततः** अनन्तरं सर्वेषु वर्णान्तरविषयेष्वपि दीक्षाविधिषु **सामान्यः** साधारणो **दिव्योऽधिकारः** [**भुवर्लोकादिकः**] पैशाचादिदेवयोन्यात्मकान्तरलोकादिशुद्ध्या[10] [**उक्तेन विधिना शोधयेत्**] प्रागुक्तक्रमेण शोधनीयः । एतांश्च सर्वान् **संस्कारान्** [**हृदयेन**] हृन्मन्त्रेण कुर्यादिति प्रागेव दर्शितम् ॥ १६२ ॥

[1] B : पाशबन्धं
[2] B : अथ pour तथा
[3] B : शोध्योऽग्निष्टोमत्वमेव च
[4] B : श्रोत्रनेत्रहिरण्याद्येकादशैर्वैदिका मखाः । अश्वमेधपरिव्राड्त्वं शोध्या चान्त्येष्टिरेव च ॥
[5] C ajoute तथा
[6] cité par Nirmalamaṇi, p. 319.
[7] B : दिव्याधिकारः
[8] A : तथा pour ततः
[9] A : संस्कारात् pour संस्कारान्
[10] B : शुद्धिः pour शुद्ध्या

अथ [1]किमयमाम्नायोक्त[2]संस्कारविधिर्भुवनाध्वशुद्धावेव[3] कर्तव्यः । नेत्याह—

[4]आवैदिकक्रियाव्याप्तेरन्यत्रापि क्रियाभुवः ।
[5]नाधस्तादखिलप्रान्ते योजयेत्परमे पदे ॥ १६३ ॥

[**आवैदिकक्रियाव्याप्तेः**] यावद्वैदिक्याः क्रियाया व्याप्तिः [6]प्रागुक्तवद्देवयोन्यष्टकपर्यन्ता[7] तावद् **अन्यत्रापि** तत्त्वकलापदवर्णमन्त्राध्वन्यपि अयमेव क्रमोऽनुष्ठेयः । किं तु [**क्रियाभुवः नाधस्ताद्**] भुवर्लोकाधस्तान्नैतेषां संस्काराणां करणम् । [**अखिलप्रान्ते**] अखिलक्रियाप्रान्ते तु प्रागुक्तक्रमेण [**परमे पदे**] परमेश्वरे **योजयेद्** इति । एतद्विध्युपसंहारार्थत्वाद् योजनोक्तेर्न पौनरुक्त्यम् ॥ १६३ ॥

ततः कृतनतौ शिष्ये सर्वधामसु देशिकः ।
छिद्रं हुत्वा समुत्थाय कृतमावेद्य पूजितम् ॥ १६४ ॥
[8]दत्ताघ्र्यं प्रणतः [9]स्तुत्या क्षमस्वेति विसर्जयेत् ।
पुरस्थमनलस्थं च

**ततो**ऽनन्तरं [**सर्वधामसु**] सर्वेषु मण्डलकलशाद्यधिकरणेष्ववस्थिते भगवति [**कृतनतौ**] कृता [10]नतिर्नमस्कारो वन्दनं येन तस्मिन् तथाविधे **शिष्ये** प्रोक्तक्रमेण आत्मविद्याशिवाख्येषु पदेषु [**छिद्रं हुत्वा**][11] वाचिक-कायिक-मानसच्छिद्रनिवृत्त्यै होमं कृत्वा [**समुत्थाय**] उत्थाय भगवते [**कृतम् आवेद्य**] निर्वर्तितं विधिं निवेद्य [**पूजितं**] कृतार्चनं **दत्ताघ्र्यं** च कृत्वा [**प्रणतः स्तुत्या**] स्तुतिभिः प्रणम्य **क्षमस्वेति** उक्त्वा [**पुरस्थम् अनलस्थं च**] मण्डलादग्नेश्च **विसर्जयेत्** ॥ १६४ - १६५ ॥

ततः शुद्धावनौ गुरुः ॥ १६५ ॥
हविष्यभुग्वसेच्छिष्यैः कृतकृत्यैर्यतैर्युतः[12] ।

**ततो**ऽनन्तरं [**शुद्धावनौ**] शुद्धे स्थाने [**हविष्यभुग्**] हविषि[13] साधु हविष्यं कन्दमूलफलादि

[1] C : कथम् pour किम्
[2] B : आत्मार्थोक्त pour आम्नायोक्त
[3] C : शुद्धिरेव pour शुद्धावेव
[4] B : अवैदिक pour आवैदिक
[5] A : नादस्थादखिले प्रान्ते
[6] B : प्रागुक्तदेव pour प्रागुक्तवद्देव ; C : प्रागुक्तवदेव
[7] B : पर्यन्तं pour पर्यन्ता
[8] A : दत्त्वाघ्र्यं
[9] B et C : स्तुत्वा
[10] B : आनति pour नति
[11] C : कायिकवाचिक pour वाचिककायिक
[12] B et C : कृतकृत्यैर्युतैस्ततः ; A : कृतकृत्ययुतैर्युतः
[13] B : हविष्यं pour हविषि

भुक्त्वा **गुरुः** तद्दर्शनपवित्रितैः [**कृतकृत्यैः**] कृतोक्तकरणीयैः [**यतैः**] [1]संयतात्मभिः शिष्यैः [**युतः वसेत्** ] सहासीत[2] ॥

**ततश्चण्डेशनाथस्य पुरं पञ्चांशवर्जितम् ॥ १६६ ॥**

**विधाय मण्डलं यागः कार्यः [3]शिववदेव तु ।**

[**ततः**] पश्चात् [**चण्डेशनाथस्य**] चण्डेश्वरनाथस्य [**पुरं**] मण्डलं कार्यम् । कीदृशमित्याह— **मण्डलम्** इति वर्तुलमर्धचन्द्राकारत्वात् । उक्तं हि यागप्रकरणे—

"[4]चण्डेशामृतविद्यानां श्वेतमर्धेन्दुसंस्थितिः ।" इति

[**पञ्चांशवर्जितं**] पञ्चमांशवर्जितं चतुरंशक्षेत्रमानं गृहीत्वा तावता सूत्रेण अर्धेन्दुक्रमेण **मण्डलं** तन्मध्ये च पद्मं [**विधाय**] कृत्वा [**शिववदेव**] मुख्ययागविधिना तत्र **यागः कार्यः** । तथा ह्युक्तं श्रीमत्स्वायंभुवे[5]—

"आम्नातस्य हि मानस्य भागं त्यक्त्वा च पञ्चमम् ।
शेषमानसमं सूत्रं भ्रामयेदर्धचन्द्रवत् ॥
तस्य मध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकम् ।
द्वात्रिंशदङ्गुलसमं करमानमथापि वा ।" इति

**किं तु स्रग्गन्धधूपादि रजोरेखोदरस्थितम् ॥ १६७ ॥**

**[6]नादद्याद्विनियोगार्थमितरत्र[7] द्विजोत्तम ![8] ।**

[9]**किं तु** मुख्ययागादनन्तरमयं विशेषः । यदवतीर्णे चण्डनाथे [**रजोरेखोदरस्थितं**] रजोरेखायां दत्तायां तद्रेखान्तःस्थं [**स्रग्गन्धधूपादि**] किंचिदपि [**इतरत्र**] अन्यत्रापि **विनियोगार्थं** [**नादद्याद्** ] [10]न गृह्णीयात् ॥

**[11]स्नातान् शुचीन्समाचान्तान् [12]शिष्यांश्चण्डात्मनः पुरः ॥ १६८ ॥**

**कृतेष्टीन्प्रणतान्ब्रूयात्समयान्समयस्थितान् ।**

[1] B : संहत pour संयत
[2] B : आसीनः pour आसीत
[3] A : शिवपदे चतु ; B : शिवपदे चतुः
[4] cf. *Kriyāpāda*, *paṭala* 8, *śloka* 36b.
[5] cf. *Svāyambhuvāgama*, *paṭala* 26, *śloka* 2-3.
[6] B : न दद्याद् pour नादद्याद्
[7] A et B : इति तत्र pour इतरत्र
[8] En ms. C les demi-*śloka* 168b et 169a se trouvent ici.
[9] B omet किं तु ; C : किं च pour किं तु
[10] B omet न
[11] cf. note 8
[12] A, B et C : शम्भोः pour शिष्यान्

ततस्तु सापेक्षदीक्षाभाक्त्वतः [**समयस्थितान्**] समये स्थितान् **शिष्यान् स्नातान्** [**शुचीन्**] शुद्धस्वभावान् [**समाचान्तान्**] सम्यगाचान्तान् [**चण्डात्मनः कृतेष्टीन्**] पूजितचण्डेश्वरान् [**प्रणतान्**] कृतप्रणामांश्च [**पुरः**] तस्याग्रे वर्तमानान् **समयान्** [**ब्रूयात्**] श्रावयेत् । शिष्यानिति बहुवचनेनैतत्सूचितं यद्बहवोऽप्येककालं[1] दीक्ष्याः । यथोक्तं श्रीमत्**पौष्करे**—

"एकस्य दीक्षा कर्तव्या द्वयस्याथ त्रयस्य वा" इति ॥

अथ केन कारणेन प्राप्तदीक्षोऽपि समयाननुतिष्ठेत् । यदर्थं चण्डेश्वरस्याग्रतः समयश्रावणं[2] शिष्यस्य कार्यमित्यत्राह[3]—

**येन विप्लुतिमापन्नं ब्रह्मादिव्यक्तशक्तिकम्**[4] ॥ १६९ ॥
**चण्डरूपः स्वयं शंभुर्निरुणद्ध्यपि निष्कृतम् ।**

[**येन**][5] यस्मात् परमेश्वराज्ञप्तसमयोल्लङ्घनाद् [**विप्लुतिमापन्नं**] विप्लुतिं प्राप्तं [**निष्कृतम् अपि**] निरतिशय[6]दीक्षाख्यशुद्धिभाजमपि [**ब्रह्मादिव्यक्तशक्तिकं**] ब्रह्मादिकारणेशव्यक्त[7]शक्तिकमणुं **स्वयं** [**शम्भुः**] परमेश्वर एव [**चण्डरूपः**] चण्डेश्वररूपो **निरुणद्धि** ब्रह्मादिकव्यादयोनिषु नियच्छतीत्येतद्यद्यपि पूर्वमेव प्रदर्शितं तथाप्याचारार्थमिहोपन्यस्तम् ॥

अथ तान् समयानाह—

**निन्दा शिवशिवज्ञानगुर्वग्निशिवयज्वनाम् ॥ १७० ॥**
**लङ्घनं दीक्षित[8]च्छायाशिवार्चाङ्ग[9]बलिस्रजाम् ।**
**तद्दानभक्षणे [10]चेशस्वशब्दाधिकृतस्य च ॥ १७१ ॥**
**[11]तज्जीवसूतकप्रेतपुष्पवत्यन्नभोजनम् ।**
**महासमयगर्ताः स्युरिमाः पतनभीरुणा ॥ १७२ ॥**
**परिहृत्य [12]विचर्तव्यमितीशः स्वयमब्रवीत् ।**

[1] C : काल pour कालं
[2] B : श्रवणं pour श्रावणं
[3] C : इत्याह pour इत्यत्राह
[4] A et C : शक्तिकः pour शक्तिकम्
[5] B : यस्याः pour यस्मात्
[6] B : दीक्षाभाजमपि
[7] C : शक्तितस्तत्स्वमणुं pour शक्तिकमणुं
[8] B : च्छाय pour च्छाया
[9] C : परि pour बलि
[10] C : शौचशाप्यशब्दाधिकृतस्य च
[11] C : तजिह्व pour तज्जीव
[12] A : विवर्तव्यम् pour विचर्तव्यम्

**[शिव-शिवज्ञान-गुरु-अग्नि-शिवयज्वनां]** शिवभट्टारकस्य तदादिष्टस्य ज्ञानस्य गुरोरग्नेः शिवयागपरस्य[1] **निन्दा** पतनहेतुः । **[दीक्षितच्छाया-शिवार्चाङ्ग-बलिस्रजां]** दीक्षितच्छायायाः[2] शिवार्चाङ्गानां च तत्पूजोपकरणानां तद्बलिस्रजां च उपयुक्तानाम् उपयोक्ष्यमाणानां वा **लङ्घनम्** ईदृशमेव । **तद्दानभक्षणे च** इति । तस्य तत्संबन्धिनो बलिस्रजां च [3]भक्षणं दानं **च** पतनहेतू । किं च **[तज्जीव-सूतक-प्रेत-पुष्पवत्यन्नभोजनं]** तेन [4]परमेश्वरेण संबन्धिना ये जीवन्ति ते तज्जीवाः, तेषाम् ; तथा सूतकमृतकाशौचवतां पुष्पवत्याश्च रजस्वलायाः संबन्धिनोऽन्नस्य भोजनम् **इत्येताः** [5]**सर्वाः [महासमयगर्ताः]** समयरूपा गर्ता इव गर्ताः श्वभ्राणि तासु गर्तासु **[पतनभीरुणा]** यः पतनभीरुस्तेन **[इमाः]** एताः **परिहृत्य [विचर्तव्यं]** विचरणीयमिति **स्वयम् [ईशः]** परमेश्वरः **[अब्रवीद्]** आदिष्टवान् ॥

**अतोऽन्ये समयाचाराः शैवे वर्त्मनि तिष्ठताम् ॥ १७३ ॥**
**चर्यापादेऽभिधास्यन्ते चर्या वै चरणं यतः ।**

**[अतोऽन्ये]** [6]एतेभ्यो येऽन्ये **समयाचाराः [शैवे वर्त्मनि तिष्ठतां]** शिवमार्गस्थानां ते **चर्यापादे [अभिधास्यन्ते]** वक्ष्यन्ते **[यतः] [चरणम्]** आचरणं **चर्या** तदुक्त्या च सर्वाचारकथनं भविष्यतीति ॥

[7]**ततोऽग्नौ यज्ञशेषेण** [8]**सहस्रेण शतेन वा ॥ १७४ ॥**
**तर्पयित्वा क्षमस्वेति चण्डनाथं विसर्जयेत् ।**

**[ततः]** पश्चात् **[यज्ञशेषेण]** शिवहोमावशिष्टेन[9] आज्यादिना **सहस्रेण** पञ्चभिर्वा शतैः **शतेन वा चण्डनाथं [तर्पयित्वा]** संतर्प्य प्रणम्य [10]च स्तुत्वा **क्षमस्वेति [विसर्जयेत्]** विसर्जनं कुर्यात् ॥

[11]**ततः प्रशस्ते दिग्भागे भूतले स्वस्तिकाङ्किते ॥ १७५ ॥**
**कुर्यादवभृथं शंभुकुम्भेनास्त्राम्बुपूर्वकम् ।**

[1] B : पुरस्य pour परस्य
[2] C : च्छायायामिव pour च्छायायाः
[3] B : लङ्घनं pour भक्षणं
[4] B : परमेश्वरसंबन्धिना
[5] B omet सर्वाः
[6] Le passage एतेभ्यो येऽन्ये à आचरणं चर्या manque en ms. B.
[7] Cité par Nirmalamaṇi, p. 364.
[8] A : साहस्रेण
[9] C : विशिष्टेन pour अवशिष्टेन
[10] C omet च
[11] Les *śloka* 175b, 176 et 177a sont cités par Nirmalamaṇi, p. 366.

[1]तदास्तां दुरितध्वंसिमन्त्रोच्चाराभिसन्धिमत् ॥ १७६ ॥
विप्रुषोऽपि तदुद्भूता न तुल्याः पशुशान्तिभिः ।

**ततो**ऽनन्तरं [**प्रशस्ते दिग्भागे**] पूर्वोत्तरपश्चिमेभ्योऽन्यतमस्मिन् दिग्भागे [**स्वस्तिकाङ्किते**] स्वस्तिकचिह्निते [**भूतले**] भूपृष्ठे **अस्त्राम्बुपूर्वकं** [**शिवकुम्भेन**] शिवकुम्भाम्भोभिः **अवभृथं** [2]यज्ञाभिषेकं **कुर्यात्** । तस्य च शिवयागावभृथस्नातस्य [**दुरितध्वंसिमन्त्रोच्चाराभिसन्धिमत्**] परव्याप्त्यवलम्बनपूर्वकमन्त्रोच्चारादियोगित्वम् [**तद्**] **आस्तां** तिष्ठतु । विनापि मन्त्रोच्चाराभिसन्धानेन यथा तथा **विप्रुषोऽपि** [**तदुद्भूताः**] तदुत्थिताः [**पशुशान्तिभिः**] पशुदर्शन[3]प्रथिताभिः शान्तिभिः **न तुल्याः** । तासां विप्रुषां [4]तच्छान्त्यगोचरनिश्रेयसप्राप्तिहेतुत्वात् ॥

ततः प्रणम्य श्रद्धावान्गुरुं सर्वस्वपूजया ॥ १७७ ॥
पूजयित्वाभ्यनुज्ञातो विहरेत्कामतो मुने ।
पुत्रकः कर्मसु [5]स्वेषु देशिकोत्तमसाधकौ ॥ १७८ ॥
[6]प्रयतेतामनुज्ञातावभिषेकादनन्तरम् ।

[**ततः**] अवभृथस्नानोत्तरकालं [**श्रद्धावान्**] श्रद्धालुः **प्रणम्य** [**सर्वस्वपूजया**] सर्वस्वदक्षिणया **गुरुं** [**पूजयित्वा**] अभ्यर्च्य [**अभ्यनुज्ञातः**] तदनुज्ञातः **पुत्रकः** [**कामतः**] इच्छातो [7]**विहरेत्** । **देशिकोत्तमसाधकौ** आचार्यसाधकौ **तु** [**अभिषेकादनन्तरं**] प्राप्ताभिषेकौ [**अनुज्ञातौ**] गुर्वनुज्ञया [**स्वेषु कर्मसु**] स्वे स्वे [8]कर्मणि [9]**प्रयतेताम्** [10]अभिधास्यमानस्वस्वव्यापारपरौ स्याताम् ॥

## [11]अथाचार्याभिषेकः

अथ प्राप्ताभिषेकत्वश्रुतेरभिषेकजिज्ञासया मुनेः प्रश्नः—

आभिषेचनिकं कर्म देशिकस्येतरस्य च ॥ १७९ ॥

[1] Nirmalamaṇi : तदास्वाद् दुरितध्वंसो
[2] C : यत्र pour यज्ञ
[3] C : प्रणीताभिः pour प्रथिताभिः
[4] C : तज्जाति pour तच्छान्ति
[5] A : स्वे वा pour स्वेषु
[6] B : यतेयाताम् pour प्रयतेताम्
[7] C : अभिचरेत्
[8] C : विधौ pour कर्मणि
[9] B et C : प्रयतेयाताम् pour प्रयतेताम्
[10] B omet अभिधास्यमान
[11] C omet अथाचार्याभिषेकः

[1]लक्षणं च तयोर्ब्रूहि तत्त्वतः पाकशासन ! ।

अभिषेचनं प्रयोजनमस्य **आभिषेचनिकं कर्म** तद् **देशिकस्य** आचार्यस्य [2]यथा तथा च **इतरस्य** साधकस्य [3]यच्च [**तयोः**] अनयोर्देशिकसाधकयोः **लक्षणं** तदप्यस्माकं **तत्त्वतः** परमार्थतः [**पाकशासन**] त्रिदशेश्वर [**ब्रूहि**] आचक्ष्व ॥

अत्रेदमैन्द्रं वचः—

श्रूयतां मुनिशार्दूल देशिकस्याभिषेचनम् ॥ १८० ॥
साधकस्य च [4]तल्लेशाल्लक्षणोक्तिपुरःसरम् ।

[**मुनिशार्दूल**] हे मुनिश्रेष्ठ! यत्पृष्टं साधकाचार्ययोः [**अभिषेचनं**] अभिषेकविधानं **तत्** प्रथमं [**देशिकस्य**] आचार्यस्य **श्रूयताम्** । तनन्तु तेनैव गतार्थत्वाद्विशेषोक्त्या **लेशात्** संक्षेपात् [**साधकस्य च**] साधकस्यापि तथा आकर्ण्यताम् । एतच्चोभयमपि **लक्षणोक्तिपुरःसरं** तयोर्लक्षणोक्तिपुरःसरमत्र कथनेन **तद्** आभिषेचनिकं कर्मावधार्यतामित्यर्थः ॥

तत्र तावत्साधकलक्षणस्य वक्ष्यमाणत्वात्प्रथमोद्दिष्टस्याचार्याभिषेच्यस्येदानीं[5] लक्षणमाह—

अथौदार्यदयादाक्ष्यदमश्रद्धासमन्वितम् ॥ १८१ ॥
[6]तन्त्रज्ञानानलालीढसंशयासारसंचयम् ।
शिवदीक्षासिविच्छिन्न[7]पाशमीशप्रियप्रियम्[8] ॥ १८२ ॥
तन्त्रवस्तुमहाकोशगोप्तारं शिवपूजकम् ।
शास्त्रान्वयागताचारं[9] द्विजाग्र्यं पुण्यदेशजम् ॥ १८३ ॥
[10]प्रशस्तदेहावयवं गम्भीरमधुरस्वरम् ।
[11]अदीनं नातुरं [12]नाधश्चक्षुषं सत्परिक्रमम् ॥ १८४ ॥
[13]सत्सारमुत्तमोन्मानं [14]भारार्धोत्तरगौरवम् ।

[1] B : अनयोर्लक्षणं ब्रूहि तत्त्वतस्त्रिदशेश्वर
[2] C : तथा यथा pour यथा तथा
[3] B : यश्च pour यच्च
[4] A : तल्लेश pour तल्लेशाद्
[5] B : इदं pour इदानीं
[6] A : तत्र pour तन्त्र
[7] C : शिवच्छिन्न pour असिविच्छिन्न
[8] A : ईशप्रियं प्रियम् pour ईशप्रियप्रियम्
[9] A : गताचारं pour आगताचारं ; C : आगताचार
[10] D : प्रशान्त pour प्रशस्त
[11] B : आदीनं
[12] A : नाथचक्षुषं ; B : नाथश्चक्षुषं
[13] A : संसारमुक्तमात्मानं
[14] B : भारार्थ pour भारार्ध

**भूवारि[1]पावकव्योमच्छायमित्यादिलक्षणम् ॥ १८५ ॥**
**विधिना वक्ष्यमाणेन गुरुर्गुरुपदं नयेत् ।**

**अथ** अनन्तरम् एवंविधलक्षणोपपन्नं शिष्यं **गुरुः [वक्ष्यमाणेन विधिना]** वक्ष्यमाणक्रमेण[2] **[गुरुपदं नयेद्]** गुरुत्वेऽभिषिञ्चेत् । कीदृशमित्याह—**औदार्येत्यादि** । **औदार्यम्** औचित्यम् । **दया** कृपा । **दाक्ष्यं** चातुर्यम् । [3]**दम** उपशमः । **[श्रद्धासमन्वितं]** श्रद्धा आदरः तद्युक्तम । **[तन्त्रज्ञानानलालीढसंशयासारसंचयम्]** तन्त्रज्ञानमेवानलः तेनालीढः क्षपितः संशयासारसंचयः सन्देहतृणनिचयो येन । [4]असारशब्देन निःसारत्वात् तृणान्यत्र विवक्षितानि । यथा [5]किलातितीव्रेण दीप्तेनाग्निना[6] झटिति तृणसमूहो दह्यते एवमनेक[7]शास्त्रज्ञानेन यो निरस्तसकलसन्देहस्तमभिषिञ्चेत्[8] । न त्वप्रबुद्धम् । उक्तं श्रीमत् **स्वायंभुवे**—

“ [9]नानाशास्त्रपरिज्ञातं गुरुमत्र करोतु वै ।
संहितापारगस्यैव सेकः कार्योऽन्यथा नहि[10] ॥ ” इति ।

तथा **[शिवदीक्षासिविच्छिन्नपाशं]** शिवदीक्षैव असिः [11]खड्गः तेन छिन्नाः पाशाः यस्य तम् । किं च **ईशप्रियप्रियम्** इति, ईशः प्रियः येषां ते शिवप्रियास्तेषु प्रियं यस्य तम् । **[तन्त्रवस्तु-महाकोश-गोप्तारं]** तन्त्रवस्त्वेव महाकोशः उत्कृष्टोऽर्थः तस्य रक्षकमिति गाम्भीर्यमभिहितम् । [12]तद्गोपनतः सिद्धेः सुलभत्वाद् अनर्हेषु [13]प्रकाशनलक्षणं यद्गोपनं ततः प्रत्यवाययोगाच्च[14] । वक्ष्यति हि **योगपादे**[15]—

“ नाल्पकालोपितायैतद्देयं नातिप्रमादिने ।
नामेधिने नातपसे [16]यश्च नाभ्यर्चयेच्छिवम् ॥ ” इति ।

**शिवपूजकम् इति,** न तु ज्ञानावलम्बनात् क्रियाविमुखम्[17] । **शास्त्रान्वयागताचारम्** इति

[1] C : पावकं pour पावक.
[2] B : लक्षणेन pour क्रमेण
[3] C omet दम उपशमः
[4] C : आधार pour असार
[5] C : किलातिप्रदीप्तेन pour किलातितीव्रेण दीप्तेन
[6] B ajoute इव
[7] B : अनेन pour अनेक
[8] C : अभिषिञ्चयेत्
[9] C omet ce demi-*śloka*
[10] cf. *Kiraṇāgama*, II, 15, 2.
[11] B : खंग pour खड्ग
[12] B : तद्गोपनतस्सिद्धेः pour तद्गोपनतः सिद्धेः
[13] C : अप्रकाशलक्षणं pour प्रकाशनलक्षणं
[14] B : योगाश्च pour योगाच्च
[15] cf. *Mṛgendrāgama*, *Yogapāda*, *śloka* 64.
[16] C : यच्च pour यश्च
[17] C : विमुखात् pour विमुखम्

शास्त्रम् आगमः[1] अन्वयः शिष्टाचरण[2]स्वसन्तानादिसिद्ध[3] आचारश्च तदागतस्तेभ्यो वा आगतः अनतिक्रान्तश्च आचारो यस्य तम्। [4]यतः [5]केवलशास्त्रा[6]चारानुष्ठाने शिष्टाचारादिविरुद्धाचरणे च लोकदुष्टः स्यात्। [7]यदुक्तम्—

"यद्यपि स्यात्त्रिकालज्ञस्त्रिलोक्युत्कर्षणक्षमः[8]।
तथापि लौकिकाचारं मनसापि न लङ्घयेत्॥" इति।

[9]**द्विजाग्र्य**मिति[10]—द्विजो ब्राह्मणः [11]अग्र्यः प्रथमो यस्य। ब्राह्मणवर्जितस्य वर्णत्रयस्य त्रिषु क्षत्रियः द्वयोर्वैश्यः [12]स्वजातेरेव शूद्र [13]इत्यागमान्तरेषूक्तत्वात्। **पुण्यदेशजम्** इति, [14]ब्रह्मावर्तादिः पुण्यो देशः पावनतीर्थ[15]सरित्समुद्रपर्वतादिसन्निवेशश्चान्योऽपि। यथोक्तं [16]**महाभारतादौ**[17]—

"काश्मीरमण्डलं पुण्यं सर्वतीर्थमरिन्दम।" इति।

एवमन्येष्वपि देशेषु शास्त्रान्तरे कृतप्रशंसेषु[18] जातम्[19]। "सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्याः" इति [20]**वासिष्ठ**स्मरणात्[21]। [**प्रशस्तदेहावयवं**] प्रशस्तः शुभलक्षणोपपन्नो देहस्तदवयवो वा यस्य तम्। एवं [**गम्भीरमधुरस्वरं**] गम्भीरः [22]चिरस्थायी मधुरश्च श्राव्यः [23]स्वरः शब्दो यस्य तथा तमेवंविधम्। **अदीन**मिति तेजस्विनम्। **नातुर**मिति अरुजम्। **नाधश्चक्षुष**मिति न [24]भूमीक्षणपरम्। **सत्परिक्रम**मिति शोभनगतिम्। [25]तथा **सत्सारं** महाबलम्। **उत्तमोन्मान**मिति उत्तमम् अष्टोत्तराङ्गुलशतात्मकमुन्मानमुच्छ्रायो यस्य। [**भाराधोत्तरगौरवं**] भारार्धाच्च उत्तरम् अभ्यधिकं गौरवं गरीयस्त्वं यस्य तथा। [**भू-वारि-पावक-व्योम-च्छायं**] भूवारिपावकादीनामिव [26]पीतसितारुणदेहकान्तिर्यस्य तम्। [**इत्यादिलक्षणम्**] एवमादिलक्षणयुक्तं **गुरुर्गुरुपदं** [**नयेत्**] [27]प्रापयेदित्युक्तम्॥

[1] C : शास्त्रागमः pour शास्त्रम् आगमः
[2] C : शिष्टाचरणं pour शिष्टाचरण
[3] B : सिद्धिः pour सिद्धः
[4] B omet यतः
[5] C : स्वकल्प pour केवल
[6] B omet आचार
[7] cf. Nirmalamaṇi, p. 380
[8] C : त्रैलोक्याकर्षणक्षमः
[9] Le passage द्विजाग्र्यमिति à इत्यागमान्तरेषूक्तत्वात् est cité par Nirmalamaṇi, pp. 369-370.
[10] C : द्विजात्यमिति
[11] B : अग्रः pour अग्र्यः
[12] B : स्वजात्यन्तरेव
[13] B : इत्यागमान्तरोक्तत्वात्
[14] B : ब्रह्मावर्तादिपुण्यदेशः
[15] C omet सरित्
[16] C : भारतादौ pour महाभारतादौ
[17] cf. *Mahābhārata*, III, 132, 10
[18] B : प्रशंसिषु pour प्रशंसेषु
[19] B et C : ज्ञेयम् pour जातम्
[20] cf. *Vāsiṣṭhadharmaśāstra*, 22, 12
[21] C : श्रवणात् pour स्मरणात्
[22] C : स्थिर pour चिर
[23] B : स्मर pour स्वरः
[24] C : दूषण pour भूमीक्षण
[25] B omet तथा
[26] C : पीतसितारुणादिच्छायादेहादिर्यस्य तम्
[27] C : प्रापयति pour प्रापयेद्

अथ कालविशेषमाह—

उदङ्मार्गप्रवृत्तेऽर्के शुक्लपक्षे दिने शुभे[1] ॥ १८६ ॥

[2]प्राजापत्योत्तरापुष्य[3]मैत्रसावित्रसंस्थिते[4] ।

वासव्यरेवतीत्वाष्ट्रवैष्णवादित्यगे[5]ऽपि वा ॥ १८७ ॥

ताराभर्तर्यनुत्पात[6]ग्रहवेधाद्युपप्लवे ।

[उदङ्मार्गप्रवृत्तेऽर्के] उदगयने शुक्लपक्षे दिने च शुभग्रहयोगादिना स्वभावेन [7]रिक्तादि-दोषरहितत्वतः शुभे [8]श्रेष्ठे [9]प्राजापत्यादिनक्षत्रस्थे ताराभर्तरि[10] । कीदृशि [अनुत्पात-ग्रहवेधाद्युपप्लवे] अविद्यमानो [11]वैवर्ण्यचापल्याकृतिवैरूप्यादिः [12]उत्पातो यस्य तस्मिन् । [13]यदाहुर्ज्योतिर्विदः—

"भस्मनिभः [14]परुषोऽरुणमूर्तिः शीतकरः किरणैः परिहीणः ।

श्यावतनुः स्फुटित[15]स्फुरितश्चाक्षेमकरामय[16]चोरभयाय ॥ इति ।

तथा भौमसौम्य[17]सौर्यादिसर्वग्रहवेधाद्युपप्लवो[18] नास्ति यस्य तस्मिन् । प्राजापत्यं रोहिणी । मैत्रम् अनूराधा । सावित्रं हस्तः । वासव्यं धनिष्ठा । त्वाष्ट्रं चित्रा । वैष्णवं श्रवणम् । आदित्यम् अदितिदैवत्यं[19] पुनर्वसुः ॥

ततश्च—

प्राग्वदिष्ट्वा महेशानं [20]दिक्षु [21]कुम्भेष्विदं न्यसेत्[22] ॥ १८८ ॥

[प्राग्वत्] [23]पूर्वोक्तक्रमेण [महेशानं] परमेश्वरम् [इष्ट्वा] अभ्यर्च्य [दिक्षु] प्रागादिदिक्चतुष्टये

[1] A et B : शुभे दिने pour दिने शुभे

[2] B : प्रजापति pour प्राजापत्य

[3] A et B : पुष्ये pour पुष्य

[4] A et B : संज्ञिते pour संस्थिते

[5] A : आदित्यके pour आदित्यगे ; B : आदित्यभे

[6] A et B : अनुत्पन्न pour अनुत्पात

[7] B : रिक्तादि pour रिक्ततादि

[8] C : विशे pour श्रेष्ठे

[9] B : प्रजापत्यादि

[10] C ajoute इत्यादौ

[11] B omet वैवर्ण्य

[12] B omet उत्पातो

[13] cf. *Bṛhatsaṃhitā*, IV, 29.

[14] C : पुरुषो pour परुषो

[15] B : स्फुरित pour स्फुटित

[16] C : क्षुन्मरकात्यय pour अक्षेमकरामय

[17] C : सौरादि pour सौर्यादि

[18] B : ग्रहवेध उपप्लवो pour ग्रहवेधाद्युपप्लवो

[19] C : दैवतं pour दैवत्यं

[20] D : दीक्षा pour दिक्षु

[21] A, B et C : कुम्भेषु विन्यसेत् pour कुम्भेष्विदं न्यसेत्

[22] En ms. C les *śloka* 189 et 190 se trouvent ici ; cf. p. 189, note 4.

[23] Le passage पूर्वोक्तक्रमेण à पञ्चकुम्भान् न्यस्य manque en ms. B.

ऐशान्यां च पञ्च कुम्भान् न्यस्य तेषु [**कुम्भेषु**] **इदं**[1] वक्ष्यमाणम् ओषधिरत्नधातुलोहादि [2]**न्यसेत्** ॥

तत्रौषधीस्तावदाह[3]—

**[4]सहदेवीमथ ब्राह्मीं त्रायन्तीं लक्षणावतीम् ।**
**[5]शङ्खपुष्पीबला[6]बीजाज्योतिष्मत्यपराजिताः ॥ १८९ ॥**

**[7]विष्णुक्रान्ताबलामोटा[8]बिल्व[9]धात्र्यभयामृताः ।**
**शताह्वाशारिबादूर्वाकुशव्याघ्रीपुनर्नवाः ॥ १९० ॥**

एभिरेव नामभिः प्रसिद्धाः । [**लक्षणावती**] [10]लक्षणाख्यापि । एवं **ज्योतिष्मती** [11]कटभा [12]सुपर्णा इत्यादिपर्यायैः प्रसिद्धा । **अपराजिता** श्वेतगिरिकर्णिका । **शताह्वा** शतावरी । **शारिबा** प्रसिद्धा[13] । एताः सहदेव्याद्याः पुनर्नवान्ता द्वाविंशत्योषधीर्न्यसेत् ॥ १८९-१९० ॥

किं च—

**यवादीनि च बीजानि रसांश्च लवणादिकान् ।**
**रत्नानि सर्वगन्धांश्च लोहान्यष्टौ[14] च शास्त्रवित् ॥ १९१ ॥**

**यवादीनि बीजानि**, [**लवणादिकान्**] लवणतिक्तमधुरकषायकटुकाम्लांश्च षड् **रसान्**, वज्रेन्द्रनीलादीनि **रत्नानि च**, **सर्वगन्धान्** इति चन्दनागरुकर्पूरादिगन्धद्रव्याणि, [**अष्टौ लोहानि**] सुवर्णादिलोहाष्टकं [**शास्त्रवित्**] तन्त्रज्ञो गुरुर्न्यसेत् ॥ १९१ ॥

**हरितालं [15]शिलां काङ्क्षीं [16]कासीसाञ्जनगैरिकम् ।**

[1] C : अयं pour इदं
[2] C : विन्यसेत् pour न्यसेत्
[3] C ajoute सहदेवीमिति
[4] cf. p. 188 note 22; les *śloka* 189 et 190 sont cités par Nirmalamaṇi pp. 373-374.
[5] A : शङ्खपुष्पं बलं pour शङ्खपुष्पीबला
[6] A et B : बीज pour बीजा
[7] Nirmalamaṇi : विष्णुक्रान्ति pour विष्णुक्रान्ता
[8] A : मोहा pour मोटा
[9] Nirmalamaṇi : धात्रीफल pour धात्र्यभया
[10] B : लक्षणाख्येयम् pour लक्षणाख्यापि । एवं
[11] C : कुटहा pour कटभा
[12] C : सुवर्णा pour सुपर्णा
[13] B : प्रसिद्धैव
[14] C : अष्ट pour अष्टौ
[15] A : शिलाकाङ्क्षी ; B : शिलाकाक्षीं ; C : शिलाकाङ्क्षीं
[16] A : सीसाञ्जनं च गौरिकम् ; B : कांसीसाञ्जनगैरिकम्

[1]विमलं माक्षिकं [2]धातून् [3]माङ्गल्यानपरानपि ॥ १९२ ॥
[4]कुम्भांश्च पञ्च तन्मन्त्रैः सद्याद्यैरालभेत्ततः ।

हरितालादि तत्र [5]पञ्चकुम्भान्तर्न्यसेत् । **शिला** मनःशिला । [6]**काङ्क्षी** सौराष्ट्रमृत्तिका[7] **कासीसं**[8] कापिशाख्यया[9] प्रसिद्धम् । **अञ्जनं** सौवीरकम् । **गैरिकं** सुवर्णगैरिकम् । [**विमलं**] विमलाख्यं[10] सुवर्णपाषाणाकृतिर्धातुविशेषः । **माक्षिकं** हेममाक्षिकम् । [**अपरानपि**] अन्यानपि **माङ्गल्यान्** धातुविशेषा[11]ननुक्तान् न्यसेत् । [**ततः**] [**सद्याद्यैः**] सद्योजातादिभिश्च **तन्मन्त्रैः** [**कुम्भांश्च पञ्च**] एतत् कुम्भपञ्चकम् [**आलभेद्**] अभिमन्त्रयेत्[12] ॥

कथमित्याह—

[13]पश्चिमं सद्यमन्त्रेण वामेनोत्तरतः स्थितम् ॥ १९३ ॥
दक्षिणं बहुरूपेण नरेण प्राग्व्यवस्थितम् ।
ईशानेनेशमालभ्य सर्वान्साङ्गेन शम्भुना ॥ १९४ ॥

पृथक् सद्योजातादि[14]ब्रह्मपञ्चकेन [**आलभ्य**] [**सर्वान्** ] सर्वांश्च **साङ्गेन** [**शम्भुना**] मूलमन्त्रेण आलभेत ॥ १९३ - १९४ ॥

मन्त्रेशगणदिङ्नाथमण्डलैरायुधैस्तथा ।
प्राग्विद्यया च कण्ठेषु [15]स्रक्सूत्रकृतभूषणान् ॥ १९५ ॥
चन्दनागरुसंलिप्तांश्चूताङ्कुरफलाननान् ।
सत्पटप्रावृतानर्च्य कुर्यादस्याभिषेचनम् ॥ १९६ ॥

तांश्च कुम्भान् [**मन्त्रेश-गण-दिङ्नाथ-मण्डलैः**] मन्त्रेशानाम् अनन्तादिविद्येश्वराणां **गणानां** च नन्दिमहाकालादीनां **दिङ्नाथानाम्** इन्द्रादीनां **मण्डलैस्त्रिभिरष्टकैः** [**आयुधैः**] वज्रादिभिः **प्राग्विद्य-**

[1] A : निमलं
[2] B : धातुं pour धातून् ; C et D : धात्रं
[3] B : मङ्गल्यान् pour माङ्गल्यान्
[4] A et C : पञ्चगव्यं तु तन्मन्त्रैः
[5] C : पञ्चगव्यान्तर्न्यसेत्
[6] B : काक्षी
[7] B : मूर्तिका pour मृत्तिका ; C : मुक्तिका
[8] B : कांसीसं
[9] B : काविशाख्यायां
[10] C : विमलतां pour विमलाख्यं
[11] C omet न
[12] B : अभिमन्त्र्य pour अभिमन्त्रयेत्
[13] Les *śloka* 193b et 194 sont cités par Nirmalamaṇi, page 374.
[14] C omet ब्रह्म
[15] C : हृत्मूल pour स्रक्सूत्र

**या च** मातृकाख्ययाभिमन्त्र्य **कण्ठेषु** [**स्रक्-सूत्र-कृतभूषणान्**] स्रग्भिः सूत्रैश्चोपवीतादिभिः कृतभूषणान् [**चन्दनागरुसंलिप्तान्**] चन्दनकर्पूरागरुकुङ्कुमाद्यनुलिप्तान् [**चूताङ्कुरफलाननान्**] चूतप्रसूनपल्लव-[1]फलगर्भमुखान्[2] [**सत्पटप्रावृतान्**] शोभनदुकूलादि[3]वासःप्रावृतान् कृत्वा [**अर्च्य**] अभ्यर्च्य **अस्य** आचार्यस्य [**अभिषेचनम्**] अभिषेकं **कुर्यात्** ॥ १९५ - १९६ ॥

कुत्रावस्थितस्येत्याह—

**ऐशान्यां कल्पिते पीठे सविताने [4]स्वलंकृते ।**
**मन्त्रपीठत्वमापन्ने [5]लग्नांशे सौम्यवीक्षिते ॥ १९७ ॥**

[**ऐशान्याम्**] ईशानदिग्भागे [**सविताने स्वलंकृते पीठे मन्त्रपीठत्वमापन्ने**] वितानसहितं पुष्पपट्टादिभिरलंकृतं यत्पीठं विद्यातत्त्व[6]व्याप्तिकमासनं मन्त्रपीठत्वं तद्भावं प्राप्ते, तस्मिन् पीठे निवेश्याभिषिञ्चेदित्यग्रस्थितेन[7] संबन्धः । तथाविधव्याप्तिभावनया मन्त्रपीठत्वापत्तिः पीठस्य । [**लग्नांशे सौम्यवीक्षिते**] लग्नस्य [8]संबन्धिन्यंशके शुक्रबुधगुरुभिर्दृष्टे । यत्र किल [9]स्थाने ग्रहस्तिष्ठति तस्माद्दशमं तृतीयं च दृष्टिपादेन[10] पश्यति । नवमपञ्चमे द्वे स्थाने दृष्ट्यर्धेन । चतुर्थाष्टमे पादत्रयेण । सप्तमं तु स्थानं चतुर्भिः पादैः सकलदृष्ट्यैवेत्यर्थः । तथा चाह **वराहमिहिरः**[11]—

"दशमतृतीये नवमपञ्चमे चतुर्थाष्टमे कलत्रं [12]च ।
[13]पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति ॥" इति ॥ १९७ ॥

**सुषुम्नायामिडायां वा प्रवृत्ते परमेश्वरे ।**
**[14]निवेश्य सेचयेत्कुम्भैः[15] सद्याद्यैरीशपश्चिमैः ॥ १९८ ॥**
**शिवं समुच्चरन्साङ्गं तन्मन्त्रप्रथमं[16] सुधीः ।**
**वाससी परिधायैनं निविष्टं सकलीकृतम्[17] ॥ १९९ ॥**

[1] B omet फलगर्भ
[2] B : मुख्यान् pour मुखान्
[3] C omet आदि
[4] A : त्वलंकृते
[5] cité par Nirmalamaṇi, p. 375
[6] B : व्याप्तित्वमानं pour व्याप्तिकमासनं ; C : व्याप्तिक्रमासनं
[7] cf. *śloka* 198b.
[8] C : समस्तबन्धिन्यंशके
[9] B : ग्रहस्थाने pour स्थाने ; C omet स्थाने
[10] C : पातेन pour पादेन
[11] cf. *Laghujātaka*, 2, 12
[12] B omet च
[13] B et C : पश्यति pour पश्यन्ति
[14] cité par Nirmalamaṇi, p. 381
[15] B : कुम्भः pour कुम्भैः
[16] A : प्रथमा pour प्रथमं
[17] Dans ms. A le *śloka* 202 se trouve entre 199 et 200.

[1]पाणौ गृहीत्वा देवस्य दक्षिणस्यां तनौ[2] न्यसेत् ।
कृतमन्त्रासने पीठे प्राङ्मुखः [3]स उदङ्मुखम् ॥ २०० ॥

[सुषुम्नायां] मध्यनाड्याम् [इडायां] वामनाड्यां[4] वा प्राणशक्ति[5]स्वरूप[6]यजमानात्मनि **परमेश्वरे प्रवृत्ते** बोद्धुं प्रस्तुते शिष्यं **निवेश्य** [7]**कुम्भैः** [**सद्याद्यैरीशपश्चिमैः**] सद्योजातादीशानान्तं ब्रह्मादिभिरामन्त्रितैः **साङ्गं** [**शिवं**] शिवमन्त्रं [**समुच्चरन्**] [8]उच्चरन्[9] **तन्मन्त्रप्रथमं** [**सेचयेद्**] अभिषेकदानं कुर्यात् । ततश्चान्ये **वाससी** अंशुके [**परिधाय**] प्रावृत्योपविष्टम् **एनं** [**सकलीकृतं**] सकलीकृतदेहं [**पाणौ**] हस्ते **गृहीत्वा स** आचार्यः [10]**प्राङ्मुखः** सन् **देवस्य दक्षिणस्यां** [**तनौ**] मूर्तौ तम् **उदङ्मुखं** [**कृतमन्त्रासने पीठे**] प्रागुक्तविद्यान्तव्याप्तिके [11]मन्त्रपीठे **न्यसेत्** ॥ १९९-२०० ॥

अनन्तरं च—

[12]शिवपीठाभितो[13] याम्ये प्रणवासनसंस्थितम् ।
वारिणा शङ्खमापूर्य लोहधातुरसौषधीः ॥ २०१ ॥
सरत्नानि च बीजानि गन्धांश्चादाय विन्यसेत् ।
[14]कलाः पञ्च निवृत्त्याद्या ब्रह्माद्यैः सह कारणैः ॥ २०२ ॥
[15]मूलविद्यां शिवं साङ्गं पञ्चकृत्यानि यानि च ।
ओं सृष्टये नम इति विमोक्षायेति पश्चिमम् ॥ २०३ ॥
[16]तमादाय महामन्त्रराजराजरुचारुणम् ।
मूर्ध्नि दद्यान्महाकृत्यनियोगप्रतिपादकम् ॥ २०४ ॥

तत्रैव [**याम्ये**] ईशदक्षिणदिग्भागे [**शिवपीठाभितः**] परमेश्वरस्य[17] निकटे **प्रणवासनसंस्थितं**

[1] D omet les *śloka* 200 et 201
[2] A et B : ततो pour तनौ
[3] C : समुदङ्मुखम्
[4] C omet वामनाड्यां
[5] C : स्वरूपे pour स्वरूप
[6] C omet यजमानात्मनि
[7] C : कुम्भे pour कुम्भैः
[8] C : उच्चारयन्
[9] B ajoute यः .
[10] C : प्राङ्मुखस्थं pour प्राङ्मुखः सन्
[11] C : क्षेत्र pour मन्त्र
[12] Les *śloka* 201 et 204 sont cités par Nirmalamaṇi, p. 376-377.
[13] A : अभिधे pour अभितो
[14] A et B : कलापञ्च pour कलाः पञ्च
[15] B : मूलविद्या शिवं
[16] cf. note 12
[17] C omet स्य ; cf. Nirmalamaṇi, p. 377 : शिवपीठाभितः मण्डलेश्वरनिकटे

**शङ्खम्** [**वारिणा**] अम्भसा [**आपूर्य**] संपूर्य कलशवद् [**लोहधातुरसौषधीः बीजानि सरत्नानि गन्धान्**] लोहधातुरसौषधिबीजगन्धरत्नादीनि [**आदाय**] [**विन्यसेद्** ] निक्षिपेत् । [**निवृत्त्याद्याः पञ्च कलाः**] निवृत्त्यादिकलापञ्चकं **साङ्गं शिवं** [**मूलविद्यां**] मूलमन्त्रं [**यानि च पञ्चकृत्यानि**] सृष्ट्यादि-कृत्यपञ्चकं [**ब्रह्माद्यैः सह कारणैः**] तस्मिन्नभिसन्दधीत । कृत्यपञ्चकाभिसंधानं [1]कथं कुर्यादित्याह[2]—'**ओं सृष्टये नम**' **इति** स्थितिसंरक्षणादानानुग्रहेषु कर्मसु प्रत्येकमाद्यन्तयोः प्रणवनमस्कारौ[3] चतुर्थीविभक्ति-योगश्च कार्यः । [**पश्चिमं**] यावदन्ते '**विमोक्षाय** नम' **इति** । [4]किं च [**तं**] शङ्खमेवं [**महामन्त्रराजराज-रुचारुणं**] महामन्त्रेश्वरेश्वरतेजसा समुज्ज्वलं [**महाकृत्य-नियोग-प्रतिपादकं**] महति कृत्ये[5] अनन्त-रोक्ते[6] आचार्यत्वे यो नियोगो नियोजनं तत्प्रतिपादकमस्य **मूर्ध्नि दद्यात्** तेनैवैनम्[7] अभिषिञ्चे-दित्यर्थः ॥ २०१-२०४ ॥

ततो नवे[8] विधायास्मै वाससी सोपवीतके ।
सकलीकृत्य संपूज्य शिवहस्तं विधाय च ॥ २०५ ॥
पुस्तकं घटिकासूत्रे कर्तरी योगपट्टकम् ।
स्रुक्स्रुवावक्षसूत्रं च सोष्णीषं छत्रपादुके ॥ २०६ ॥
राजोपकरणं यच्च चामराद्युपपद्यते[9] ।
मनसा यदसंपन्नं प्रतिपाद्याभिवादयेत् ॥ २०७ ॥

[10]**ततो**ऽनन्तरम् **अस्मै** एतदर्थं **नवे वाससी** अंशुके [**सोपवीतके**] उपवीतसहिते **विधाय** निष्पाद्य [11]प्रावृतनवांशुकयुगं कृतोपवीतं [12]च तं **सकलीकृत्य शिवहस्तं च** अस्य [**विधाय**] दत्त्वा **पुस्तकादिकं यच्च** [**राजोपकरणं**] राज्ञामुपयोगि [**चामरादि**] [13]चामर[14]ध्वजछत्रादिकम् । **उपपद्यत** इति, तदानीं [15]संपाद्यमेवेति । ततो **यद्** [**असंपन्नम्** ] असंनिहितं **तद् मनसा** [**प्रतिपाद्य**] संकल्प्य अथैनमाचार्यः प्रथमम् **अभिवादयेत्** ॥ २०५-२०७ ॥

[1] C omet कथं
[2] C : कुर्यादिति निवेशयेदिति pour कुर्यादित्याह
[3] C : नमस्कारेण pour नमस्कारौ
[4] B : तच्च pour किंच
[5] C ajoute यावदन्ते हि
[6] C : अन्तेनोक्त pour अनन्तरोक्ते
[7] B omet एनम्
[8] A : अनले pour नवे
[9] B : उपपाद्यते pour उपपद्यते
[10] C omet ततः
[11] C : प्रावृतनवांशुकयुगलकृतोपवीतं
[12] C : सन्तं pour च तं
[13] B ajoute भेरी
[14] B omet ध्वज
[15] C : संपत्तिमेति pour संपाद्यमेवेति

[1]कृताभिवादनं चैनम्—

ब्रूयात्समर्पितो योऽयमधिकारो [2]मयाधुना ।
स कर्तव्यस्त्वया तावद्यावत्संक्रामितो[3]ऽन्यतः ॥ २०८ ॥
कृतप्रतिज्ञमुत्थाप्य शंभवे तं निवेदयेत् ।
[4]असौ[5] नाथ त्वयाज्ञप्तोऽप्यधिकारे[6] त्वदिच्छया ॥ २०९ ॥
नियोजितोऽयमस्माभिस्तदनुग्राह्यतामिति ।

इदं चैनं[7] **ब्रूयात्** । [8]**योऽयं मया अधिकारः समर्पितः सः** [**अधुना**] इदानीं [**त्वया**] भवता **तावत्** [**कर्तव्यः**] पाल्यः । [**यावत्**] [9]यावत्पर्यन्तम् [**अन्यतः**] अन्यस्मै **संक्रामितः** समर्पितः । एवमुक्ते सति [10]यद्गुरुपादैरादिष्टं तत्तथेति **कृतप्रतिज्ञं** [11]कृता प्रतिज्ञाङ्गीकारो येन **तं** तथाविधं सन्तं तस्मादासनाद् **उत्थाप्य शम्भवे** [12]**निवेदयेत्**[13]—

"असौ नाथ त्वयाज्ञप्तोऽप्यधिकारे त्वदिच्छया ।
नियोजितोऽयमस्माभिस्तदनुग्राह्यतामिति" ॥ २०८-२०९ ॥

स [14]कृतेष्टिर्नतो ब्रूयादविघ्नमिदमस्तु मे ॥ २१० ॥
ततोऽग्नितर्पणं कृत्वा प्राग्वदादाय तं गुरुः ।
विलोक्य [15]सेश्वरं [16]वर्त्म दद्याद्दशदशाहुतीः ॥ २११ ॥
ब्रूयाच्च भूमयः सर्वा [17]भवत्योऽस्याधिकारिणः ।
[18]विषयत्वं प्रपद्यध्वमनुजानीत नायकाः ॥ २१२ ॥

[1] C : कृत्वा pour कृत
[2] A : अधुना मया pour मयाधुना
[3] B : संक्रमितो pour संक्रामितो
[4] En ms. C les demi-*śloka* 209b et 210a se trouvent après तस्मादासनादुत्थ शम्भवे तं निवेदयेत् ; cf. note 13.
[5] A et C : हंसो pour असौ
[6] A et B : अधिकार pour अधिकारे ; C : अधिक
[7] C : एवं pour एनं
[8] C : तव यो pour योऽयं
[9] C : यावत्पर्यन्ते न्यसेत्तमस्मै
[10] B : यावद् pour यद्
[11] C : कृत्वा pour कृता
[12] C : संनिवेदयेत्
[13] cf. plus haut note 4
[14] A : कृतेष्टिं नतो
[15] B : चेश्वरं
[16] A : पद्मं
[17] A : भवन्त्वस्याधिकारिणे ; C : भवन्त्यस्याधिकारिणः
[18] A : विषयं प्रतिपद्यध्वम्

**स** लब्धाचार्याभिषेकः **कृतेष्टिः** कृतशिवपूजः [**नतः**] प्रणतः सन् [**मे**] मम **इदमविघ्नमस्तु** [1]इत्याचार्यमीशं च [**ब्रूयाद्**] अभ्यर्थयेत्। **ततः** पश्चाद् **अग्नितर्पणं कृत्वा गुरुः** [**तं प्राग्वदादाय**] स्वहस्तेन तं गृहीत्वा [2]अग्निसमीपेऽर्धासने निवेश्य आचार्यः **सेश्वरं** [**वर्त्म**] षड्विधमध्वानं [**विलोक्य**] प्राग्वदभिसंधाय एकस्मिन्नध्वनि प्रत्यंशं [3]**दशदशाहुतीर्दद्यात्**। दत्वा चैवं **ब्रूयात्**। यथा—हे [**सर्वा भूमयः**] अध्वभूमयः तत्त्वभुवनकलादिरूपाः! **अस्याधिकारिण** आचार्यस्येश्वरानुज्ञया [**भवत्यः**] यूयं **विषयत्वम्** एवं यथादिष्टदीक्षादिव्यापारचिकीर्षोरस्य गोचरत्वं [**प्रपद्यध्वं**] भजध्वम्। तथा हे [**नायकाः**] कलाध्वभुवनाध्वाद्यधिपतयः! [4]एवं स्वस्मिन्कर्मण्युद्यतं सन्तम् **अनुजानीत** ॥ २१०-२१२ ॥

दत्ताज्ञो गुरुः—

ततः पूर्णाहुतिं दद्यात्कृतहोमस्य देशिकः।
[5]शिवादिभिः करस्याग्रमुल्मुकाग्रेण[6] संस्पृशेत् ॥ २१३ ॥
[7]खड्गवन्मन्त्रसंदीप्त्यै पाशच्छेदादिहेतुतः।

**ततः** तस्याभिषिक्तस्य [**कृतहोमस्य**] स्वयंकृतपूर्णाहुत्यन्त[8]होमस्य सतः [**देशिकः**] आचार्यः समयहोमकर्म[9]पूर्णतायै **पूर्णाहुतिं दद्यात्**। ततश्च [**शिवादिभिः**] संहितामन्त्रैः [**करस्याग्रम्**] अस्याङ्गुल्यग्रं[10] [**उल्मुकाग्रेण**] [11]दर्भाद्युल्मुकप्रान्तेन [**मन्त्रसंदीप्त्यै**] मन्त्रसंदीपनाय[12] [**पाशच्छेदादिहेतुतः**] पाश[13]च्छेदनादिनिमित्तं खड्गवत् [**संस्पृशेत्**] [14]संदीपयेद् उत्तेजितं कुर्यात्। शाणादिघर्षणेन[15] यथा निस्त्रिंशस्य[16] निशितत्वमुत्पाद्यते[17] तथास्य[18] दग्धहस्तत्वेन मन्त्रोद्दीपनं [19]कुर्यादित्यभिप्रायः ॥

[1] B : इत्यभ्यर्च्येशं pour इत्याचार्यमीशं
[2] B : अग्निसमीपे आसने
[3] B : दशाहुतीः pour दशदशाहुतीः
[4] B omet एवं
[5] Les demi-*śloka* 213b et 214a sont cités par Nirmalamaṇi, pp. 379-380.
[6] A : उल्काग्रेणैव pour उल्मुकाग्रेण ; B : उन्मुखाग्रेण ; C : उल्ककाग्रेण
[7] B : खंग pour खड्ग
[8] C : होमभ्यस्तः pour होमस्य सतः
[9] C omet पूर्ण
[10] C : अग्रे pour अग्रं
[11] B : दर्भाद्युल्मुखप्रान्तेन ; C : शस्त्राद्यात्मकव्रातेन
[12] C : संदीपाय pour संदीपनाय
[13] C : च्छेदादि pour च्छेदनादि
[14] C : न दीपयेत् pour संदीपयेत्
[15] B : कर्षणेन pour घर्षणेन
[16] B : अस्त्रस्य pour निस्त्रिंशस्य
[17] B : उपास्यते pour उत्पाद्यते
[18] C : यथास्य
[19] C : कार्यम् pour कुर्याद्

कर्मणोऽन्ते बलिं दत्त्वा ब्रूयान्नीत्वा पुरः प्रभोः ॥ २१४ ॥
व्याख्येयं श्रुतमर्थिभ्यः श्रोतव्यं च त्वयान्यतः ।
बहुधा बहु च ज्ञानं कृत्यं कार्यं सुचर्चितम् ॥ २१५ ॥
त्यक्त्वालस्यं त्वयाचार्य कार्यो भक्तेष्वनुग्रहः ।
प्रतिष्ठा च शिवादीनां तेषां प्रार्थयतां भृशम् ॥ २१६ ॥

उक्तस्य **कर्मणः** [**अन्ते**] समाप्तौ [**बलिं दत्त्वा**] बलिदानं कृत्वा [**प्रभोः पुरः**] देवस्याग्रं **नीत्वा** तमभिषिक्तमित्थं **ब्रूयात्** । यदुत **त्वया** आचार्यभावं प्राप्तेन **अर्थिभ्यः** [**श्रुतं**] [1]स्वश्रुतं **व्याख्येयम्** [**अन्यतः**] अन्येषां च सकाशात् [**श्रोतव्यं**] श्रुतं कर्तव्यम् । [**बहुधा**] बहुप्रकारं [**बहु**] भूयिष्ठं च **ज्ञानम्** आगमरूपं **कृत्यं** च करणीयं तत्तद्विधानं [**सुचर्चितं**] सुचिरेण चर्चितं **कार्यम्** । लक्षणभूते शास्त्रे लक्ष्यभूते [2]चानुष्ठानक्रमे साभ्यासेन भवितव्यमिति भावः । **आलस्यं** [**त्यक्त्वा**] संत्यज्य **भक्तेष्वनुग्रहः कार्यः** । **तेषां** च [3]भक्तानां [**प्रार्थयताम्**] [4]अभ्यर्थयमानानां [**शिवादीनां प्रतिष्ठा**] शिवभट्टारकादिप्रतिष्ठा कार्या[5] ॥ २१४-२१६ ॥

तथा—

[6]स्वल्पहोमजपेज्याभिरलुप्तनियमोऽन्वहम् ।
वर्तेथा लौकिकेनापि स्वागमादविरोधिना ॥ २१७ ॥
[7]यदन्यद्विहितं किंचिन्निषिद्धं[8] चोपदेक्ष्यते ।
तत्सर्वमनुसर्तव्यं [9]वक्तव्यं चानुवर्तिषु ॥ २१८ ॥

[**स्वल्पहोमजपेज्याभिः**] स्तोकेनापि जपहोमपूजादिना[10] [**अन्वहं**] प्रत्यहम् **अलुप्तनियमः** सन् **वर्तेथाः** तिष्ठेथाः । **लौकिकेनापि** इति शिष्टाचरितेनापि [**स्वागमात्**] स्वस्मादागमाद् [**अविरोधिना**] अविरुद्धेन **वर्तेथाः** । स्वशास्त्राविरुद्धशिष्टाचारविमुखो [11]मा भूरित्यर्थः । आचार्यस्य **यदन्यत्**

[1] C omet स्व.
[2] C : वा pour च
[3] B : भुक्तानां pour भक्तानां
[4] B : अभ्यर्थ्यमानानां
[5] C ajoute इति
[6] cité par Nirmalamaṇi, p. 380
[7] A : यदन्यं विहितं
[8] A : निषिद्धप pour निषिद्धं
[9] A : वर्तव्यं pour वक्तव्यं
[10] C : इज्यादिना pour पूजादिना
[11] B : मा भूदित्यर्थः

**किंचिद्** [**विहितं निषिद्धं च**] विधेयतया निषिद्धत्वेन च चर्यापादे **उपदेक्ष्यते** अभिधास्यते **तत्सर्वं** [1]च [2]तथा [**अनुसर्तव्यम्**] अनुसरणीयम्। [**अनुवर्तिषु च**] अनुशास्येषु च [**वक्तव्यम्**] अभिधेयम्॥ २१७-२१८॥

**स तथेति प्रतिज्ञाय देशिकानुमतः सुधीः।**
**[3]सर्वभूतगणाभीष्टं साधकत्वं प्रपद्यते॥ २१९॥**

[**तथेति**] [4]यद्गुरुपादैराज्ञप्तं [5]तत्तथैवेति गुरोरग्रे **प्रतिज्ञाय देशिकानुमतः सुधीः सः** अभिषिक्त आचार्येणानुमतोऽङ्गीकृतेच्छः प्रायशः सर्वस्य भोगाभिलाषित्वेन सिद्ध्यर्थत्वात् [**सर्वभूतगणाभीष्टं**] सकलभूतसंघाभिमतं [**साधकत्वं**] [6]साधकभावं [**प्रपद्यते**] इच्छयाश्रयेत्। न [7]त्ववश्यकर्तव्यत्वेन॥ २१९॥

साधकाभिषेकार्थमाह—

**[8]मन्त्रिणोऽपि गुरुप्रोक्तं लक्षणं किं तु यत्परम्।**
**तदुच्यमानं संक्षेपान्निबोध द्विजसत्तम॥ २२०॥**

[**मन्त्रिणोऽपि**] साधकस्य [**गुरुप्रोक्तं लक्षणम्**] आचार्यवल्लक्षणं ज्ञेयम्। **किं तु यत्परम्** इति [9]व्यतिरिक्तम् [**तदुच्यमानं**] तत्कथ्यमानं [**द्विजसत्तम**] [10]मुनिप्रख्य [**निबोध**] आकर्णयेति भरद्वाजमुनिमेकाग्रीकर्तुमिन्द्रेण संबोधनम्॥ २२०॥

**पञ्चस्कन्धात्मको मार्गः पञ्चमन्त्रपरिग्रहः[11]।**
**तत्साधनप्रवृत्तानां सिद्धिहेतुस्तदन्वयः॥ २२१॥**

लोकवेदा[12]ध्यात्मिकातिमार्ग[13]शैवाख्यभेदेन निवृत्त्यादिकलापञ्चकव्याप्त्या[14] प्रागुक्तवत्पञ्चात्मको **मार्गो**ऽध्वा। स त्वस्मात् [**पञ्चमन्त्रपरिग्रहः**] सद्योजातादिपञ्चमन्त्राधिष्ठ्यः। [**तत्साधनप्रवृत्तानां**] [15]तत्तदध्वांशवर्तियक्षगन्धर्वादिमन्त्राराधनेच्छोः साञ्जननिरञ्जनमन्त्रान्तरारिराधयिषोर्वा साध-

[1] C : तु pour च
[2] C omet तथा
[3] A : सर्वसूतगणाभीष्टसाधकत्वं
[4] C : यत्याद्यैराज्ञप्तं
[5] C : तत्तदेवमिति
[6] C : साधकं भावं
[7] C omet तु
[8] cité par Nirmalamaṇi, p. 381
[9] C : अतिरिक्तं
[10] C : मुनिमुख्य
[11] A : पञ्च मन्त्रपरिग्रहाः
[12] C : अध्यात्म pour आध्यात्मिक
[13] C : मन्त्राख्य pour शैवाख्य
[14] B : प्राप्त्या pour व्याप्त्या
[15] B : तत्तदध्वांशवर्तियक्षगन्धर्वादिमन्त्रानारिराधयिषोर्वा साधकस्य

कस्य [**तदन्वयः**] तत्तन्मन्त्रान्वयस्तैर्मन्त्रै[1]रानुगुण्यं **सिद्धिहेतुर्भ**वतीति शेषः । तदेतदेव स्पष्टयिष्यति ॥ २२१ ॥

**[2]निस्पृहा गगनच्छायाः [3]सूक्ष्मकायाः सुबुद्धयः ।**
**साधयन्त्यभियोगेन लघुनैवेशदैवतम् ॥ २२२ ॥**

ये [**निस्पृहाः**] स्पृहारहिताः [**गगनच्छायाः**] नैर्मल्येनाकाशकान्तयः [**सूक्ष्मकायाः**] तन्वङ्गाः [**सुबुद्धयः**] सुधियश्च [4]ते [**लघुनैव**] स्वल्पेनैव [**अभियोगेन**] उद्यमेन [**ईशदैवतम्**] ईशानभट्टारकं तदधिष्ठेयाध्वभागवर्तिनं [5]मन्त्रमचिरात्[6] **साधयन्ति** ॥ २२२ ॥

**[7]गौरास्तत्पुरुषस्कन्धमिष्टच्छायासमाश्रयाः ।**
**[8]तृतीयं [9]तैजसच्छायाः कृष्णपिङ्गदृशः[10] खराः[11] ॥ २२३ ॥**
**[12]क्षीबाक्षा [13]रक्तगौराभा वामदेवपरिग्रहम्[14] ।**
**वारिच्छाया दृढस्निग्धदेहाः [15]सद्यपरिग्रहम् ॥ २२४ ॥**

[**इष्टच्छायासमाश्रयाः**] इष्टः सर्वजनमनोहरः छायासमाश्रयः कान्तिपरिग्रहो येषां ते, [**गौराः**] गौरवर्णाः [**तत्पुरुषस्कन्धं**] तत्पुरुषस्कन्धवर्तिनं मन्त्रं लघुनोद्यमेन साधयन्तीति [16]प्रागुक्तेनाभिसंबन्धः । [17]**तृतीयम्** अघोरनाथपरिग्रहं शीघ्रमेव साधयन्ति ते ये [**तैजसच्छायाः**] [18]तेजश्छायायोगिनः [**कृष्णपिङ्गदृशः**] कृष्णपिङ्गाक्षाः [**खराः**] क्रूराकृतयश्च । ये तु [**क्षीबाक्षाः**] मदमन्थराः पाटलदृशः [**रक्तगौराभाः**] उज्ज्वलगौरकान्तयश्च ते [**वामदेवपरिग्रहं**] वामदेवस्कन्धमन्त्रम् अचिरात् साधयन्ति । [**वारिच्छायाः**] सलिलनिभकान्तयस्तु [**दृढस्निग्धदेहाः**] दृढस्निग्धवपुषः [**सद्यपरिग्रहं**] सद्योजाताध्वपरिग्रहं [19]लघुनैवोद्यमेन साधयन्तीति प्राग्वद्योज्यम् ॥ २२३-२२४ ॥

[1] C omet मन्त्रैः
[2] A : निष्पभा
[3] A : सूक्ष्मकार्याः सुबोधतः
[4] B omet ते
[5] B omet मन्त्रम्
[6] C : अचिरकात् pour अचिरात्
[7] B : गौरात् pour गौराः
[8] A : तृतीये
[9] A : तेजसच्छाया ; B : तैजसश्छायाः
[10] A : दशाः pour दृशः
[11] A : कराः pour खराः ; B : स्वराः
[12] A : क्लीबाक्षाः
[13] A : रक्तगौरांगो ; C : रक्तगौराङ्गा
[14] A : परिग्रहः pour परिग्रहम् ; B : परिग्रहाः
[15] D omet le mot सद्यपरिग्रहम्
[16] C : प्रागुक्तेन सर्वत्राभिसंबन्धः
[17] C : तृतीयघोरनाथपरिग्रहं
[18] C : तेजसमच्छायायोगिनः
[19] C : लघुना pour लघुनैव

किं च—

[1]ब्रह्मविष्ण्विन्द्रसोमार्कस्मरदेव्यनुवर्तिनाम्[2] ।
तदाकारं वपुः सिद्ध्यै भावश्चेष्टा च देहिनाम् ॥ २२५ ॥

[ब्रह्मविष्ण्विन्द्रसोमार्कस्मरदेव्यनुवर्तिनां] ब्रह्मादिदेवताराधनेच्छूनां [देहिनां] साधकानां [तदाकारं वपुः भावः चेष्टा च] तत्तदाकारशरीराभिप्रायचेष्टाः सिद्ध्यै [3]भवन्ति । यस्याकारस्य यस्य वाभिप्रायस्य यस्याश्चेष्टाया दैवतं यदनुरूपं तन्मन्त्रास्तदानुगुण्येनोक्ताः सिद्ध्यै भवन्तीत्याशयः ॥ २२५ ॥

[4]तस्य [5]गुर्वभिषेकोक्तं विधानं गुरुराचरेत् ।
किं तु साध्यासनस्थस्य साध्यैकगतचेतसः ॥ २२६ ॥
क्रमशः प्रथमस्कन्धे व्युत्क्रमेण तु [6]पश्चिमे ।
क्रमव्युत्क्रमशो मध्ये [7]साध्यालब्धतनोस्ततः ॥ २२७ ॥
पीठान्तरनिविष्टस्य शङ्खाम्बु[8]व्यक्ततेजसा ।
[9]सेचनं तस्य मन्त्रेण तदुच्चारसमन्वितम् ॥ २२८ ॥

[तस्य गुर्वभिषेकोक्तं विधानम् आचरेत्] गुरुवत् साधकस्य सर्वोऽभिषेकविधिः कार्यः । [किं तु] इयांस्तु विशेषः । [साध्यासनस्थस्य] [10]यत्साध्यसंबन्धिन्यासने स्थितस्य [साध्यैकगतचेतसः] साध्यैकाग्रचेतसः [प्रथमस्कन्धे] [11]प्रथमे ईशानस्कन्धे स्थितं मन्त्रमाराधयितुमिच्छोः [क्रमशः] सद्योजातादिक्रमेणाभिषेचनमाम्नातम् । [12]तदुक्तम्—

“ [13]निवेश्य सेचयेत्कुम्भौ सद्याद्यैरीशपश्चिमैः ।” इति ।

यस्य पश्चिमे स्कन्धे सद्योजाताध्वनि स्थितः साध्यमन्त्रस्तस्य व्युत्क्रमेण ईशानादिभिरभिषेकः कार्यः । यस्य तु साधकस्य मध्य इत्यघोरनाथाध्वनि विद्याख्यकलाश्रय[14]स्थः साध्यमन्त्रस्तस्य [क्रमव्युत्क्रमशः]

[1] D omet le demi-*śloka* 225a
[2] A : अनुवर्तिनः pour अनुवर्तिनाम्
[3] C : भवति
[4] Les *śloka* 226-228 sont cités par Nirmalamaṇi, pp. 381-382.
[5] A : गुर्वभिषेकोक्तविधानं
[6] A et C : पश्चमे pour पश्चिमे
[7] A : सार्चालब्ध pour साध्यालब्ध
[8] A : व्रत pour व्यक्त
[9] C : चेतनं
[10] C : सत् pour यत्
[11] B : प्रथममीशानस्कन्धास्थितमन्त्रम्
[12] C : उक्तम् pour तदुक्तम्
[13] cf. plus haut, *śloka* 198b
[14] C omet स्थ

क्रमेण [1]व्युत्क्रमेणाप्यभिषेको देयः । **ततो**ऽनन्तरं [**साध्यालब्धतनोः**] साध्यमन्त्रालब्धमूर्तेः [**पीठान्तरनिविष्टस्य**] अन्यस्मिन् पीठे निविष्टस्य [**शङ्खाम्बुव्यक्ततेजसा**] पूर्वपश्चिमदक्षिणदिग्भागे प्रणवासननिविष्टशङ्खोदरगतरसधातुरत्नौषधीलोहगन्धसंमिश्रसलिलाभिव्यक्तमहिम्ना [**मन्त्रेण**] साध्यमन्त्रेण [**तदुच्चारसमन्वितं**] तदुच्चारणपूर्वकं [**तस्य**] साधकस्य [**सेचनम्**] अभिषेकः कार्यः ॥ २२८ ॥

ततश्चास्य—

**मन्त्रमापादयेत्पाणौ स्रग्गन्धसलिलाक्षतैः ।**

[**स्रग्गन्धसलिलाक्षतैः**] [2]कुशकुसुमाद्यम्बुभिः सह [**पाणौ**] अञ्जलौ [**मन्त्रं**] साध्यमन्त्रम् [**आपादयेत्**] समर्पयेत् ॥

ततश्चासौ—

**लब्धमित्यभिसंधाय साधको मूर्ध्नि विन्यसेत् ॥ २२९ ॥**
**मरीचिमण्डलापास्ततमस्कं मन्त्रमात्मनः ।**

**साधकः** तदा [**लब्धं**] प्राप्तं **मन्त्रं** [**मरीचिमण्डलापास्ततमस्कं**] मरीचिमण्डलेन स्वशक्तिप्रसरेण अपास्ततमस्कं निरस्ताञ्जनतिमिरपटलम् **अभिसंधाय आत्मनः** [**मूर्ध्नि**] शिरसि **विन्यसेत्** ॥

**ततः सर्वमनुष्णीषं प्रागुक्तं प्रतिपादयेत् ॥ २३० ॥**
**न चाभिवादयेदेनं [3]गुरुरज्यायसि स्थितम् ।**

[**ततः**] एवं कृते सति **सर्वं** [**प्रागुक्तं**] पूर्वोक्तं छत्रचामरादिराजोपकरणम् [**अनुष्णीषम्**] उष्णीषवर्जितं गुरुरस्मै [**प्रतिपादयेत्**] दद्यात् । **न चैनं** साधकमाचार्यस्यैव सर्वानुग्रहकर्तृत्वेन सर्वोत्कृष्टत्वात्साधकस्य तन्न्यूनत्वाद् [**अज्यायसि स्थितम्**] अज्यायः[4]पदवर्तिनं सन्तं **गुरुः** प्रागुक्ताभिषेकाचार्यवद् **अभिवादयेत्** ॥

**ततश्चैनं समुत्थाप्य शिवायावेद्य देशिकः[5] ॥ २३१ ॥**
**[6]ब्रूयादस्त्वयमिष्टार्थसिद्धिभाक् [7]साधकः प्रभो[8] ।**

[1] C : व्युत्क्रमेणाभिषेको
[2] C omet कुश
[3] A : गुरुरज्यायसं स्थितम् ; C : गुरुराज्यायमुस्थितम्
[4] C : तदवस्थितं po
[5] C : देशिकम्
[6] A : ब्रूयात् स त्वय
[7] C : [illegible]
[8] A et B : प्रभोः

सोऽपि प्रणम्य देवेशं भूमिविन्यस्तमस्तकः[1] ॥ २३२ ॥
[2]ब्रूयात्सिद्धिर्ममाविघ्ना प्रसादादस्तु ते हर ! ।

[ततश्चैनं समुत्थाप्य] तस्माच्चैनमासनादुत्थाप्य [शिवाय] परमेश्वराय प्राग्वद् आवेद्य [प्रभो] हे नाथ त्वत्प्रसादाद् अयम् [इष्टार्थसिद्धिभाग् अस्तु] अभिप्रेतार्थसिद्धिभाग् भवत्विति [देशिकः] गुरुः ब्रूयात् । सोऽपि [भूमिविन्यस्तमस्तकः] क्ष्मागतोत्तमाङ्गः [देवेशं] परमेश्वरं प्रणम्य [हर] हे भगवन् [ते प्रसादाद्] [3]तवानुग्रहात् सिद्धिः [अविघ्ना] निर्विघ्ना ममास्तु इति [ब्रूयात्] प्रार्थयेत् ॥

लब्धानुज्ञं समुत्थाप्य ब्रूयाद्दक्षिणतः स्थितम् ॥ २३३ ॥
स्वतन्त्राचारनिष्ठेन भवितव्यं [4]यथा तदा ।
वने गुहायां क्षेत्रे वा कृतलिङ्गपरिग्रहः[5] ॥ २३४ ॥
साधने सुमनोरम्ये यतेथाः सत्सहायवान् ।
हिंसानुग्रहशास्त्रोक्तिप्रतिग्रहपराङ्मुखः ॥ २३५ ॥
गुरोष्टिकारको मायामात्सर्यमदवर्जितः ।

[लब्धानुज्ञम्] एवं निर्विघ्नसिद्धिभाग्भवत्विति[6] शिवाल्लब्धानुज्ञा येन तं तादृग्विधभावनावन्तं समुत्थाप्य [दक्षिणतः] स्वदक्षिणतः स्थितम् इत्थं ब्रूयात् । यथा [स्वतन्त्राचारनिष्ठेन] स्वस्मिंस्तन्त्रे [7]य आचारस्तत्परेण [8]भवितव्यम् । [वने गुहायां क्षेत्रे वा] काननाद्रि[9]दरीक्षेत्रेभ्योऽन्यतमे स्थाने वक्ष्यमाणवत्कृत्वा [10]कृतलिङ्गपरिग्रहः [सुमनोरम्ये] सुष्ठु मनोऽभिलषणीयायां[11] [साधने] [12]सिद्धौ [सत्सहायवान्] शोभनसहायः सन्, यतेथाः प्रयत्नवान् स्याः । कीदृश इत्याह— हिंसेत्यादि । परस्य[13] हिंसायाम् उपघाते[14] अनुग्रहे च प्रियाचरणे पराङ्मुखः, तथा शास्त्रोक्तौ शास्त्र[15]प्रवचने

[1] C : मस्तके pour मस्तकः
[2] C : ब्रूयात्सिद्धं ममाविघ्नाः
[3] C : त्वदनुग्रहात्
[4] A : यदा pour यथा
[5] C : परिग्रहम् pour परिग्रहः
[6] C : भवेति pour भवत्विति
[7] C omet यः
[8] C : भवता भाव्यम् pour भवितव्यम्
[9] C : आदि pour अद्रि
[10] C omet कृत
[11] B : अभिलाषिण्यां pour अभिलषणीयायां
[12] C : विधौ pour सिद्धौ
[13] B omet स्य
[14] C : उपपाते pour उपघाते
[15] C omet प्र

**प्रतिग्रहे** च [1]विमुखः अतत्कारीत्यर्थः । [**गुप्तेष्टिकारकः**] गुप्ता चेष्टिः पूजनं तत्कारकाणि च पूजाङ्गानि यस्य । [**माया-मात्सर्य-मद-वर्जितः**] मायामात्सर्यमदैः [2]कुस्मृतिद्वेषगर्वै रहितः ॥

ततोऽग्नौ मन्त्रमुख्येषु तर्पितेषु विशेषतः ॥ २३६ ॥
[3]साध्याणुतर्पणं कुर्याद्गुरुः संधाय साधकम् ।
[4]कृताणुतर्पणे[5] तस्मिन्साध्यमुत्क्षिप्य देशिकः ॥ २३७ ॥
विन्यस्य तत्तनौ मन्त्रान्शिवादीनुपसंहरेत् ।

[**ततः**] तदनन्तरं [**अग्नौ मन्त्रमुख्येषु तर्पितेषु**] शिवादिमन्त्रतर्पणम् वह्नौ कृत्वा [**साधकं संधाय**] [6]साधकानां संधानेन [**विशेषतः साध्याणुतर्पणं कुर्यात्**] साध्याणुं विशेषेण [7]संभृतसामग्र्या तर्पयेत्[8] । [9]**कृतेति—तस्मिन्** साधके **कृताणुतर्पणे** दत्तपूर्णाहुतौ च [**देशिकः**] गुरुः [**साध्यम् उत्क्षिप्य**] अग्नितः साध्यमन्त्रमुपसंहृत्य [**तत्तनौ**] तन्मूर्तौ [**विन्यस्य**] निधाय [**शिवादीन् मन्त्रान्**] शिवादिमन्त्रान् [**उपसंहरेद्**] विसर्जयेत् ॥ इति **साधकाभिषेकविधिः** ॥

इदानीं "[10]कुर्यादेवं देशिकोऽप्यल्पकालम्" इत्यनेनानुप्रकरणे यदुपक्रान्तं तद्विशेषयितुमाह—

देशिकोऽपीदमातिष्ठेद्विधानं शान्तिकादिषु ॥ २३८ ॥
विधेयेषूपसर्गादौ परेषामात्मनोऽपि वा ।
किं तु त्रिपञ्चसप्ताहदशरात्रद्विसप्तकम् ॥ २३९ ॥
मासार्धमेकविंशाहं मासि वा न परं ततः ।

**उपसर्गः** शत्रुराजादिकृतो [11]मारकादिर्वा । **आदि**ग्रहणाद्विघ्नपीडाद्युद्भावने[12] । [**शान्तिकादिषु**] [13]शान्तिकपौष्टिकादिषु कर्तव्येषु [**इदम्**] इदमेव **विधानं** मुख्यमन्त्रे दक्षिणदिग्भागस्थिताभीष्टमन्त्रार्चना-

[1] C : विधिमुखतत्कारीत्यर्थः
[2] B : उत्स्मृति pour कुस्मृति
[3] B : साध्यानुतर्पणं
[4] En ms. C les demi-*śloka* 237b et 238a se trouvent après संभृतसामग्र्या तर्पयेत् ; cf. note 8.
[5] C : कृतानुतर्पणे
[6] C : साधकानुबन्धनेन
[7] C : संभार pour संभृत
[8] En ms. C les demi-*śloka* 237b et 238a se trouvent ici ; cf. note 4.
[9] C omet कृतेति
[10] cf. *Kriyāpāda*, *paṭala* 4, *śloka* 7
[11] C : मारकादिपूर्वा
[12] C : उद्भावनैः pour उद्भावने
[13] C : विघ्नशान्तिक pour शान्तिक

म्नितर्पणादिकम् **आत्मनः परेषां वा** [**आतिष्ठेत्**] कुर्यात् । **किं त्विति** पूर्वं सामान्येनाल्पकालं कुर्यादित्युक्तम् । संप्रति तु तद्विभज्याह—**त्रिपञ्चसप्ताह**मित्यादिना । मासात्परं नैव कुर्यादिति यावत् । अत एवास्य [1]न पूर्वोक्तेन [2]पौनरुक्त्यम् । [3]कालस्य पूर्वं विभज्यानुक्तत्वात् ॥

**पुत्रको गौरवं धाम भजेत्तिष्ठेत्स्वधाम्नि वा ॥ २४० ॥**
**देहपातव्यवहितं [4]प्रतीच्छन्पदमद्भुतम् ।**
**स चेदभ्यर्थयेद्भोक्तुं मार्गांशे निर्वृतोऽपि सन् ॥ २४१ ॥**
**[5]तावत्यंशे भगवता न शुद्धिरभिसन्धिता ।**

**पुत्रको** [**गौरवं धाम**] गुरुगृहं [**भजेत्**] सेवेत । [**स्वधाम्नि वा**] स्वगृहे वा आसीत । कीदृशः सन्नित्याह—[**देहपातव्यवहितं**] शरीरपातान्तरितं **पदमद्भुतं** मोक्षाख्यं **प्रतीच्छन्** प्रतिपालयन् । देहपातव्यवधानेनास्य [6]यत्कैवल्यं तत्प्रतीक्षमाण इत्यर्थः । [**स चेद्**] यदि त्वसौ **मार्गांशे** [7]अध्वभागे क्वाप्यभिमते **भोक्तुम्** इच्छुः स्यात्तदर्थं च [**निर्वृतोपि सन्**] लब्धनिर्वृतिरपि सन्नाचार्यम् **अभ्यर्थयेत्** तदैवं विज्ञेयम् । यदुत **तावत्यंशे भगवता शुद्धिः न अभिसन्धिता** शिवेच्छावशात्तस्य यत्रैव किल भोगेच्छा तदूर्ध्वं शुद्धिर्न संजाता ॥

**तत्र मिथ्याप्रयुक्ताणुः प्रायश्चित्तं [8]भजेद्गुरुः ॥ २४२ ॥**
**योग्यभाजं महेशेष्टं [9]तं चाभिलषिते न्यसेत् ।**
**[10]योजयेत्पुत्रकत्वे तं समयस्थमपस्पृहम्[11] ॥**
**सस्पृहं साधकं चैनं [12]विधिनोक्तेन देशिकः ॥ २४३ ॥**

**तत्र** [13]तस्मिन्ननिवृत्तभोगोत्कण्ठे पुत्रके [14]**मिथ्याप्रयुक्ताणुः** पुत्रकदीक्षानर्हत्वाद् वृथा [15]खेदितमन्त्रो **गुरुः प्रायश्चित्तं** चर्यापादवक्ष्यमाणवद् [**भजेत्**] कुर्यात् । यस्य तदुपक्रमादेव भोगेच्छा **तं**

[1] C : पूर्वोक्तेन न pour न पूर्वोक्तेन
[2] B : पौनरुक्तिः
[3] B : कालपूर्वं pour कालस्य पूर्वं
[4] A : प्रच्छन्न pour प्रतीच्छन्
[5] A : तावत्यंशे न भवता शुचिरप्यभिसंधिता
[6] C omet यत्
[7] B omet अध्व
[8] C : भवेद् pour भजेद्
[9] A et C : तच्च pour तं च
[10] A et C : योजयेत्पुत्रकं चैनं ; B : योजयेत्पुत्रकत्वेदं
[11] A : अपिस्पृहम् pour अपस्पृहम् ; B : अविस्पृहम्
[12] C : विधानोक्तेन
[13] B : तस्मिन्निवृत्त pour तस्मिन्ननिवृत्त
[14] C : मिथ्याप्रयुक्तोऽणुः
[15] C : खेद pour खेदित

**[योग्यभाजं]** योग्यमनुगुणं स्थानं भजन्तम् अनिष्पादितसर्वाध्वशुद्धिं, **महेशेष्टम्** इति पूजितमहेश्वरं, यद्वा तथाविधविधिभाक्त्वेन परमेश्वराभिमतं सन्तम् [1]**अभिलषिते**ऽभिप्रेते [2]भोग्यभाक्त्वेऽपि[3] **न्यसेत्** । किं च[4] यः समयित्वे स्थितो निःस्पृहः **तं पुत्रकत्वे [देशिकः]** गुरुः **योजयेत्**[5] । **[एनं च सस्पृहं साधकं]** यस्तु [6]भोग्येच्छुत्वात् सस्पृहः तस्य **[उक्तेन विधिना]** प्रागुक्तवत्साधकत्वेन योगः कार्यः । [7]अत्र स्पृहाशब्देन परमेश्वरार्चनविधिश्रद्धा[8]ऽभिमता । [9]यतः सन्ति केचन साधका भोगनिस्पृहा अपि परमेश्वरार्चनोपयोगिशुद्धद्रव्यसंपादनाद्यर्थं[10] साधकत्वं कृत्वा परमेश्वरमेवोपासितुं कृतनिश्चयाः । [11]तथाविधा [12]च स्पृहा तेषां भूषणमेव । [13]तथाह तत्रभवान् **कर्णिकाकारः**—

"रागोऽप्यस्तु जगन्नाथ मम त्वय्येव यः स्थिरः ।
लोभायापि नमस्तस्मै [14]त्वल्लोभालम्बनाय मे ॥" इति ।

अस्माभिरप्युक्तं [15]**स्तोत्रावलौ**—

"[16]साफल्यभाञ्जि भवदङ्घ्रिसरोजसेवा-
यत्तात्मनां[17] शिववपुःकरणानि[18] येषाम् ।
उद्वीक्ष्य तान्ध्रुवमवैम्यपवर्गभाजः
सद्यः शरीरकरणेष्वभिलाषिणः स्युः ॥" इति ॥

अथ क्रियापादोपसंहारमाह—

**इत्येतत्ते [19]सितमिश्रासितार्थं**
**लेशादुक्तं [20]प्रवरं [21]साधनानाम् ।**
**त्यक्ताक्षेपप्रतिवादानुषङ्गैः**
**शार्वैः सूत्रैः सुरयोगीशजुष्टम् ॥ २४४ ॥**

[1] B et C : अभिप्रेतेऽभिलषिते
[2] C : भार्या pour भोग्य
[3] C : च pour अपि
[4] B omet च
[5] C : यजेत pour योजयेत्
[6] C : भोग्येच्छुकात्
[7] C : अत्र च सस्पृहशब्देन स्पृहा pour अत्र स्पृहाशब्देन
[8] C ajoute अपि
[9] B omet यतः
[10] B : संपादनार्थं pour संपादनाद्यर्थं
[11] C : यथा pour तथा
[12] C omet च
[13] C : तथा चाह भगवान् pour तथाह तत्रभवान्
[14] C : दुर्लभालम्बनाय मे
[15] C : स्तोत्रावल्याम्
[16] B et C : साफल्यभाजि
[17] C : सक्तात्मनां pour आयत्तात्मनां
[18] C : करणादि pour करणानि
[19] B : सितमिश्रं सितार्थं
[20] C : प्रसरं
[21] A et B : साधकानाम्

[1]इति इत्थं हे ! [2]भरद्वाजमुने ! [ते] तव मया **एतत्** [**सितमिश्रासितार्थं**] शुद्धः शुद्धाशुद्धोऽशुद्धश्च अर्थः प्रयोजनं यस्य तत् त्रिविधं [3]यत् **साधनानां** [4]**प्रवरं** श्रेष्ठम् [**उक्तम्**] कथितम् । यतः प्रोक्तवत् [5]परमेश्वरार्चनाङ्गशुद्धद्रव्यसंपदां[6] यत्साधनं तत् शुद्धम् । [7]ततो द्विविधभुवनोपपन्नविचित्रभोगहेतुत्वेन सितासितं शुद्धाशुद्धम् । रससायनविवर[8]शुद्ध्यादि[9]फलत्वमशुद्धम् । अथ [10]कनैर्ता साधनमुक्तमित्याह—**त्यक्ताक्षेपप्रति**[11]**वादानुषङ्गैः शार्वैः सूत्रैः** इति प्रश्नप्रतिवचनानुषङ्गरहितैः मेश्वरैरेव सूत्रैः कथितम् । कीदृक् चैतत्—**सुरयोगीशजुष्टं** त्रिदशैः योगिप्रवरैश्च सेवितम् । एतत्सेवनान्ते [12]ते हि सिद्धिभाजः संजाताः । अनेन योगीशपदेन[13] समनन्तरवक्ष्यमाणस्य योगपादस्योपक्षेपः कृत इति शुभम् ॥ २४१ ॥

[14]श्रीमन्मृगेन्द्रे [15]विवृतिं क्रियाणां चकार नारायणकण्ठ एताम् ।
शरच्छशाङ्कप्रभयेव [16]तास्ताः क्रियाः प्रकाशन्त इहाशयोक्त्या ॥

[17]इति श्रीभट्टविद्याकण्ठात्मज-भट्टनारायणकण्ठविरचितायां [18]मृगेन्द्रवृत्तौ
[19]क्रियापादे [20]दीक्षाभिषेकादिप्रकरणमष्टमं समाप्तम्[21] ।

## क्रियापादः समाप्तः

[1] C omet इति
[2] C : भारद्वाज pour भरद्वाज
[3] B : यः साधकानां pour यत् साधनानां
[4] C : प्रवर श्रेष्ठ pour प्रवरं श्रेष्ठं
[5] C : पराय सदर्चनाङ्ग pour परमेश्वरार्चनाङ्ग
[6] C : संपदं pour संपदां
[7] C : तत्तद्विध pour ततो द्विविध
[8] C : शुद्धादि pour शुद्ध्यादि
[9] B : फलं तत्त्वशुद्धम् pour फलत्वमशुद्धम्
[10] C omet के
[11] C : पाद pour वाद
[12] C : तेऽभिसिद्धिभाजः
[13] C : शब्देन pour पदेन

[14] Ce indique que le *Yogapāda* suit le *Kriyāpāda* dans cet *Āgama* ; cf. page 1, note 4 et page 5 note 1; pour le *Yogapāda* voir *Mṛgendrāgama*, édition de Devakôṭṭai, pp. 457–496.

[15] C : वृत्तिः क्रियायां
[16] C : यस्मात् pour तास्ताः

[17] A : इति श्रीमन्मृगेन्द्रे क्रियापादे दीक्षाविधिपटलोऽष्टमः ; D : इति मृगेन्द्रे क्रियापादेऽभिषेकविधिः एकविंशतिः पटलः

[18] C : श्रीमन्मृगेन्द्रवृत्तौ
[19] C omet क्रियापादे
[20] B : दीक्षाद्यभिषेकादि ; C : दीक्षिताभिषेकादि
[21] C omet अष्टमं समाप्तम्

# अथ चर्यापादः[1]

## [ प्रथमः पटलः ]

## [ समयाचारविधिः ]

येनाणूनामुषितममलं दृक्क्रियाख्यस्वरूपं
यत्सद्भावाद्भवजलनिधौ जन्तुजातस्य पातः ।
दुर्वारं [2]तत्क्षपयति तमो यत्प्रसादस्तमीशं[3]
चर्यापादे विवृतिरचनां कुर्महे संप्रणम्य ॥

इह हि शास्त्रोपक्रमे—

"[4]इति वस्तुत्रयस्यास्य प्राक्पादकृतसंस्थितेः[5] ।
चर्यायोगक्रियापादैर्विनियोगोऽभिधास्यते ॥"

इति यत्प्राक् सूत्रितं तत्रावगतज्ञानक्रियायोगानामपि देशिकादीनां विहिताचरणनिषिद्धवर्जनरूपां चर्यां विना [6]न निर्विघ्नतो वाञ्छितफलावाप्तिरिति क्रमागतं योगपादसमाप्तावुपक्षिप्तसमन्वयं[7] चर्यापादमवतारयितुमाह—

**अथातो देशिकादीनां सामान्याचारसंग्रहः ।**
**[8]परश्चावसरप्राप्तः समासेनोपदिश्यते[9] ॥ १ ॥**

[1] Des quatre sections du *Mṛgendrāgama* soient (I) *Vidyāpāda*, (II) *Kriyāpāda*, (III) *Yogapāda*, (IV) *Caryāpāda* la première et la troisième ont été publiées par Śivāgamasiddhāntaparipālanāsaṃgha, Devakôṭṭai, 1928 et Kashmir Texts and Studies nᵒ 50, 1930. Aussi ne les avons nous pas données ici, ne présentant que la publications de la seconde et de la quatrième parties.

[2] C : तं pour तत्

[3] C : ईशाः pour ईशं

[4] cf. *Mṛgendrāgama, Vidyāpāda, Paramokṣanirāsaprakaraṇa, śloka* 8 (p. 62 édition de Devakôṭṭai).

[5] B : सुस्थितेः pour संस्थितेः

[6] B omet न

[7] cf. *Yogapāda, śloka* 65 (p. 495 édition de Devakôṭṭai); Ce ci indique que le *Caryāpāda* suit le *Yogapāda* dans cet *āgama*.

[8] A : परं च pour परश्च

[9] En ms. B le *śloka* 2 se trouve ici.

**[देशिकादीनाम्]** आचार्यसाधकपुत्रकसमयिनां **[सामान्याचारसंग्रहः]** साधारणाचार-समुच्चयः **[अवसरप्राप्तः]** [1]क्रमायातः **[समासेन]** संक्षेपाद् इदानीम् [2]**उपदिश्यते**ऽभिधीयत[3] इति। **अथ**शब्दोऽधिकारार्थः। **अतः**शब्दस्तु योगपादानन्तर्याय॥

**[शैवभेदाः]**

[4]देशिको मन्त्रवृत्तिश्च पुत्रकः समयी च यः।
चत्वार एते शैवाः स्युर्व्रतिनोऽव्रतिनोऽपि वा॥ २॥

**देशिक** [5]इत्याचार्यः। **[मन्त्रवृत्तिः]** मन्त्र एवानन्यनिष्ठा वृत्तिः यस्य स साधकः। शैवानामेव देशिकादीनामिह[6] लक्षणम्। शाक्तादयस्तु[7] ते अन्यादृशा एवेति विज्ञापयितुं शैवपदोपादानम्। द्विविधास्तु ते **शैवाः**। **व्रतिनो [अव्रतिनोऽपि]** व्रतवर्जिताश्च॥ १-२॥

**[व्रतिनः शैवाः]**

अथ व्रतिनस्तावदाह—

व्रतिनो जटिला मुण्डास्तेष्वग्र्या भस्मपाण्डराः।
तिलकैः पुण्ड्रकैः पट्टैर्भूषिता भूमिपादयः॥ ३॥

**[व्रतिनो जटिला मुण्डाः]** व्रतिनामपि द्वौ भेदौ जटित्वं मुण्डिता च। जटिलोऽपि वक्ष्यमाण-भौतिकनैष्ठिकभेदाद्[8] द्विविधः। **[तेषु]** सर्वेषु चैतेषु मध्याद् **[अग्र्याः]** ब्राह्मणाः **[भस्मपाण्डराः]** भस्मोद्धूलितसर्वाङ्गाः। **[भूमिपादयः तिलकैः पुण्ड्रकैः पट्टैः भूषिताः]** क्षत्रियास्तिलकालंकृततनवः। वैश्यास्त्रिपुण्ड्रकमण्डिताः। शूद्रास्तु पट्टाकृतिना [9]भस्मोद्धूलनेन भूषिताः स्युरिति शेषः॥ ३॥

**[जटाधारणेऽयोग्याः]**

[10]जटा न शूद्रो बिभृयान्नाज्ञो[11] नापि प्रमादवान्[12]।

[1] C: क्रमागतः
[2] B omet उपदिश्यते
[3] C omet अभिधीयते
[4] En ms. ce *śloka* se trouve après le *śloka* 1; cf. page 206 note 9.
[5] C omet इति
[6] C: अभि pour इह
[7] C omet तु
[8] C: व्रतभेदाद् pour भेदाद्
[9] B: भस्मोध्दूलनेन
[10] A: जटां pour जटाः
[11] A: अज्ञे pour अज्ञो
[12] A: प्रमोदवान्

न योषिन्नं [1]वयोऽन्तरथो न रोगी [2]विकलोऽपि वा ॥ ४ ॥

शूद्रमूर्खप्रमत्तस्त्रीवृद्धामयावि[3]विकलाङ्गैर्वा जटा न धारणीयाः। बहुवचननिषेधाद् एकजटा एते स्युरिति केचित् ॥ ४ ॥

[ जटाबन्धनविधिः ]

अथ तद्विधानम्—

[4]कलातत्त्वपवित्राणुशक्तिमन्त्रेशसंख्यया ।
विभज्य केशान्संपात्य[5] प्रत्यंशं संहिताणुभिः ॥ ५ ॥

व्रतेश्वरस्य पुरतो बध्नीयाच्छिवतेजसा ।
मन्त्रिणः साध्यमन्त्रेण हृदा पुत्रकयोग्ययोः ॥ ६ ॥

[**कला-तत्त्व पवित्राणु-शक्ति-मन्त्रेश-संख्यया**] **कलाः** 'तारा सुतारा [6]तरणिः' इत्याद्या अष्टत्रिंशत्। **तत्त्वानि** षट्त्रिंशत्। [7]**पवित्राणवः** सद्योजातादिमन्त्राः पञ्च। **शक्तयो** वामाद्या नव। **मन्त्रेशा** अनन्तादिविद्येशा अष्टौ। आभ्यः संख्याभ्यो मध्यादन्यतमया संख्यया **केशान् विभज्य** [**प्रत्यंशम्**] [8]एकैकस्मिन्नंशे [**संहिताणुभिः**] शिवैकादशिकया संहितया [**संपात्य**] संपातहोमं कृत्वा-भ्यर्चितस्य[9] [10]**व्रतेश्वरस्य** शिवस्य **पुरतः** [**शिवतेजसा**] तन्मूलेनाचार्यस्य जटां **बध्नीयात्**। [**मन्त्रिणः**] साधकस्य **साध्यमन्त्रेण** [**पुत्रकयोग्ययोः**] [11]पुत्रकसमयस्थयोस्तु **हृदे**ति भेदः ॥ ६ ॥

तस्य जटावृद्धिविशेषमाह—

[12]कृमिघ्नद्रव्यमिश्रेण भस्मना त्रैफलेन च ।
[13]सायचूर्णेन वा पुष्टिं नयेत्ता भौतिकव्रती ॥ ७ ॥

[1] A : वयान्तस्यो
[2] B : विमलोऽपि
[3] C : व्यङ्गैः pour विकलाङ्गैः
[4] A : कलातत्त्वपवित्रामुशक्ति... ; C : कलातत्त्वमपि प्राणशक्ति. . . .
[5] A : संपाद्य pour संपात्य
[6] B : तरणी pour तरणिः
[7] C : विषतृणः pour पवित्राणवः
[8] B : एकस्मिन्नंशे
[9] B : अभ्यर्च्य pour अभ्यर्चितस्य
[10] B : तद्व्रतेश्वरस्य
[11] B : पुत्रकसमयस्तयोस्तु
[12] A : क्रिमिघ्न pour कृमिघ्न
[13] A : सारचूर्णेन ; C : सायपूर्णेन

[कृमिघ्नद्रव्यमिश्रेण] कटुतैलविडङ्गपारदादिद्रव्यसंयुक्तेन [त्रैफलेन भस्मना] हरीतक्यामलक-विभीतकभस्मना[1] [सायचूर्णेन] [2]निशाचूर्णमिश्रेण[3] भौतिकव्रती[4] ताः पुष्टिं [नयेत्] प्रापयेत् ॥ ७ ॥

[ भौतिकव्रतिनो नैष्ठिकव्रतिनश्च ]

[5]भौतिकनैष्ठिकव्रतिद्वयलक्षणमाह—

भौतिकव्रतिनस्ते स्युर्येषां सावधिकं व्रतम् ।
देहपातान्तकं[6] येषां ते निष्ठाव्रतिनः स्मृताः ॥ ८ ॥

इयता कालेनैतद्व्रतं संन्यस्तव्यमिति सावधिकं येषां व्रतं ते भौतिकव्रतिनः । येषां [देह-पातान्तकं] शरीरपातान्तं निर्वाहः ते [निष्ठाव्रतिनः] नैष्ठिकाः ॥ ८ ॥

अथ के ते नैष्ठिकव्रतिन इत्याह —

गुरवः पुत्रका ये च न प्राथमिकसाधकाः ।

[गुरवः] आचार्याः[7] पुत्रकाः[8] तथा [न प्राथमिकसाधकाः] देहपातावधिमन्त्रसाधकाश्चेति[9] निष्ठाव्रतिनो ज्ञेयाः ॥

[ सान्तानिकः ]

भौतिकव्रतमोक्षायाह—

पूर्णव्रतावधिः[10] सम्यग्व्रतेशा[11]यार्पितव्रतः ॥ ९ ॥
न्यस्तव्रताङ्गः[12] सत्पत्नीपरिग्रहविभूतिमान् ।
भौतिकः काम्य इत्युक्तः सत्सान्तानिक एव वा ॥ १० ॥

सम्यग् इति, अविप्लुतव्रतस्य सतः[13] [पूर्णव्रतावधिः] पूर्णो व्रतावधिर्यस्य सः । तथा निर्व्यूढ-यथाम्नातव्रत इत्यर्थः । ततस्तु [व्रतेशाय] व्रतेश्वराय [अर्पितव्रतः] व्रतसमर्पणं कृत्वा [न्यस्तव्रताङ्गः]

[1] C ajoute च
[2] C omet निशा
[3] C ajoute वा
[4] B et E (ms. de Madras Government Oriental Mss. Library, R. N° 16792) : भौतिको व्रती
[5] B omet le passage भौतिकनैष्ठिकव्रतिद्वयलक्षणमाह
[6] A et C : देहपातान्तिकं
[7] B : आचार्यः
[8] B : पुत्रकः
[9] B : एते pour इति
[10] A : पूर्णव्रतावधि
[11] A : वृतेशाय pour व्रतेशाय ; C : श्रुतेशाय
[12] B : न्यस्तः व्रताङ्गः
[13] C : व्रतन्यस्तः pour व्रतस्य सतः

व्रताङ्गानि अजिनकमण्डल्वादीनि [1]संन्यस्य । यथोक्तं श्रीमत्**किरणे**[2]—

"तर्पयित्वा प्रणम्येशं व्रतमेषां[3] समर्पयेत् ।
[4]जटास्तद्भस्मदण्डं च कौपीनं [5]संयमं क्रमात् ॥
[6]समर्प्य ब्रह्मणे ध्यात्वा [7]पुष्पवार्यक्षतैस्त्रिधा ।
[8]व्रतं समर्प्य मन्त्राणां हृन्मन्त्रेण विसर्जनम् ॥
[9]जटावतरणं तस्य कार्यम् । " इति ।

एवं कृते सति [**सत्पत्नीपरिग्रहविभूतिमान्**] शोभनदारपरिग्रहभूतियुक्तः सन् **भौतिकः काम्य इत्युक्तः**[10] **सत्सान्तानिक** इति **वा**[11] । यद्वा विभूतियोगिनोऽस्यैव[12] काम्य इत्याख्या । तद्विरहिणस्तु सदा शोभनेन सान्तानिकाख्येन भैक्षेण वर्तनात्सान्तानिकत्वम् । यदुक्तं श्रीमत्**पौष्करे**—

" [13]उत्तमं द्विजभैक्षं तु प्राह्यमेतत्त्वया सदा ।
तद्धि सान्तानिकं नाम भैक्षं हि परिकल्पितम् ॥ " इति । १० ॥

## [ अव्रतिनः शैवाः ]

**साधको लोकधर्मी यः पुत्रकः स्नातको गृही ।**
**समयी प्राग्गृहस्थश्च शैवाः स्युर्व्रतवर्जिताः ॥ ११ ॥**

साधकस्य[14] शिवधर्मिलौकिकधर्मिभेदाद्[15] द्वैविध्ये सति **लोकधर्मी यः साधकः**, **पुत्रकः**, तथा [**स्नातको गृही**] गृहस्थत्वे[16] सति स्नातः, **समयी**, [**प्राग्गृहस्थः**] पूर्वं गृहस्थश्चेत्येते **व्रतवर्जिता** ज्ञेयाः ।

[1] B : संत्यज्य pour संन्यस्य
[2] cf. *Kiraṇāgama*, III, 10, 11-13
[3] *Kiraṇāgama* : तेषां pour एषां
[4] B : जटा तद्भस्मदण्डं च ; C : जटास्तद्भस्म चण्डं च ; *Kiraṇāgama* : जटा भस्म च दण्डं च
[5] *Kiraṇāgama* : संयतं
[6] C : समर्च्य ब्राह्मणान् ध्यात्वा ; *Kiraṇāgama* : ध्यात्वा समर्पयेदेतत्
[7] *Kiraṇāgama* : त्रिः कृत्वा कुसुमाक्षतैः
[8] *ibid.*, व्रतं समर्पयेदेवं हृदा कार्यं विसर्जनम्
[9] *ibid.*, जटावतारणं कार्यं यदावासःस्थितिर्भवेत्
[10] C : इत्युच्यते pour इत्युक्तः
[11] B omet सत्सान्तानिक इति वा
[12] C omet एव
[13] B : उत्तमद्विजभैक्षं तु
[14] B : साधकश्च
[15] B : शिवधर्मीलोकधर्मीभेदाद्
[16] C : गृहस्थके

**प्राग्गृहस्थश्च** इत्युत्तरकालं[1] गार्हस्थ्यत्यागापेक्षया। यतः संभवन्ति केचन [2]आजीवनमनुज्झितगृहावस्थितयः। तद्वैलक्षण्यार्थं[3] प्राग्गृहस्थग्रहणम् ॥ ११ ॥

[ **शैवानां साधारण आचारः** ]

**तेषां साधारणं [4]कर्म संध्योपासनमर्चनम् ।**
**स्नानादीनि तदङ्गानि पर्वसु द्विगुणक्रिया[5] ॥ १२ ॥**

**तेषां** [6]व्रतिनामिदमव्रतिभिः **साधारणं कर्म** इत्यग्रस्थितेषु श्लोकेष्वपि संबन्धनीयम्। किं तदित्याह—[**संध्योपासनमर्चनं**] संध्योपासनार्चनादि। [**तदङ्गानि**] तस्य[7] कर्मणो यान्यङ्गानि **स्नानादीनि** तान्यपि साधारणान्येव। **पर्वसु** चाष्टमीचतुर्दश्ययनविषुवादिषु [**द्विगुणक्रिया**] पूजाजपादिक्रियाद्वैगुण्यम् ॥ १२ ॥

[ **भोजने वर्ज्यानि पत्राणि ; भैक्षग्रहणं च** ]

किं च—

**न्यग्रोधाश्वत्थपत्रेषु वातघ्नाक्षदलेषु च ।**
**[8]कांस्ये [9]वाभोजनं भैक्षं चातुर्वर्ण्यमकुत्सितम् ॥ १३ ॥**

[**न्यग्रोधाश्वत्थपत्रेषु**] न्यग्रोधस्य वटस्य, अश्वत्थस्य [10]चोर्ध्वोद्गतमूलस्तद्विशेषस्य पत्रेषु, [**वातघ्नाक्षदलेषु**] वातघ्नस्य चैरण्डादेः अक्षस्य विभीतकस्य संबन्धिषु पत्रेषु, [11]**कांस्ये** पात्रे **अभोजनं,**[12] [**चातुर्वर्ण्यम् अकुत्सितं भैक्षं**] ब्राह्मणादि[13]वर्णचतुष्टयादनिन्दिताद्भैक्षग्रहणं च [14]सर्वसाधारणम् ॥ १३ ॥

[1] B et C: प्राग्गृहस्थश्चेदुत्तरकाले

[2] B: आजीवनमनु इव ज्जितगृहावस्थितयः; C: आजीवनमनुज्जितस्य गृहावस्थितयः

[3] C: तद्वैलक्षण्याय

[4] C: धर्म pour कर्म

[5] C: द्विगुणा क्रिया

[6] C: व्रतिनां साधकादीनामिदमव्रतिभिः

[7] C et E ajoutent च

[8] A: कास्ये pour कांस्ये

[9] B: चाभोजनं pour वाभोजनं

[10] C: चोर्ध्वोद्गत आलस्य तद्विशेषस्य; E: चोद्गतमूलस्य तद्विशेषस्य वा

[11] C: कांस्ये पात्रे भोजनं कर्तव्यम्

[12] अत्र सुवर्णादिपात्राभावे कांस्यपात्रे भोजनम् अघोरशिवाचार्यादिभिरङ्गीकृतम्। यथा "सुवर्णरजतताम्रलोहपात्रेषु अभावे सप्तधा भस्मशोधिते अघोरेण सप्तधाभिमन्त्रिते कांस्यपात्रे वा अनिषिद्धेषु कदल्यादिपत्रेषु वा अश्नीयुः" (*Aghoraśivācāryapaddhati*, p. 135) इति। अतः 'कांस्यपात्रे वा अभोजनम्' पक्षान्तरे पात्रान्तरालाभे भोजनमनुमतं मूलकारस्येति प्रतिभाति। व्याख्याने त्वेतादृशविवरणं नोपलभ्यते ॥

[13] C: चातुर्वर्ण्याद् pour वर्णचतुष्टयाद्

[14] B et E omettent सर्व

[ अन्नवर्जनम् ]

[1]सर्वामरप्रतिष्ठासु [2]सेत्वादीनां [3]निवेशने ।
सीमन्तोन्नयनाद्येषु संस्कारेष्वन्नवर्जनम् ॥ १४ ॥

[**सर्वामरप्रतिष्ठासु**] सर्वदेवप्रतिष्ठासु [**सेत्वादीनां निवेशने**] सेतुप्रपाविहारादि[4]प्रतिपादने [**सीमन्तोन्नयनाद्येषु संस्कारेषु**] [5]सीमन्तोन्नयनादिषु संस्कारेषु च **अन्नवर्जनम्** [6]अन्नादिवर्जनं सर्वेषां साधारणम् ॥ १४ ॥

[ पर्वस्वाहारनियमः ]

किं च—

चरुणा फलमूलैर्वा हविष्येणापरेण वा ।
चतुर्दश्यामथाष्टम्यां पञ्चदश्यां च वर्तनम् ॥ १५ ॥

[**चतुर्दश्याम् अष्टम्यां पञ्चदश्यां च**] चतुर्दश्यष्टमीपञ्चदशीषु [**चरुणा फलमूलैर्वा**] [7]चर्वादिभिः **वर्तनं** [8]प्राणयात्रा । **हविष्येणापरेण** वा इत्यनेन आज्यपयोयवादिना हविरर्हेण वस्तुना [9]फलमूलादिव्यतिरिक्तेन वर्तनं [10]साधारणमिति प्रागुक्तेन संबन्धः ॥ १५ ॥

[ पुण्यकालेषु विशेषनियमाः ]

तथा[11]—

व्यतीपातदिनध्वंसमासवृद्ध्ययनादिषु ।
विशेषसंयमः कार्यः शैवानां च प्रतर्पणम् ॥ १६ ॥

**व्यतीपातः** पुण्यकालविशेषो ज्योतिःशास्त्राम्नातो [12]बृहद्वैधृत्याद्युपलक्षितः । **अयने** दक्षिणोत्तरे । **आदि**ग्रहणाद्विषुवदर्केन्दुग्रहणकालाः । एषु कालेषु **विशेषसंयमः** [**शैवानां च प्रतर्पणं**] शैवजनतर्पणं[13] च सर्वेषामेव साधारणम् ॥ १६ ॥

[1] A et B : सर्वाम् च प्रतिष्ठाम्
[2] A : सत्त्वादीनां
[3] C : प्रवेशने
[4] C et E : विहारादिषु pour विहारादि
[5] B : सीमन्तोन्नयनादिसंस्कारे च
[6] B et C omettent अन्नादिवर्जनं
[7] C : पर्वादिवर्तनं pour चर्वादिभिः वर्तनं
[8] B et E : प्राणाधारता pour प्राणयात्रा
[9] B : फलमूलादिना व्यतिरिक्तेन
[10] C : समाधारणमिति
[11] C ajoute च
[12] E : ब्राह्म pour बृहद्
[13] C : प्रतर्पणं pour तर्पणं ; E : प्रीणनं

[ आपदि शैवानां रक्षणम् ]

[1]मार्गक्षीणे रिपुग्रस्ते [2]रोगार्ते क्षुत्प्रपीडिते ।
सर्वात्मना समुद्धारः कर्तव्यः शिवयोगिनः ॥ १७ ॥

[**शिवयोगिनः**] शिवशासने युक्तस्य सर्वस्यैव मार्गक्षीणादिविषये[3] **समुद्धारः** [4]**सर्वात्मना** [**कर्तव्यः**] करणीयः । [**मार्गक्षीणे**] मार्गस्य अध्वनः क्षीणे परिच्युतौ, नष्टो मार्गे अध्वनि यः क्षीण-पाथेयः[5] क्षीणदेहो वा तस्मिन् । **रिपुग्रस्ते** शत्रुभिर्वशीकृते । **रोगार्ते** व्याध्युत्क्रान्ते । [**क्षुत्प्रपीडिते**] क्षुधा च प्रकर्षेण पीडिते । [**सर्वात्मना समुद्धारः**] सर्वप्रकारमुद्धारणं [6]तस्मात्तस्या आपदो मोचनमवश्यं कार्यम् ॥ १७ ॥

[ व्रतिनां वर्ज्यानि ]

व्रतिनो भौतिकस्य च नैष्ठिकस्य च सामान्यवर्तनलक्षणमाह—

मांसयोषिन्मधुत्यागो व्रतिनः क्षितिशायिता ।
मात्रारक्षणमेकस्य कमण्डलुसहायता[7] ॥ १८ ॥
स्त्रीगीतनर्तितालापविलासानामुपेक्षणम् ।
स्त्रिया रहोऽव्यवस्थानं [8]स्रगभ्यङ्गादिवर्जनम् ॥ १९ ॥

**व्रतिन** इदमवश्यमनुष्ठेयम् । **मांसयोषिन्मधुत्यागः** मांसस्य [9]योषितो मधुनश्च वर्जनम् । मांसत्यागस्त्वत्र[10] शूद्रस्यैव । अन्येषामव्रतित्वेऽपि[11] तन्निषेधसिद्धेः । **क्षितिशायिता** इति [12]**स्थलशायि-त्वम्** । [**मात्रारक्षणम्**] अजिनाक्षसूत्रदण्डकमण्डल्वादिमात्रायाः स्वोपयोगिनः परिकरस्य रक्षणम् अप्रमादः । [**एकस्य कमण्डलुसहायता**] एकस्यैव कमण्डलुद्वितीयस्यावस्थानम् । [**स्त्रीगीतनर्तिता-लापविलासानां**] स्त्रीसंबन्धिनो गीत[13]नृत्यसल्लापविलासादेः [**उपेक्षणं**] [14]परिहरणम् । [**स्त्रिया रहो**

[1] B : मार्गे क्षीणे
[2] C : व्याधिते pour रोगार्ते
[3] C et E : विषयः pour विषये
[4] C et E : सर्वदा pour सर्वात्मना
[5] B : पन्थाः pour पाथेयः
[6] C omet तस्मात्
[7] A : सहायिनः ; C : सहायिता
[8] A : स्रगाङ्गादिवर्जनम्
[9] B : मधुनो योषितश्च
[10] C : त्यागश्च pour त्यागस्त्वत्र
[11] B : अव्रतत्वेऽपि pour अव्रतित्वेऽपि
[12] B : जल pour स्थल ; C omet स्थलशायित्वम्
[13] E : नृत्त pour नृत्य
[14] C : परिग्रहणम्

ऽव्यवस्थानं] स्त्रिया च सहैकान्तेऽवस्थितिवर्जनमिति[1] सहावस्थितिमात्रस्येह[2] निषेधः पूर्वं तु [3]तत्सं-भोगस्येति [4]न पौनरुक्त्यम्। [स्रगभ्यङ्गादिवर्जनं] स्रग्विलेपनाभ्यङ्गादिवर्जनं च ॥ १८-१९ ॥

[ श्राद्धकालाः ]

किं च—

कृष्णपक्षे चतुर्दश्यामष्टम्यां [5]सिद्धदर्शने ।
श्राद्धं पर्वसु सर्वेषु विषुवे चाष्टकादिषु ॥ २० ॥

[ पूज्याः ]

गुरुतत्तुल्यबन्धूनां भ्रातॄणां ज्यायसामपि ।
पूजनं मधुपर्काद्यैः ॥

[कृष्णपक्षे चतुर्दश्यामष्टम्यां] कृष्णाष्टमीचतुर्दश्योः [सिद्धदर्शने] सिद्धसंदर्शने [विषुवे] विषुवदुत्तरायणार्केन्दुग्रहणादिषु[6] [सर्वेषु पर्वसु] [7]सर्वपर्व[8]कालेषु च श्राद्धं [9]विशेषतश्च [अष्टकादिषु] इति, कन्यागतेऽर्के माघत्रयोदशीप्रभृतिषु च कुर्यात्। [गुरुतत्तुल्यबन्धूनां] गुरोः [10]गुरुपुत्रादीनां च तत्तुल्यानामन्येषां च वयोविद्याधर्मादिवृद्धानां च [ज्यायसां भ्रातॄणां] [11]जन्मादिना दीक्षाद्यनुग्रहतश्च ज्येष्ठानां भ्रातॄणां च [मधुपर्काद्यैः] मधुपर्कवस्त्रालंकाराद्यैः [12]पूजनं कार्यम् ॥ २०-२१ ॥

[ व्रतसमाप्तौ भौतिकव्रतिन आचारः ]

सत्पत्नीपरिग्रहविभूतिमत्त्वं भौतिकस्य यदुक्तं तद्विशेषयितुमाह—

स्वकाले स्त्रीनिषेवणम् ॥ २१ ॥
मङ्गलाचारयोगित्वं गन्धमाल्यादिधारणम् ।

[स्वकाले स्त्रीनिषेवणं] व्रतसमाप्तेरूर्ध्वं दारसंग्रहकालः स्त्रीणां स्वकालः, तस्मिन्निषेवणम। [मङ्गलाचारयोगित्वं गन्धमाल्यादिधारणं] मङ्गलाचरण[13]योगं [14]प्रकटं स्रगादिधारणं च कुर्यात् ॥

[1] B : वर्जनं चेति pour वर्जनमिति
[2] B : मात्रमस्येह pour मात्रस्येह
[3] B : तत्संबन्धभोगस्येति
[4] C : अपौनरुक्त्यम् pour न पौनरुक्त्यम्
[5] A : सिन्धुदर्शने.
[6] C et E ajoutent च
[7] C omet सर्व
[8] B omet पर्व
[9] B : विशेषेषु च pour विशेषतश्च
[10] C : गुरुपुत्राणां च
[11] B et E : जन्मतो pour जन्मादिना
[12] C : भूषणं pour पूजनं
[13] C : आचार pour आचरण
[14] C : अप्रकटं ; E : प्रकट

[ शैवानाम् असाधारण आचारः ]

इदानीं "परश्चावसरप्राप्त[1]" इति प्राक्प्रक्रान्तोऽसाधारण आचारसंग्रहः सूच्यते—

[2]**पृथक्पृथक्तथैतेषामाचारोऽपि विधीयते ॥ २२ ॥**

**एतेषां** देशिकादीनां **पृथक्पृथग्** विधिनिषेधात्मक **आचारो विधीयते** अनुशास्यते ॥ २२ ॥

[ देशिकाचारविधिः ]

[3]तत्र देशिकस्य तावदाह—

[4]**महेशशक्तिनुन्नानां गुरुः कुर्यादनुग्रहम् ।**
**परीक्षाभिः परिज्ञाय वृद्धोक्ताभिः प्रयत्नवान् ॥ २३ ॥**
**अकृत्वा शिवभक्तानां कृत्वा च व्यभिचारिणाम् ।**
**प्रायश्चित्ती भवेद्यस्मात्कुर्याद्यत्नमतः परम्[5] ॥ २४ ॥**

'[6]सा शक्तिरापतत्यार्द्रा पुंसो जन्मन्यपश्चिमे' इति पारमेश्वर्यानुग्रहशक्त्यान्तरितानामणूनां गुरुरनुग्रहं दीक्षारूपं कुर्यात् । कीदृशं किं च कृत्वेत्याह—**वृद्धोक्ताभिः परीक्षाभिः** [7]**प्रयत्नवान् परिज्ञाय** विद्यावृद्धा [8]आगमोक्तपरीक्षाकुशला अत्र **वृद्ध**शब्देनोक्ताः । [9]तदभिहिताभिः [10]परीक्षाभिः [11]सप्रयत्नः सन् परिज्ञाय संसारवैतृष्ण्यमनुग्रहार्थिनां च [12]बुद्ध्वा । यस्मादेवंविधां परीक्षां विना **शिवभक्तानां** कदाचिदकरणं **व्यभिचारिणां च** करणं[13] स्यात् । तदानीं **प्रायश्चित्ती** गुरुः **भवेत्** । **अतः** [**परं**] प्रकृष्टं **यत्नं** तदाशयपरीक्षणे **कुर्यात्** ॥ २३ - २४ ॥

[ संजीवनाख्यं कर्म ]

प्रसङ्गाद् व्यभिचारिणि दीक्षिते संजीवनाख्यं[14] कर्म वक्तुमाह—

**कर्म संजीवनं कुर्याद्व्यभिचारिणि दीक्षिते ।**

[1] cf. plus haut *śloka* 1

[2] C : पृथक्पृथक् च एतेषां युक्तायुक्तं विधीयते ।

[3] C : अत्र pour तत्र

[4] Ce demi-*śloka* manque en ms. B

[5] C : ततः परम् pour अतः परम्

[6] cf. *Svāyambhuvāgama*, 33, 16 ; C : सा शक्तीनां पतत्याद्या. Le passage 'सा शक्तिरापतत्यार्द्रा à कृत्वेत्याह manque en ms. B.

[7] C : सत्प्रयत्नस्तं pour प्रयत्नवान्

[8] B : आगमोक्ताः pour आगमोक्त

[9] B : ताभिः pour तदभिहिताभिः

[10] B omet परीक्षाभिः

[11] C : सत्प्रयत्नः pour सप्रयत्नः

[12] B : बान्धवा pour बुद्ध्वा

[13] C ajoute च

[14] C : संजीवनार्थं

**सृष्टितः संहिताहोमादधः[1] पूर्णासमन्वितम् ॥ २५ ॥**

कृत्रिमसंसारवैतृष्ण्यगुरुदेवादिभक्तिप्रकर्षासंदर्शनादपरिपक्वे [2]जने **व्यभिचारिणि दीक्षिते** सति [**सृष्टितः**] सृष्टिक्रमेण प्रतितत्त्व**संहिताहोमात्** सर्वसमाप्तौ [**अधः**] अधस्तात् [**पूर्णासमन्वितं**] पूर्णाहुतिदानतः [**संजीवनं**] संजीवनाख्यं **कर्म** दीक्षाफलप्रतिबन्धकं भवति ॥ २५ ॥

ननु[3] दीक्षायां कर्मदाहस्य वृत्तत्वात् पुनः संजीवनम् [4]कथमुपपद्यत इत्येतदाह—

**संजीवनं न दग्धस्य कर्मणोऽस्ति मृषा चितः[5] ।**
**[6]खेदनापायशमनं प्रायश्चित्तं हि तद्गुरोः ॥ २६ ॥**

दीक्षितस्य तावदनर्हत्वादेव दीक्षाफलं न [7]सिद्धम् । अतः किं तस्य संजीवनोक्त्या । **न** च **दग्धस्य कर्मणः** [**संजीवनमस्ति**] [8]संजीवनोपपत्तिः । [**खेदनापायशमनम्**] अपि तु अस्थाने वृथैव मन्त्राः खेदिताः, ततः प्रत्यवायो मा भूदिति तच्छान्तये **गुरोः तत् प्रायश्चित्तम्** ॥ २६ ॥

**[ मतान्तरीयाणां दीक्षा ]**

**दर्शनान्तरसंस्थाभ्यश्च्युतानामनुवर्तिनाम् ।**
**विधायैवं [9]स्वजात्यन्तं दीक्षां कुर्याद्विलोमतः ॥ २७ ॥**

[**दर्शनान्तरसंस्थाभ्यः**] याः कापिलसौगतादिपरदर्शनोदिताः [10]संस्था उक्तयस्ताभ्यः **च्युतानां** [11]भावनादिवशाद् भ्रष्टानाम् [**अनुवर्तिनां**] [12]कालान्तरतः शक्तिपातमाहात्म्याद् [13]अन्धत्वनिवृत्त्या शैवमार्गानुवर्तिनां मतां प्रायश्चित्तार्थम् [14]**एवम्** इति प्राग्वत्सृष्टिक्रमात्सामान्यमन्त्रसंहिताहोमं **स्वजात्यन्तं** कुर्यात् । स्वजातिशब्देन चतुर्दशविध[15]भूतसर्गमध्यस्थ[16]ब्राह्मणजातिसमाश्रयो भूलोके लक्ष्यते । तदन्तं यावत् । ततस्तु **विलोमतः** संहारक्रमात् प्रागुक्तवत् स्वाधःपर्यन्तं यावद् [**दीक्षां कुर्याद्**] [17]दीक्षया [18]योजनिकां कुर्यात् ॥ २७ ॥

[1] C : मम pour अधः
[2] E : आत्मनि pour जने
[3] C omet ननु
[4] C : कथमित्युपपद्यत इत्याह
[5] A : चिता pour चितः ; C : चिताम्
[6] A : घटना pour खेदना ; B : वेदना pour खेदना
[7] C : विद्धम् pour सिद्धम्
[8] C : संजीवनोक्त्योपपत्तिः
[9] A : स्वजात्यन्तदीक्षां
[10] B : संस्थामुक्तयस्ताभ्यः ; C : संस्थामुत्तमाधस्ताभ्यः
[11] E : भवनादि pour भावनादिं
[12] B : कालान्तरः pour कालान्तरतः
[13] C : इत्यन्त pour अन्धत्व ; E : अत्यन्त
[14] C : एवेति pour एवमिति
[15] B omet भूत
[16] E : ब्राह्मणादिजाति
[17] B omet दीक्षया
[18] C योजनिकार्यं ; E : योनिकां

[ मन्त्रगोपनम् ]

**न ते मन्त्रप्रयोक्तारः पुनर्भवतया मताः ।**
**मन्त्रसाधनसंसिद्धेः कुर्यात्तानी[1]तराण्यतः ॥ २८ ॥**

**ते** [2]चैव दीक्षिता अपि **पुनर्भवतया** [**मन्त्रप्रयोक्तारः न मताः**] [3]मन्त्रप्रयोगार्हा [4]न भवन्ति । नान्यस्यानुग्रहादिव्यापारयोग्याः । नाप्यात्मनो [**मन्त्रसाधनसंसिद्धेः**] मन्त्रसाधनजनितायाः सिद्धेः प्रयोक्तारः प्रयोजकाः स्युः । मन्त्रसिद्ध्यर्थमाम्नातस्य क्रियाकाण्डस्य प्रयोगे तेषामनर्हकत्वं[5] भवतीति यावत् । **अतः** एभ्यः सकाशाद् [**इतराणि कुर्याद्**] मन्त्रसाधनान्यन्यानि संपादयेत् पृथक् कुर्यात् । न त्वेषां तानि प्रकटयेदित्यर्थः ॥ २८ ॥

[ मन्त्रव्याख्यानार्हाः ]

न च सर्वत्र तद्वोपनीयम् । अपि तु—

**व्याकुर्याच्छिवभक्तेभ्यस्तन्त्रार्थं गतमत्सरः ॥**
**न्यायतो न्यायवर्तिभ्यः पालयन् गुरुसन्ततिम् ॥ २९ ॥**

[**गुरुसन्ततिं पालयन्**] गुर्वाम्नायक्रमं रक्षन् [**न्यायवर्तिभ्यः**] शास्त्रानुष्ठानपरेभ्यः **शिवभक्तेभ्यः तन्त्रार्थं** [**गतमत्सरः**] अन्विष्टः सन् [**न्यायतः**] वक्ष्यमाणन्यायेन [6]**व्याकुर्यात्** ॥ २९ ॥

[ व्याख्याने वर्ज्याः कालाः ]

**नाजीर्णाम्लरसोद्गारे न च विण्मूत्रबाधने ।**
**[7]न छर्द्यां नातिसारे वा [8]नास्नातः कृतमैथुनः ॥ ३० ॥**

[**अजीर्णाम्लरसोद्गारे**] अजीर्णत्वादाम्लाम्बु[9]रसोद्गारे [**विण्मूत्रबाधने**] मूत्रपुरीषोत्तम्भने [**छर्द्यां**] वान्तौ च [10]वृत्तायाम **अतिसारे** च [11]**न** व्याख्यानं कुर्यात् । [**नास्नातः कृतमैथुनः**] न चाप्युपभोगानन्तरमकृतस्नानः [12]सन् ॥ ३० ॥

1 C : तान् pour तानि
2 B : नैव pour चैव ; E omet च
3 C : मन्त्रयोगार्हा
4 B omet न
5 C : अनर्हत्वं pour अनर्हकत्वं
6 B : वा कुर्यात् pour व्याकुर्यात्
7 A : न चार्तावतिसारे वा
8 A : न स्नातः
9 E : अम्ल pour आम्लाम्बु
10 B : वृत्यायाम्
11 C : व्याख्यानं न कुर्यात्
12 C omet सन्

[ व्याख्यानविधिः ]

[1]व्याख्याविधिमाह—

[2]पूते महीतले स्थित्वा [3]पशुश्रवणवर्जिते ।
[4]परिध्यन्तःस्थितं चेष्ट्वा शिवं प्रणवविग्रहम् ॥ ३१ ॥
गणाध्यक्षं गुरुं चैव कारकं च क्रियाश्रयम् ।
पुस्तकं गुप्तसत्सूत्रं विधायोपरि कस्यचित् ॥ ३२ ॥
[5]ब्रूयादङ्ग पठस्वेति [6]कृतार्थं [7]प्रागुदङ्मुखः ।
प्रारभेत गुरुर्व्याख्यां संबन्धार्थोक्तिपूर्विकाम् ॥ ३३ ॥

[**पूते**] [8]उपलेपनादिना पवित्रिते [**पशुश्रवणवर्जिते**] [9]अदीक्षितश्रवणरहिते [**महीतले**] [10]भूतले [**परिध्यन्तःस्थितं**] सूत्रोच्चाटनकृतमर्यादात्मकपरिध्यन्तरस्थं [**शिवं प्रणवविग्रहं**] प्रणवाकारं परमेश्वरं [**गणाध्यक्षं**] गणेश्वरं **गुरुं च** [**इष्ट्वा**] अभ्यर्च्य [**क्रियाश्रयं कारकं च**] [11]व्याख्याक्रियोपयोगिप्राकरणिकसूत्राधिकारकमिष्ट्वा [**गुप्तसत्सूत्रं**] [12]संरक्षितशोभनप्रथितसूत्रं **पुस्तकं कस्यचित्** [13]पीठयन्त्रकादेः **उपरि** [**विधाय**] कृत्वा **कृतार्थं** शिष्यम् **अङ्ग** इत्यामन्त्र्य [**पठस्वेति**] पठेति [**ब्रूयाद्**] आदिशेत् । स्वयं च [**गुरुः प्रागुदङ्मुखः**] प्राङ्मुख उदङ्मुखो वा व्याख्यां [**प्रारभेत**] उपक्रमेत । [14]**संबन्धार्थोक्तिपूर्विकाम्** इति, कीदृशः **संबन्धः**—परो महान् अन्तरालो दिव्यो दिव्यादिव्योऽदिव्य इति षट्प्रकारः । **अर्थः** प्रयोजनम् । **उक्तिः**तात्पर्यकथनम् । अभिधेयमित्यर्थः । तत्पुरस्सरं संबन्धाभिधेयप्रयोजनवर्णनं[15] [16]प्रथमं कुर्यादिति भावः ॥ ३१ - ३३ ॥

किंच—

स्रोतो ब्रूयादनुस्रोतो भेदान् संख्यानमेव च ।
प्रवृत्तये गुरुं स्वं च स्तेयी स्यात्तदकीर्तनात् ॥ ३४ ॥

[1] C : तद्व्याख्या pour व्याख्या
[2] B : एते pour पूते ; C : पूतो
[2] B : पशुं pour पशु
[4] C : परिध्यन्तः स्थितश्चेष्ट्वा
[5] A : ब्रूयादङ्गपदं स्वेति
[6] A : क्रियार्थं
[7] A et C : प्रागुदङ्मुखम्
[8] B : उपलोपादिना पविलिते
[9] B : आदीक्षित pour अदीक्षित
[10] C omet भूतले
[11] E : व्याख्याक्रियोपयोगिकरणीसूत्रादिकारकमिष्ट्वा
[12] C et E : सुरक्षित pour संरक्षित
[13] C : पीठशरत्वक्लादिकादेः ; E : पीठस्य यन्त्रकादेः
[14] C omet संबन्धार्थोक्तिपूर्विकामिति
[15] B : वर्तनं pour वर्णनं
[16] C : पृथक् pour प्रथमं

**[स्रोतोऽनुस्रोतो भेदान् संख्यानमेव च]** स्रोतोऽनुस्रोतस्तद्भेदसंख्यानं[1] **[स्वं गुरुं च]** स्वगुरुक्रमं च **[प्रवृत्तये ब्रूयाद्]** शास्त्रप्रवृत्तिहेतुं वदेत्। **[तदकीर्तनात् स्तेयी भवेत्]** गुरोरकीर्तनाद्धि स्तेयं भवेत् ॥ ३४ ॥

[ स्रोतांसि ]

अथ कानि स्रोतांसि [2]कान्यनुस्रोतांसि चेत्याह—

**स्रोतांसि [3]कामिकाद्यूर्ध्वमसिताङ्गादि दक्षिणम् ।**
**संमोहाद्युत्तरं [4]प्राच्यं [5]त्रोतलादि सुविस्तरम् ॥ ३५ ॥**
**[6]आप्यं चण्डासिधारादि चण्डनाथपरिग्रहम् ।**

**कामिकादि** [7]कामिकादीनि ज्ञानानि **[ऊर्ध्वं स्रोतांसि]** ऊर्ध्वस्रोतः। **[असिताङ्गादि]** [8]असिताङ्गादीनि **दक्षिणम्**। [9]**संमोहादि** [10]संमोहादीनि **उत्तरम्**। [11]**त्रोतलादि**ज्ञानानि **[प्राच्यं]** [12]प्राच्यानि। **[चण्डासिधारादि]** चण्डासिधारादीनि **[आप्यं]** पश्चिमम्। [13]तच्च **[चण्डनाथपरिग्रहं]** चण्डेश्वरपरिग्रहतया ज्ञेयमिति पञ्चस्रोतःकथनम् ॥

[ अनुस्रोतांसि ]

[14]अथानुस्रोतांस्युच्यन्ते—

**[15]शैवं [16]मान्त्रेश्वरं गाणं दिव्यमार्षं [17]च गौह्यकम् ॥ ३६ ॥**
**योगिनीसिद्धकौलं[18] च स्रोतांस्यष्टौ विदुर्बुधाः ।**
**प्रतिस्रोतोऽनुयायीनि तानि ब्रूयाद्विभागशः ॥ ३७ ॥**

शैवादीनि **अष्टौ स्रोतांसि [प्रतिस्रोतोऽनुयायीनि]** प्रतिस्रोतोऽनुविधायीनीति, [19]एतान्ये-

[1] C : संख्यात pour संख्यानं
[2] C omet कानि
[3] A : कामिकादूर्ध्वम्
[4] B : प्राच्यां
[5] B : क्रोतकादि
[6] B : आप्या
[7] B et C omettent कामिकादीनि
[8] C : असितादि pour असिताङ्गादीनि
[9] B omet संमोहादि
[10] C omet संमोहादीनि
[11] B et E : त्रोतालादि pour त्रोतलादि
[12] C : प्राच्यादि
[13] B : तत् pour तच्च
[14] C omet अथ
[15] Les *śloka* 36b et 37 manquent en ms. A.
[16] B : मन्त्रेश्वरं
[17] C : सगौह्यकम्
[18] B : सिद्धकालं pour सिद्धकौलं
[19] C omet एतानि

कैकस्मि[1]न्नूर्ध्वादौ स्रोतस्यनुस्रोतस्त्वेन स्थितानीत्यर्थः। [तानि] [2]एतानि च **विभागशः [ब्रूयात्]** कथयेत् ॥ ३६ - ३७ ॥

[**शैवम्**]

अथैतेभ्यः प्रथमोद्दिष्टं शैवं [3]तावद्व्याचष्टे—

**शैवं प्राक्तन्त्र[4]निर्माणमाज्ञासिद्धमसंशयम् ।**

[**प्राक्**] [5]प्राथम्ये सर्गप्रारम्भ एव यच्छिवभट्टारकापादित**तन्त्रनिर्माणम्** [**आज्ञासिद्धम्**] आज्ञा[6]मात्रसिद्धम् [**असंशयम्**] असन्देहमति[7]वीर्यवत् तज्ज्ञानं **शैवम्** ।

[**मान्त्रेश्वरं, गाणं, दिव्यम्, आर्षं च**]

मान्त्रेशादिचतुष्टयमाह—

**तदीशानैर्गणैर्देवैर्मुनिभिश्च तदिच्छया ॥ ३८ ॥**

**विज्ञाय संभृतं [8]स्वोक्त्या [9]तादात्म्यं समुपागतम् ।**

[**तत्**] [10]तच्चैवं ज्ञानं [**ईशानैः**] मन्त्रेश्वरैः [11]**गणैः देवैः मुनिभिश्च विज्ञाय [तदिच्छया]** शिवेच्छयैव [**स्वोक्त्या**] स्ववाचा **संभृतं** संप्रणीतं सत् क्रमेण [**तादात्म्यं समुपागतम्**] [12]मान्त्रेश्वरं [13]गाणेश्वरं दिव्यमार्षं च [14]संज्ञया संपन्नम् ॥ ३८ ॥

[**गौह्यकम्**]

गौह्यकं व्याचष्टे—

**गुह्यका भुजगा यक्षा दानवाश्च शिवेरिताः ॥ ३९ ॥**

**यदूचुरुपसंहृत्य तत्स्रोतो गौह्यकं स्मृतम् ।**

**गुह्यकाख्यया भुजगयक्षदानवा** उच्यन्ते। [**शिवेरिताः यदूचुरुपसंहृत्य**] तैः शिवभट्टारकप्रेरितैः [15]यत्संक्षिप्योक्तं **तद् गौह्यकं स्रोतः** ॥

[1] B omet एकैकस्मिन्

[2] B : एतद् pour एतानि च

[3] B : तद् pour तावद्

[4] B : निर्वाण pour निर्माण

[5] B : प्राथम्य pour प्राथम्ये

[6] C omet मात्र

[7] E omet अति

[8] A : सोक्त्या

[9] A et B : तदात्म्या समुपागतम्

[10] E : तच्छैवं pour तच्चैवं

[11] C : देवैः गणैश्च pour गणैः देवैः

[12] E : मन्त्रेश्वरं pour मान्त्रेश्वरं

[13] B : गणेश्वरं pour गाणेश्वरं

[14] C : संज्ञा संपन्नम्

[15] C : मध्यात् pour यत्

[ योगिनीकौलम् ]

योगिनी[1]कौलमाह—

[2]योगिन्यो लेभिरे ज्ञानं सद्यो [3]योगावभासकम् ॥ ४० ॥
येन तद्योगिनीकौलं नोत्तीर्णं [4]ताभ्य एव तत् ।

**सद्यः** तत्क्षणमेव [**योगावभासकं**] योगमवभासयति[5] [6]यत्तथाविधं **ज्ञानं** शिवभट्टारकाद् **योगिन्यः** [**लेभिरे**] प्रापुः । तच्च **ताभ्य एव** सकाशाद् **नोत्तीर्णं** [7]नान्यत्र प्रसृतम् आस्वेव[8] संप्रदायतया स्थितमित्यर्थः ॥

[ सिद्धकौलम् ]

अथ सिद्धकौलाख्यमुच्यते—

[9]तथान्यदपि संहारो यो मिश्रो मिश्र एव सः ॥ ४१ ॥

[10]यद् **अन्यत्** सिद्धकौलाख्यं ज्ञानं तत् **तथा** इति [11]योगिनीकौलवत् । यथा न तद् योगिनीभ्य उत्तीर्णं तथेदं सिद्धेभ्यस्तेष्वेव पारंपर्येण स्थितमिति यावत् । [**यः**] यस्तु [**मिश्रः**] व्यामिश्रः **संहारः** संग्रहो यथा मान्त्रेश्वरमपि मुनिभिः आर्षं वा गुह्यकैः संक्षिप्योक्तं **स मिश्र एव** संक्षेपः[12] एतत्संज्ञया युक्तो ज्ञेयः ॥ ४१ ॥

ये चैतेऽनुस्रोतोभेदाः—

वादिभेदप्रभिन्नत्वात्तेषां संख्या न विद्यते ।

वक्तृभेदभिन्नानि असंख्यान्येवैतानि ॥

अथोर्ध्वस्रोतसि दशाष्टादशभेद[13]भिन्नतामाह—

शैवा रौद्रा महाभेदा दशाष्टादश चोर्ध्वके[14] ॥ ४२ ॥
रौद्रा रुद्रैः शिवाविष्टैरुदीर्णा [15]न स्वबुद्धितः ।

[1] C : कौलकम् pour कौलम्
[2] A : योगिनो pour योगिन्यो
[3] A : योगावतंसकम् ; B : योग्यावभासकम्
[4] A : भुवनेषु तत् pour ताभ्य एव तत्
[5] B : अवभासयेत्तथा pour अवभासयति
[6] B : तत्तथाविधं ; E : यत्तत्तथाविधं
[7] B : तान्यत्र pour नान्यत्र
[8] B et C : अस्यैव pour आस्वेव
[9] A : तदा pour तथा ; B : अथ pour तथा
[10] E : यदि pour यद्
[11] Le passage योगिनीकौलवत् à स्थितमिति यावत् manque en ms. C.
[12] E : संक्षेपेण pour संक्षेपः
[13] B : भिन्नमाह pour भिन्नतामाह
[14] A : ऊर्ध्वतः pour ऊर्ध्वके
[15] A : न स्वशुद्धिदः pour न स्वबुद्धितः

**शैवाः** कामिकादयो वक्ष्यमाणा **दश** भेदाः । **रौद्रा** विजयादयोऽ**ष्टादश** । एते [**ऊर्ध्वके**] ऊर्ध्वस्रोतसि [**महाभेदाः**] भेदाः । तत्र शैवाः शिवभट्टारकेण [1]उपदिष्टाः । **रौद्रास्तु** [**शिवाविष्टैः**] शिवाधिष्ठितैः [2]**रुद्रैः** [**उद्गीर्णाः**] । [**न स्वबुद्धितः**] न स्वमनीषिकया ॥

[ **अष्टाविंशतिः शैवागमाः** ]

तानेव भेदान्पठति—

शैवानां कामिकं पूर्वं योगोद्भवमचिन्त्यकम् ॥ ४३ ॥
[3]कारणं ज्ञानमजितं दीप्ताख्यं सूक्ष्मकं परम् ।
साहस्रमंशुमत्संज्ञं [4]सुप्रभिद्दशमं विदुः ॥ ४४ ॥
रौद्राणां विजयं पूर्वं निःश्वासं पारमेश्वरम् ।
स्वायंभुवं तथाग्नेयं वीरभद्रं च रौरवम्[5] ॥ ४५ ॥
[6]मकुटं विमलाख्यं च [7]चन्द्रज्ञानाख्यमेव च ।
मुखबिम्बकमुद्गीतं ललितं सिद्धसंज्ञकम् ॥ ४६ ॥
[8]सन्तानं चैव शर्वोक्तं [9]किरणं वातुलं परम् ।

स्पष्टम् ॥

[ **व्याख्यानारम्भविधिः** ]

तदारभ्य चिरं नाति व्याकुर्यात्प्रथमेऽहनि ॥ ४७ ॥
[10]प्रारम्भेऽपि न संप्रश्नप्रतिप्रश्नातिमात्रकम्[11] ।
[12]त्रीणि मूलानि सूत्राणि द्वे तथैकमथापि वा ॥ ४८ ॥

1 E : उद्दिष्टाः pour उपदिष्टाः
2 C : रौद्रैः
3 B : कारणज्ञानम् pour कारणं ज्ञानम्
4 A : सुप्रभं दशमं pour सुप्रभिद्दशमं ; C : सुप्रदं दशमं
5 A : सुरौरवम् pour च रौरवम् ; C : सरौरवम्
6 A et C : माकुटं pour मकुटं
7 A et C : चन्द्रहासाख्यमेव च
8 A : सन्तानं शर्व एवोक्तं ; B et C : सन्तानं नारसिंह्मं च
9 B : परे किरणवातुले
10 B : प्रारम्भोऽपि
11 B : मात्रतः pour मात्रकम्
12 En ms. C les demi-*śloka* 48b et 49a se trouvent après कीदृशस्तर्हि प्रारम्भः स्यादित्याह ; cf. page 223 note 3.

**विधायोपरमेदूर्ध्वं वदन्विघ्नैर्विरुद्ध्यते ।**

**[तदारभ्य]** तत् शैवं रौद्रं वा तन्त्रमारभ्य **नातिचिरं प्रथमेऽहनि** प्रथमेऽह्नि **[व्याकुर्याद्]** व्याचक्षीत । **नापि** शिष्यः [1]**प्रारम्भे [संप्रश्नप्रतिप्रश्नातिमात्रकं]** संप्रश्नप्रतिप्रश्नैरतिमात्रं प्रारम्भं [2]कलुषीकुर्यादित्यध्याहारः । [3]कीदृशस्तर्हि प्रारम्भः स्यादित्याह—[4]**त्रीणी**ति, वक्ष्यमाणलक्षणानि [5]**मूलानि सूत्राणि** [6]मूलसूत्राणि [7]**त्रीणि [तथा द्वे]** [8]यद्वा द्वे सूत्रे, **[अथापि वा एकम्]** यद्वा [9]एकमेव सूत्रम् । **विधाय** इति [10]व्याख्याय **[उपरमेद्]** विरमेत् । **[ऊर्ध्वं वदन् विघ्नैः विरुद्ध्यते]** तदधिकं व्याकुर्वन्तं हि विघ्ना रुन्धन्तीत्यर्थः ॥ ४७ - ४८ ॥

**[ मूलसूत्रलक्षणम् ]**

त्रीणि मूलानि [11]सूत्राणीत्युक्तम् । तानि दर्शयति—

**यत्र बीज इवारूढो महातन्त्रार्थपादपः ॥ ४९ ॥**
**आभाति मूलसूत्रं तदथशब्दाद्यलंकृतम् ।**

**[यत्र]** यस्मिन्सूत्रे **[महातन्त्रार्थपादपः बीज इव]** सकलतन्त्रार्थो बीज इव महावृक्ष **आरूढः आभाति** शक्त्यात्मनावस्थितः प्रतिभाति **[तद् अथशब्दाद्यलंकृतं]** तदथ[12]शब्दशिवसिद्धादि[13]मङ्गल्य-शब्दालंकृतं [14]**मूलसूत्रं** [15]मूलं सूत्रं ज्ञेयम् । यथा—' अथानादिमलापेत[16] ' इत्यादि ।

**तस्योद्देशकमन्यत्स्यात्संख्यासंज्ञादिवाचकम् ॥ ५० ॥**
**तल्लक्षणं स्वरूपोक्तिस्तदन्यो भाष्यसंग्रहः ।**

**तस्य** मूलसूत्रोपक्षिप्तस्य तन्त्रार्थस्य **[उद्देशकम्]** उद्देशः **[अन्यद्]** [17]द्वितीयमूलसूत्रम् **[स्यात्]**

[1] C et E : omettent प्रारम्भे
[2] C : कलुषंकर pour कलुषीकुर्याद्
[3] En ms. C les demi-*śloka* 48b et 49a se trouvent ici ; cf. p. 222, note 12.
[4] C omet त्रीणीति
[5] B omet मूलानि सूत्राणि
[6] C omet मूलसूत्राणि
[7] B omet त्रीणि
[8] C : द्वे वा pour यद्वा द्वे सूत्रे
[9] C : एकसूत्रमेव pour एकमेव सूत्रम्
[10] C : व्याख्यां निष्पाद्य pour व्याख्याय
[11] C omet सूत्राणि
[12] C : स्वशब्द pour शब्द
[13] C : तुल्य pour मङ्गल्य ; E : मङ्गल
[14] B et E : omettent मूलसूत्रं
[15] C omet मूलं सूत्रं
[16] cf. *Mṛgendrāgama, Vidyāpāda, Paramokṣanirāsaprakaraṇa, śloka* 1 (p. 55 édition de Devakôṭṭai).
[17] C : द्वितीयं मूलम् pour द्वितीयमूलसूत्रम्

यत् **संख्यासंज्ञादिवाचकं** संख्यासंज्ञादिकं वक्ति । यथैहैव—

[1]" त्रिपदार्थं चतुष्पादं महातन्त्रं जगत्पतिः ।
सूत्रेणैकेन [2]संगृह्य प्राह विस्तरशः पुनः ॥" इति ।

तृतीयमपि मूलसूत्रत्वेन ज्ञेयम्[3] । यत्र **तल्लक्षणं स्वरूपोक्तिश्चास्ति** । यथा—

[4]" जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः ।" इति ।

अत्र हि शिवः पाशजालमपोहतीति मूलसूत्रोपक्षिप्तमपोहनं लक्ष्यते । पञ्चविधकृत्यात्मकमपोहनस्वरूपमुक्तम् । [**तदन्यः**] ततस्त्वन्यानि यानि सूत्राणि [5]तद्व्याख्यानाय प्रवृत्तत्वाद् [**भाष्यसंग्रहः**] भाष्यसंग्रहत्वेन ज्ञेयानि । यद्वा **तल्लक्षणं स्वरूपोक्तिरिति**, तैर्मूलसूत्रोद्देशसूत्रादिभिः सूत्रै[6]र्यदभिधेयस्य लक्षणं सा स्वरूपोक्तिर्ज्ञेया । मूलसूत्रद्वयप्रमुखसूत्रसंग्रहस्वरूपाख्यया बोद्धव्य इत्यर्थः । **तदन्यस्तु** [7]तद्व्यक्तिभेदग्रन्थो **भाष्यसंग्रह** इति मन्तव्यः । अस्मिंश्च पक्षे स्वरूपग्रन्थस्य सर्वस्यैव[8] मूलसूत्रत्वम् । तेन च " [9]त्रीणि मूलानि सूत्राणि द्वे तथैकमथापि वा । विधायोपरमेद्" [10]इत्यविरुद्धम् ॥

## [ व्याख्याने फलम् ]

**ब्रूते य एवं योऽधीते तावुभौ हतकल्मषौ ॥ ५१ ॥**
**लोके प्राप्य यशो दीप्तं विशेतां धाम शांकरम् ।**

[**एवम्** ] इत्युक्तक्रमेण[11] यो **ब्रूते** व्याकुरुते । [**यः**] यश्च **अधीते** शृणोति **तौ** [**उभौ**] द्वावपि गुरुशिष्यौ [**हतकल्मषौ**] निरस्तपापौ [**लोके**] जगति [**दीप्तं**] शुभ्रं **यशः प्राप्य** उत्तरकालं [**शांकरं धाम**] परमेश्वरतेजो [12]**विशेतां** तत्सायुज्यं गच्छेताम् ॥

## [ अनध्याये व्याख्याने दोषः ]

अन्यथा तु—

**अनध्याये स्वतन्त्रोक्तविधिना शृण्वते मृषा ॥ ५२ ॥**

[1] cf. *Mṛgendrāgama, Vidyāpāda, Paramokṣanirāsaprakaraṇa, śloka* 2 (p. 60, édition de Devakoṭṭai).

[2] C et E : संहृत्य pour संगृह्य

[3] C :मूलसूत्रत्वेन विज्ञेयम् ; E : मूलं सूत्रत्वेन ज्ञेयम्

[4] cf. *Mṛgendrāgama, Vidyāpāda, Paramokṣanirāsaprakaraṇa, śloka* 3 (p. 61, édition de Devakoṭṭai)

[5] B : तत्तद् pour तद्

[6] C : सूत्राणि तैः pour सूत्रादिभिः सूत्रैः

[7] B : तद्वर्ति pour तद्व्यक्ति

[8] C : एवं pour एव

[9] cf. plus haut *śloka* 48b et 49a

[10] B : इत्यविरुद्धः

[11] C : उक्तेन प्रकारेण pour उक्तक्रमेण

[12] C : विशेषतां pour विशेतां

शैवं वदन्निहाल्पायुर्मृतः[1] प्रेतत्वमश्नुते ।

**स्वतन्त्रोक्तविधिना** [**अनध्याये**] ये अनध्यायास्तेषु [**शृण्वते**] यः शृणोति तस्य [**मृषा**] व्यर्थं तच्छ्रुतम् । अथ तथाविधं **मृषा** व्यर्थं **शृण्वते शैवं** शास्त्रं [**वदन्**] कथयन् **इह** लोके तावद् **अल्पायुः** भवति । **मृतः** जीविताटूर्ध्वं [**प्रेतत्वं**] प्रेतभावमाज्ञाविलङ्घनतः क्रव्यादयोनिम् [**अश्नुते**] प्राप्नोति ॥

[ **अनध्यायाः** ]

अथ के ते अनध्याया यद्विलङ्घनादीदृक्फलावाप्तिरित्यत आह—

नाध्यापयेच्चतुर्दश्यामष्टम्यां पक्षयोर्द्वयोः ॥ ५३ ॥

प्रतिपत्पञ्चदश्योश्च [2]चतुर्थ्यामर्कसंक्रमे ।

**अर्कसंक्रमः** संक्रान्तिदिवसः । स्पष्टमन्यत् ॥

[3]निर्घातोल्कामहीकम्पपश्चाच्चापेषु वासरः ॥ ५४ ॥

संध्यास्तनितदिग्दाहपरिवेषोपलेषु च[4] ।

[**निर्घातोल्का-महीकम्प-पश्चाच्चापेषु**] **निर्घातः** [5]आन्तरिक्षः शब्दः । **उल्का** दण्डाकारतेजोरूपा । **महीकम्पः** भूमिकम्पः । **पश्चाच्चापः** वारुण्यां दिशीन्द्रधनुः । एतेषु [**वासरः**] एकवासरोऽनध्यायः । [**संध्यास्तनित-दिग्दाह-परिवेषोपलेषु च**] संध्ययोर्मेघगर्जितश्रुतौ, **दिग्दाहे**, सूर्य**परिवेष**दर्शने, अन्तरिक्षाद् **उपल**वर्षे **च**शब्दादेकाहमेव ॥

[6]नीहारप्राग्धनुर्व्योमपुरेष्वेतेषु दर्शनात्[7] ॥ ५५ ॥

[**नीहार-प्राग्धनु-व्योमपुरेषु**] **नीहारे** [8]हिमाख्यया प्रसिद्धे । **प्राग्धनुषि** [9]च पूर्वदिक्स्थेन्द्रधनुर्दर्शने[10] । [11]**व्योमपुरे** गन्धर्वनगरे च दृष्टे [**एतेषु दर्शनात्**] तद्दर्शनं यावदनध्यायः कार्यः ॥ ५५ ॥

[1] B : मृत pour मृतः

[2] A : चतुर्णाम् pour चतुर्थ्याम्

[3] A : निर्वात pour निर्घात

[4] En ms. C le demi-*śloka* 55b se trouve ici ; cf. note 6.

[5] B : अन्तरिक्षः pour आन्तरिक्षः

[6] Ce demi-*śloka* se trouve après le demi-*śloka* 55a ; cf. note 4.

[7] B : एतद्दर्शनात् pour एतेषु दर्शनात्

[8] B : हिमाकारव्याख्यया pour हिमाख्यया ; E : हिमिकाख्यया

[9] C omet च

[10] C ajoute अप्येवम्

[11] C : खपुरे pour व्योमपुरे

[1]कीलके च रवीन्दुस्थे त्र्यहं स्वर्भानुदर्शने[2] ।

[**रवीन्दुस्थे कीलके**] चन्द्रार्कबिम्बस्थकीलकाख्युत्पातदर्शने [**स्वर्भानुदर्शने**] राहुदृष्टौ **च** **त्र्यहम्** अनध्यायः ॥

[3]पञ्चरात्रं हरिमखे[4] पवित्रे च [5]मखद्विषः ॥ ५६ ॥

[6][**हरिमखे**] इन्द्रोत्सवे हरिप्रबोधादौ वा [**मखद्विषः पवित्रे च**] परमेश्वरपवित्रारोहणे [**पञ्चरात्रं**] पञ्चाहम् ॥ ५६ ॥

बिडालव्यालभेकेषु गतेष्वन्तरतो दिनम्[7] ।

[**बिडाल-व्याल-भेकेषु**] मार्जारसर्पमण्डूकेषु [**अन्तरतो**] व्याख्यातृश्रोतृमध्ये **गतेषु** [**दिनम्**] एकाहम् ॥

[8]त्र्यहं त्रिफणिनि व्याले दृष्टे द्विफणिनि द्व्यहम्[9] ॥ ५७ ॥

[10]**त्रिफणिनि व्याले** सर्पे **दृष्टे त्र्यहम्** । **द्विफणिनि** तु **द्व्यहम्** [11]अनध्यायः ॥ ५७ ॥

अन्तः शवश्रुतौ दाहे शवगन्धे [12]खरानिले ।
तद्विरामं [13]विना ख्यातजन्तुमृत्यौ[14] च वासरम् ॥ ५८ ॥

[**अन्तः**] व्याख्यानकालमध्ये [**शवश्रुतौ**] शव[15]पटहरोदनादिश्रुतौ [**दाहे**] गृहदाहादिश्रवणे [**शवगन्धे**] शवनिकटधूमाघ्राणे [**खरानिले**] परुषतरे[16] वायौ च [17]वहति **तद्विरामं विना** व्याख्यानं [18]न कुर्यात् । [**ख्यातजन्तुमृत्यौ**] प्रख्याते[19] कस्मिंश्चिज्जन्तौ मृते [**वासरम्**] नैकाहं व्याचक्षीत ॥ ५८ ॥

[1] A : कीलके रविमध्ये च ; E : कीलके च रवीन्दुस्थे
[2] En ms. C le demi-*śloka* 56b se trouve ici ; cf. note 3.
[3] cf. note 2
[4] C : हरिमुखे
[5] A et C : मदद्विषः
[6] C ajoute हरिमुख इति
[7] En ms. C le demi-*ślokā* 57b se trouve ici ; cf. note 8.
[8] cf. note 7
[9] C : किं तु व्याले त्रिफणिनि त्र्यहं द्विफणिदर्शने
[10] C : सर्पे त्रिफणिनि त्र्यहम् । द्विफणे तु द्व्यहमनध्यायः ॥
[11] B omet अनध्यायः
[12] A : खरेऽनिले
[13] B et C : विनाख्यातं pour विना ख्यात
[14] C : जानुमृत्यौ pour जन्तुमृत्यौ
[15] C : संदाह pour पटह
[16] B : परुषतरौ ; C : परुषतरो
[17] B et E : भवति pour वहति
[18] C et E omettent न
[19] C ajoute च

[1]गुरौ मासं शिवीभूते भ्रातृशिष्यादिके त्र्यहम् ।
[2]शैवे राजनि सप्ताहं त्रिरात्रं [3]पशुधर्मिणि[4] ॥ ५९ ॥

**गुरौ शिवीभूते मासम्** अनध्यायः । [**भ्रातृ-शिष्यादिके**] भ्रातरि शिष्ये च शिवीभूते **त्र्यहम्** । [**सप्ताहं**] सप्तरात्रं **शैवे** [**राजनि**] राज्ञि । **पशुधर्मिणि** राजन्युपरते **त्रिरात्रं** व्याख्यानिषेधः ॥ ५९ ॥

[5]स्वकल्पान्वयसिद्धेषु[6] तथान्येष्वपि देशिकः ।

अथ **अन्येष्वपि** [**स्वकल्पान्वयसिद्धेषु**] स्वकल्पोपायेन स्वशास्त्रसाधारण्येनान्विष्टेषु[7] शिवीभूतेषु [**देशिकः**] आचार्यः [**तथा**] त्र्यहमनध्यायं कुर्यात् ॥

[ व्याख्यानविधिः ]

व्याचक्षाणस्तु—

प्राग्व्याख्यान[8]परामर्शसमाधानेष्टिकृद्भवेत् ॥ ६० ॥

[9]पूर्वव्याख्याने प्रत्यहं विमर्शनात् तद्विरुद्धं यत्किंचित्स्यात्तत्समादध्यात । क्वचिच्च प्रस्तुत-[10]व्याख्यावसरागतपाश्चात्यविसंवादे इत्थं [11]तत्रेष्टव्यमिति [12]पूर्वव्याख्याने[13] इष्टिम्[14] अतिव्याप्त्यव्याप्ति[15]-परिहारं वदेत् ॥ ६० ॥

समयी पुत्रको वापि ज्ञात्वा किंचिदपूर्वकम् ।
निवेदयेदनुज्ञातो गुरवे पीठवर्तिने ॥ ६१ ॥

गुरुगृहनिवासिना समयिना पुत्रकेण च [ **किंचिदपूर्वकं** ] किमप्यपूर्वं वस्तु **ज्ञात्वा** [16]तदनु-

---

[1] B : गुरोर्मासं
[2] B : शैवराजनि
[3] A : पशुधर्मिणाम्
[4] En ms. C le demi-*śloka* 60a se trouve ici : cf. note 5.
[5] cf. note 4
[6] C : सिद्धेऽष्टौ pour सिद्धेषु
[7] C : सिद्धेषु pour अन्विष्टेषु
[8] B : व्याख्यात pour व्याख्यान
[9] C et E : पूर्वव्याख्यानप्रत्यवमर्शनात्
[10] C : व्याख्यानपरागत pour व्याख्यावसरागत
[11] B : तत्रेष्टव्यमिति
[12] B : पूर्वव्याख्याते pour पूर्वव्याख्याने
[13] C ajoute अपि
[14] C : इष्टम् pour इष्टिम्
[15] C : अध्यस्तव्याप्ति pour अतिव्याप्त्यव्याप्ति
[16] B : तदनुज्ञातः pour तदनुज्ञातेन

ज्ञातेन [**गुरवे पीठवर्तिने**] पीठस्थगुरवे[1] निवेदनीयम्[2]। गृहीताचार्याभिषेकैः किमप्यपूर्वमन्यतोऽधिगतं पुत्रकसमयिनोर्दत्तानुज्ञयोः सकाशात् पीठस्थेन गुरुणावगन्तव्यम् ॥ ६१ ॥

यद्वा—

[3]**शृणुयात्स्वाभिषिक्ताद्वा [4]योगपीठेष्टशंकरः ।**

**बहिः स्थितो[5] बहिःसंस्थात्परसिक्तादपीठगात् ॥ ६२ ॥**

[**स्वाभिषिक्तात्**] स्वयमभिषिक्ताचार्याद् **योगपीठे** श्रीमत्**किरणा**दावाम्नातलक्षणे विशिष्टे देवगुरुशास्त्रपूजाधारे [**इष्टशंकरः शृणुयात्**] पूजितपरमेश्वरेणाधिगन्तव्यम्। यदि तु **बहिः स्थितः** देशान्तरेष्वटन्ग्रन्थानधिगन्तुमिच्छेत् तदा [6]**बहिःसंस्थात्** [7]बहिःस्थितात् **परसिक्ताद्**[8] अन्याभिषिक्ताद्[9] **अपीठगाद्**[10] अपीठस्थादप्यधिगन्तव्यम्[11] ॥ ६२ ॥

[ **आचार्यनियमाः** ]

[12]**न यायादनुपानत्कः क्वचिन्नाप्यसहायवान् ।**

**नातिप्राङ्नातिवेलायां न रात्रौ न खरातपे ॥ ६३ ॥**

उपानद्ग्रहणं पादुकाद्युपलक्षणम्। [**अनुपानत्कः**] नग्नपादः [**असहायवान्**] एकाकी [ **नातिप्राक्** ] अप्रभाते [**अतिवेलायां**] सायं [**रात्रौ**] निशायां [**खरातपे**] तीव्रातपे वा न गुरुर्गच्छेत् ॥ ६३ ॥

**न नीचैः संवसेन्नापि वृथा यायाद्गृहाद्गृहम् ।**

**तथा [13]नोपहसेत्कंचिन्नानुकुर्यान्न पीडयेत् ॥ ६४ ॥**

[ **न नीचैः संवसेत्** ] न निकृष्टैर्जनैः सहवासं [14]कुर्यात्। **वृथा** [**गृहाद्गृहमपि**]

[1] C : पीठस्थाय गुरवे

[2] En ms. C le *śloka* 62 se trouve après निवेदनीयम् ; cf. note 3.

[3] cf. note 2

[4] A : योगपीठेषु शंकरः

[5] C : बहिःस्थिते

[6] C omet बहिःसंस्थात्

[7] B omet बहिः स्थितात्

[8] C omet परसिक्ताद्

[9] C : अन्यस्मादभिषिक्ताद् ; E : अन्यस्मात्परादभिषिक्तात्

[10] C omet अपीठगाद्

[11] C et E : अधीयीत pour अधिगन्तव्यम्

[12] En ms. B le *śloka* 63 et son commentaire manquent.

[13] A : नापहसेत् pour नोपहसेत् ; E : नापहसेत्

[14] C et E omettent कुर्यात्

[1]गृहाद्गृहान्तरं च [ न यायात् ] न पर्यटेत् । [कंचिद् नोपहसेद् नानुकुर्यात् ] न च कस्याप्युपहास[2]मनुकरणं च कुर्यात् । [न कंचित् पीडयेद् ] न च कंचिन्मर्मोद्घाटनदेहताडनधनापहरणैर्हिंस्यात् ॥ ६४ ॥

नासदाचरितं किंचिदाचरेत्स गुरुर्यतः ।
तदापन्नममान्यत्वं मन्त्रादिषु [3]न वार्यते ॥ ६५ ॥

[असदाचरितम् ] असद्भिराचरितं न किंचिदाचरेत् । [यतः स गुरुः] यस्मात्सर्वेषु साधकपुत्रकसमयिष्वस्यैव गरीयस्त्वम् । [तदापन्नम् अमान्यत्वं] [4]आचार्येऽपूज्यत्वमापाद्यमानं [मन्त्रादिषु न वार्यते] तत्साधकादिषु[5] दुर्निवारम् । [6]तदनुगृहीतानामप्येषां [7]तत्तत्पदावाप्तेः ॥ ६५ ॥

[ पुत्रकसमयिनोराचारः ]

इत्थमाचार्यस्य[8] चर्यामभिधाय पुत्रकसमयिनोर्वक्तुमाह—

पुत्रकः प्रातरुत्थाय समयी च कृताह्निकः ।
कृतप्रणामोऽनुज्ञातो गुरुणा कृत्यमाचरेत् ॥ ६६ ॥

पुत्रकः समयी च [प्रातः] ब्राह्मे मुहूर्ते उत्थाय कृताह्निकः [9]कृतप्रणामो [गुरुणा अनुज्ञातः] गुर्वनुज्ञातः [कृत्यं] करणीयम् [आचरेत् ] कुर्यात् ॥ ६६ ॥

[ शास्त्रश्रवणविधिः ]

किं तत् करणीयमित्याह—

अधीत्य शृणुयाच्छास्त्रं गुरुतन्त्रो गुरौ वसन् ।
[10]त्यक्त्वाभिमानमात्सर्यडम्भव्यसनसंततिम्[11] ॥ ६७ ॥

समयिना पुत्रकेण [शास्त्रम् अधीत्य] शास्त्रपाठानन्तरं[12] [गुरौ वसन् गुरुतन्त्रः] गुरुगृहाधिवासिना तत्पारतन्त्र्येण च [अभिमान-मात्सर्य-डम्भ-व्यसनसन्ततिं] अभिमानम् अहंकारं

[1] E : गृहाद्गृहान्तराटनं च परिहरेत्
[2] B et E : अपहासम् pour उपहासम्
[3] C : निवार्यते pour न वार्यते
[4] C : अस्य चापूज्यत्वमापद्यते pour आचार्येऽपूज्यत्वमापाद्यमानं ; E : आचरंस्त्वपूज्यत्वमापद्यते
[5] B omet षु
[6] C : एतद् pour तद्
[7] B et E : तत्पदाप्तेः pour तत्तत्पदावाप्तेः
[8] B omet स्य
[9] C : प्राणायामो pour प्रणामो
[10] A : त्यक्त pour त्यक्त्वा
[11] A : सन्ततिः pour सन्ततिम्
[12] C et E : शास्त्रपाठादनन्तरं

**मात्सर्यं** द्वेषं **डम्भं** कृत्रिमं **व्यसनसंततिं** क्लेशहेलापरम्परां[1] **त्यक्त्वा**[2] विहाय [**शृणुयात्**] तच्छ्रवणं कार्यम् ॥ ६७ ॥

[ गुरुसन्निधौ वर्ज्यानि ]

कण्ठ[3]प्रावृतिनिष्ठीवकासहासादि [4]संनिधौ ।
गुरोर्न कुर्यान्नो [5]वादं कैश्चिन्नोत्कृष्टवेषवान्[6] ॥ ६८ ॥
उद्वर्तनाङ्गसंस्कारजृम्भणासनासंस्थिती[7] ।
[8]समानालापपर्यङ्कबन्धध्यानार्चनादिकम्[9] ॥ ६९ ॥

उत्तरीयैः कण्ठवेष्टनं[10] **कण्ठप्रावृतिः** । **निष्ठीवो** मुखपानीयनिरसनम् । **कासहासौ** प्रसिद्धौ । **आदि**ग्रहणाद् अश्लीलभाषण[11]क्रीडादि **गुरोः संनिधौ न कुर्यात्** । [**कैश्चिद् नो वादं कुर्यात्**] न च केनचित्सह विवदेत् । **न** च संनिहिते [12]गुरौ [**उत्कृष्टवेषवान्**] उत्कृष्टवेषः स्यात् । उद्वर्तनादिकं न कुर्यादित्यभिसम्बध्यते । [13]तत्र **उद्वर्तनं** प्रसिद्धम् । **अङ्गसंस्कारः** स्नानोद्वपनसमालम्भनादि । **जृम्भणं** विदारितास्यगात्रविनमनम् । **आसनसंस्थितिः** आसनेऽवस्थानम् । **समानालापः** साम्येनापिहितवक्त्रस्यानम्रस्य संकथनम् । [14]एतच्च **पर्यङ्कबन्धध्यानादि** [15]च न कुर्यात् । **आदि**ग्रहणाद् अन्यस्याप्यविनयस्य लोकप्रसिद्धस्य निषेधः ॥ ६८ - ६९ ॥

[ गुरौ वर्तनम् ]

न भुञ्जानं समाधिस्थं [16]चङ्क्रमन्तं क्रियोद्यतम् ।
स्थितं [17]गुरुसमीपे वा मतिमान्नाभिवादयेत्[18] ॥ ७० ॥

[**भुञ्जानं समाधिस्थं चङ्क्रमन्तं**] भोजनसमाधानचंक्रमणव्यग्रमाचार्यं [**क्रियोद्यतं**] कार्येष्वा-

[1] B : परस्परां pour परम्परां
[2] E ajoute तद
[3] A : प्रावृत्ति pour प्रावृति
[4] C : संनिधेः pour संनिधौ
[5] A : वादः pour वादं
[6] A : वेष्ट्यत् pour वेषवान्
[7] A : संस्थितिः pour संस्थिती:
[8] A : सममालाप pour समानालाप
[9] A : आदिकं pour आदिकम्
[10] B : वेष्टना pour वेष्टनं ; E : प्रवेष्टना
[11] C : पीडादि pour क्रीडादि
[12] C : गुरुपुरस्ताद् pour गुरौ
[13] B : तथा pour तत्र
[14] C : एतत् pour एतच्च
[15] C : न च pour च न
[16] A : निष्क्रामन्तं pour चङ्क्रमन्तं ; B : क्रमन्तं न
[17] A : गुरुं समीपे वा pour गुरुसमीपे वा
[18] En mss. B et E le commentaire du *śloka* 70 manque.

सक्तं [गुरुसमीपे स्थितं] गुरुसंनिकर्षस्थं च [मतिमान्] प्राज्ञो नाभिवादयेत् ॥ ७० ॥

गच्छन्तं पृष्ठतो यायाद्विशन्तमनुसंविशेत् ।
तद्वचो नानुयुञ्जीत शयानं न प्रबोधयेत् ॥ ७१ ॥
अनुज्ञातश्चरेद्भैक्षं प्राप्तमद्यान्निवेदितम् ।
शयीत सुप्त इत्यादि कुर्याद्विध्युदितं च यत् ॥ ७२ ॥

[गच्छन्तं] व्रजन्तं गुरुम् [पृष्ठतो यायाद्] अनुव्रजेत् । विशन्तम् [अनुसंविशेद्] अनुप्रविशेत् । [तद्वचो नानुयुञ्जीत] तदाज्ञापर्यनुयोगं [1]न कुर्यात् । न चैनं[2] [शयानं] सुप्तं प्रबोधयेत् । [अनुज्ञातः] तदाज्ञया भैक्षं चरेत् । [प्राप्तम्] आहृत्य [निवेदितं] तस्मै निवेद्य तदाज्ञयैव अद्यात् । तस्मिंश्च सुप्ते [शयीत] सुप्यात् । [यच्च] इत्येवमाद्यन्यदपि [विध्युदितं] सामान्यशास्त्रविहितं[3] करणीयं [कुर्याद्] अनुतिष्ठेत् ॥७१ - ७२ ॥

[ पुत्रकसमयिनोर्विशेषाचाराः ]

इत्थं समयिनः पुत्रकस्य च साधारणचर्योपदेशः [4]कृतः । इयांस्तु विशेषः । यदुत—

कामं चरेदनुज्ञातः पुत्रको धाम्नि वा वसेत् ।
समयी प्राग्गृहस्थश्च [5]यत्नेनोपचरेद्गुरुम् ॥ ७३ ॥

[पुत्रको धाम्नि वसेद्, अनुज्ञातः कामं चरेद्वा] पुत्रकस्य गुरुगृहनिवसनं तदाज्ञया देशान्तराटनमिति कामचारः । [समयी प्राग्गृहस्थश्च यत्नेन गुरुम् उपचरेत्] समयिनः प्रागुक्तस्य[6] प्राग्गृहस्थस्य [7]च यत्नतो गुरुपरिचर्याद्यभिज्ञा[8] ॥ ७३ ॥

कुत इत्याह—

साध्यकोटेरलब्धत्वात्तल्लाभोऽपि तदाश्रयः ।
[9]न चान्यवृत्तिनिष्ठस्य तस्मात्तत्साधको भवेत् ॥ ७४ ॥

[साध्यकोटेः] साध्यस्याभि[10]प्रेतस्य कोटेः संपत्तेः अलब्धत्वात् [तल्लाभोऽपि तदाश्रयः]

[1] C : तत् pour न
[2] B : एवं pour एनं
[3] C : विहित pour विहितं
[4] B omet कृतः
[5] A et E : यत्नेनानेचरेद्गुरुम् ; B : यत्तेनानुचरेद्गुरुम्
[6] C ajoute च
[7] C omet च
[8] C : अभिज्ञानम् pour अभिज्ञा
[9] C : तदा pour न च
[10] C : अपि pour अभि

तल्लाभस्य च गुर्वाश्रयत्वात् समयिनः प्राग्गृहस्थस्य च गुरूपसदनमवश्यं कार्यम् । [1]यस्माद् **अन्यवृत्तिनिष्ठस्य** सतो [न च] न तल्लाभः । **तस्माद्** [**तत्साधको भवेत्**] आचार्यपरिचर्यासाधनपरौ स्याताम् ॥ ७४ ॥

[ **साधकाचाराः** ]

अथ साधकचर्या—

**साधको गुर्वनुज्ञातः पुण्यक्षेत्रं[2] समाश्रितः ।**
**साध्यवेषधरो मौनी हविष्यचरुशाकभुक् ॥ ७५ ॥**
**सहायवानप्रमत्तः फलमूलभुगेव वा ।**
**इष्ट्वा शिवं यजेत्साध्यं जपं कुर्यात्त्रिधोदितम्[3] ॥ ७६ ॥**
**हुत्वा दशांशं तद्यागकुम्भस्नातः शुभे दिने ।**
**क्षेत्रस्थः प्रारभेत्कर्म चरन्वा [4]सिद्धिसंश्रयम् ॥ ७७ ॥**

[5]वक्ष्यमाणवन्नियतक्षेत्रं परिगृह्य तिष्ठतो विविधसिद्धिक्षेत्रचारिणो वा साधकस्य साधारणी[6] चेयं चर्या । यद् [**गुर्वनुज्ञातः**] गुरोः प्राप्तानुज्ञः [**पुण्यक्षेत्रं समाश्रितः**] पवित्रस्थानस्थितः [**साध्यवेषधरः**] साध्यदेवता[7]विशेषवेषधारी [**मौनी**] संयतवाग् [**हविष्य-चरु-शाक-भुक्**] **हविष्येण** घृतक्षीरयवादिना[8] **चरुणा** वा मन्त्रितेन पायसेन **शाकेन** वा कृतवृत्तिः [**फलमूलभुगेव वा**] फलमूलाशी वा [ **सहायवान्** ] ससहायः [**अप्रमत्तः**] त्यक्तप्रमादः [**शिवम् इष्ट्वा**] शिवमभ्यर्च्य [**साध्यं यजेत्**] साध्यमन्त्रं[9] पूजा[10]प्रकरणोक्तवद्यजेत्[11] । जपं च—

"[12]क्षुद्रसिद्धौ जपः कार्यो भाष्योऽ[13]न्यश्रवणात्मकः ।
उपांशुर्मध्यसिद्ध्यादौ...."

इति श्रीमत्पराख्यादावुक्तत्वाद्वशीकरण[14]विद्वेषाद्यधमसिद्ध्यपेक्षया भाष्यरूपं [15]खड्गाञ्जनादिमध्यमसिद्ध्यानुगुण्येनोपांशुसंज्ञं चक्रवर्तित्वाद्युत्तमसिद्ध्यपेक्षया च मानसं कुर्यात् । यदि वा—

[1] C : सतश्च pour यस्माद् ; E : यत् तस्माद्
[2] A et C : देशं pour क्षेत्रं
[3] A : त्र्यधोदितम् pour त्रिधोदितम्
[4] B : सिद्ध pour सिद्धि
[5] C : वक्ष्यमाणनियतक्षेत्रं
[6] C : साधारणं
[7] C : वेषविशेष pour विशेषवेष ; E omet वेष
[8] C omet ना
[9] B : मन्त्र pour मन्त्रं
[10] B omet पूजा
[11] Pour le साध्यपूजाप्रकरण voir *Kriyāpāda, paṭala* 4.
[12] cf. plus haut p. 42.
[13] C : अनु pour अन्य
[14] B omet ण
[15] B : खंग pour खड्ग

" उत्तमाः शिवमन्त्राद्या मन्त्रेशाद्यास्तु मध्यमाः ।
गणाश्च रुद्रमन्त्राश्च भगिन्यो मातरस्तथा ॥
अधमाः कीर्तिता मन्त्राः" इति ।

तथा—

"[1]उत्तमान्मनसा[2] मन्त्रान्मध्यमानप्युपांशुना ।
अधमानपि मन्त्रांस्तु भाष्येणेह जपेद्बुधः ॥"

इति श्रीमत्**पौष्करो**क्तरीत्या साध्यमन्त्रस्यैव अधममध्यमोत्तमत्वेन भाष्योपांशुमानसभेदेन [**त्रिधोदितं जपं कुर्याद्**] त्रिप्रकारतया जपं विदध्यात् ।

"[3]मानसादिविभागेन जप्त्वान्ते सिद्ध्यपेक्षया ।"

इति साध्यमन्त्रार्चनप्रकरणेऽभिहितं यतः । [**दशांशं हुत्वा**] [4]जपाच्च दशांशेन होमं कृत्वा [**तद्यागकुम्भस्नातः**] तद्यागावभृतस्नातः [**शुभे दिने**] शुभेऽहनि [**क्षेत्रस्थः**] नियतक्षेत्रे [**सिद्धिसंश्रयं चरन्वा**] क्षेत्राणि वा [5]चरन् [**कर्म प्रारभेत्**] [6]कर्मारम्भं कुर्यात् ॥ ७५ - ७७ ॥

स चोभयरूपोऽपि—

**न [7]कंचिदनुगृह्णीयान्न [8]निषेवेत भर्त्सयेत् ।**
**नासीत चिरमन्यत्र विना क्षेत्रपरिग्रहात्[9] ॥ ७८ ॥**

भिक्षार्थं पर्यटन् भैक्ष्यलोभात् [**न कंचिदनुगृह्णीयाद्**] आशीर्वादपरो न भवेत् । [**न निषेवेत भर्त्सयेद्**] नापि प्रशंसापरो भवेद् भिक्षाया अलाभाद् गर्हयेद्वा । [**विना क्षेत्रपरिग्रहाद् अन्यत्र**] साध्यमन्त्रजपार्थं परिगृहीतपवित्रस्थानादन्यदेशे [**चिरं नासीत**] भिक्षां प्रतीक्षमाणो बहुकालं न चरेत् ॥ ७८ ॥

**माधूकरीं चरेद्भिक्षां [10]दिनार्धे सवने गते ।**
**सर्वमन्त्रमुखे पुण्ये परमेशाधिदैवते ॥ ७९ ॥**

[**सर्वमन्त्रमुखे**] सर्वेषां मन्त्राणां यन्मुखमिव मुखं संनिधिस्थानं तस्मिन् [**पुण्ये**] पावने [**पर-**

[1] cf. plus haut p. 42
[2] C : मानसान् pour मनसा
[3] cf. *Kriyāpāda, paṭala* 4, *śloka* 5a
[4] B : जपार्चन pour जपाच्च
[5] C omet चरन्
[6] C : अन्यकर्मारम्भं
[7] A et B : किंचिद् pour कंचिद्
[8] A : निषेवेन्न pour निषेवेत ; C : निषेधेन्न
[9] Le commentaire du *śloka* 78 manque en mss. B et C.
[10] A : दिनेऽर्धे pour दिनार्धे

**मेशाधिदैवते**] शिवदैवते [**दिनार्धे**] [1]माध्याह्निकाख्ये **सवने** [**गते**] निर्वर्तिते [2]**माधूकरीम्** [3]अनियतां **भिक्षां चरेत्** । [4]तथोक्तं श्रीमत्**पौष्करे**—

"गृहाद्गृहं पर्यटतो भैक्षं माधूकरं[5] स्मृतम् ।" इति ॥ ७९ ॥

**तदनिर्वर्त्य योऽश्नाति सवनं [6]सुरपूजितम् ।**
**[7]मन्त्रास्तं नाधितिष्ठन्ति योगपीठव्यवस्थिताः ॥ ८० ॥**

**तत्** [**सुरपूजितं**] सर्वामरार्चितं माध्यन्दिनं **सवनं**[8] तदानीं मन्त्रजपदेवतार्चनाग्निहवनादि [**अनिर्वर्त्य**] अविधाय **यो** [**अश्नाति**] भुङ्क्ते **तं** [**योगपीठव्यवस्थिता मन्त्राः**] योगपीठ आवाहित-मन्त्रा **नाधितिष्ठन्ति** नैनमीप्सितफलेन योजयन्तीति यावत् । योगपीठं नामार्चाधारः [9]संहितान्तरोक्त-लक्षणः । [10]तथा च श्रीमत्**पौष्करे**—

"पीठं तेषां तु मन्त्राणां कार्यं पद्माङ्कितोदरम् ।
श्रीपर्णिकादिदारूत्थं वृत्तं तु शुभलक्षणम् ॥" इति ॥ ८० ॥

**[11]भिक्षां तु चरतो भिक्षां नादद्यान्न विगर्हितात् ।**
**शैवात्स्वायंभुवादेश्च कुतश्चिल्लिङ्गिनोऽपि वा ॥ ८१ ॥**
**[12]मिष्टान्नप्रचुरां[13] भिक्षां नादद्यान्नातिसंस्कृताम् ।**
**[14]परिहासादिचतुरा यत्र नार्यस्ततोऽपि वा ॥ ८२ ॥**

**भिक्षां** [**भिक्षां चरतः**] [15]भिक्षाचराद् [**नादद्यात्** ] न गृह्णीयात् । **न च शैवाद्** [16]**विगर्हितात्** क्षुद्राचारात् । न च [**स्वायंभुवादेः**] [17]स्वयंभूपासनोपजीविनः । **आदि**[18]ग्रहणान्नान्यस्मादपि [19]लिङ्गोप-

[1] C : मध्याह्नाख्ये
[2] E : मधुकरीम्
[3] B : नियतां pour अनियतां
[4] C : यथोक्तं pour तथोक्तं
[5] E : माधूकरीं
[6] A : पुर pour सुर
[7] A : मन्त्रस्तन्नाथ तिष्ठन्ति
[8] C et E ajoutent कृत्वा
[9] C et E : संहितान्तरेणूक्तलक्षणः
[10] C : यथा च पौष्करे
[11] A : भिक्षामाचरतो pour भिक्षां तु चरतो
[12] En ms. C le *śloka* 82 se trouve après भिक्षामाददीत ; cf. page 235, note 6.
[13] A : दृष्टान्तप्रचुरां pour मिष्टान्नप्रचुरां ; B : भिक्षां न प्रचुरां ; C : मृष्टान्नप्रचुरां
[14] C : परिग्रहादि pour परिहासादि
[15] C : भिक्षापराद् pour भिक्षाचराद्
[16] E : न गर्हितात्
[17] C et E : स्वयंभूस्थान pour स्वयंभूपासन
[18] C : ग्रहणं pour ग्रहणात्
[19] C : तल्लिङ्ग pour लिङ्ग

जीविनः [1]पूजकादेश्च । [2]न च [**लिङ्गिनः**] महा[3]व्रत[4]शाक्यादिचिह्नभृतः[5] सकाशाद् भिक्षामाददीत[6] । [**मिष्टान्नप्रचुरां**] स्वाद्वन्नभूयिष्ठाम् । [**अतिसंस्कृताम्**] अति[7]संस्कारपुरःसराम् । [**परिहासादिचतुराः**] परिहासक्रीडालापप्रणयकुशलाश्च **यत्र** [**नार्यः**] योषितः **ततो** गृहाद् **भिक्षां** [**नादद्याद्**] नाददीतेति पूर्वेण संबन्धः ॥ ८१ - ८२ ॥

**कृतरक्षः स्मरन्नस्त्रं [8]पर्यटेन्मौनमास्थितः ।**
**भिक्षामलब्ध्वा [9]नो कोपं [10]कुर्यान्नो विधृतश्चिरम् ॥ ८३ ॥**
**न चाध्वसु प्रधावत्सु नोक्तः केनचिदप्रियम् ।**

[**मौनमास्थितः**] संयतवाक् सकलीकरणादिना **कृतरक्षः** [**अस्त्रं स्मरन्**] [11]अस्त्रमन्त्रं जपन् **भिक्षां पर्यटेत्** । तां च [12]**अलब्ध्वा** तदर्थं वा **चिरं विधृतः** सन् [**नो कोपं कुर्यात्**] न कुप्येत् । **न** च [**अध्वसु**] मार्गेषु [**प्रधावत्सु**] ये प्रधावन्तो जनाः सत्सु तेष्वन्येषु च । [**केनचिद् अप्रियम् उक्तः**] अप्रियवादिषु **न** कोपं कुर्यात् ॥

**गुर्वग्निशिवविद्याभ्यः क्षेत्रपालाय चांशकम् ॥ ८४ ॥**
**समुद्धृत्य सहायेन विभज्याद्यात्क्षितौ शुचिः ।**

[**गुर्वग्निशिवविद्याभ्यः क्षेत्रपालाय च**] गुर्वादिभ्यो [**अंशकं समुद्धृत्य**] भागमुद्धृत्य[13] [**सहायेन**] " आत्मार्थभागमवस्थाप्य शिष्टं मह्यां स्थापयेत् " इत्येवमनुशासितेन[14] सद्यो **विभज्य** कृततद्विधिः [**क्षितौ**] भूमौ स्थापितपात्रः [**शुचिः**] समाहितः [15]सन् [**अद्याद्**] भुञ्जीत ॥

**समाचान्तो जपेन्मन्त्रं [16]वैष्णवे समये ततः ॥ ८५ ॥**
**[17]व्यतीते क्षेत्रपालाय स्वाहेत्योंकारपूर्वकम् ।**

[1] C : पूजकान्ते च
[2] C omet न च
[3] C : व्रति pour व्रत
[4] B : शक्यादि pour शाक्यादि
[5] C : भूत pour भृतः
[6] Le *śloka* 82 se trouve ici dans le ms. C ; cf. page 234, note 12.
[7] B : सत्कार pour संस्कार
[8] B : पर्यटन्मौनम् pour पर्यटेन्मौनम्
[9] C : ना pour नो
[10] A et E : कुर्यान्नो वा धृतश्चिरम् ; C : कुर्यान्नोपाधृतश्चिरः
[11] C : अत्र pour अस्त्र
[12] C : लब्ध्वा pour अलब्ध्वा
[13] E : आहृत्य pour उद्धृत्य
[14] B : इत्येवमनुशास्ति तेन
[15] C : सः pour सन्
[16] C : वैष्णवैः समयैस्ततः
[17] A : प्रतीते

**बलिं च नैर्ऋते दद्याद्गन्धधूपपुरःसरम् ॥ ८६ ॥**

[**समाचान्तः**] सम्यगाचान्तः [**मन्त्रं**] साध्यमन्त्र जपन् **वैष्णवे समये** सायंसमय आसीत। [**ततो व्यतीते**] तस्मिंश्चातिक्रान्ते[1] **क्षेत्रपालाय स्वाहेति** [**नैर्ऋते**] [2]निर्ऋतिदिग्भागे **बलिं** [**गन्धधूपपुरःसरं**] विलेपनधूपस्रक्प्रधानं **दद्यात्** ॥ ८५-८६ ॥

**ततः प्रसार्य सच्चर्म बद्ध्वासनमतन्द्रितः ।**

**ध्यायन्मन्त्रं जपेद्विद्वान् खिन्नस्तस्मिँल्लघु स्वपेत् ॥ ८७ ॥**

[**ततः**] [3]पश्चात् [**सच्चर्म प्रसार्य**] मृगाजिनमास्तीर्य [**आसनम्**] अर्धचन्द्रपद्मस्वस्तिकाद्यासनं **बद्ध्वा** [4]**विद्वान्** इति योगपादप्रदर्शितध्यानादिविधिज्ञोऽनलसः[5] [6]सन् [**मन्त्रं ध्यायन् जपेत्**] [7]तत्तन्मन्त्रजपध्यानं कुर्यात्। [**खिन्नः**] श्रान्तश्च[8] **तस्मिन्** तत्र शयने [**लघु**] स्तोकं [**स्वपेत्**] शयीत ॥ ८७ ॥

**समुत्थायार्धरात्रे[9] तु [10]कुर्यात्पूजाजपादिकम्[11] ।**

**अर्धरात्रे समुत्थाय** इति, सम्यग् [12]दक्षिणपार्श्वेन परमेश्वरस्मरणपूर्वकं[13] शयनादुत्थाय [**पूजा-जपादिकं**] जपार्चनादि **कुर्यात्** ॥

**[14]ततश्च सवने ब्राह्मे समिदाद्याहरेत्ततः ॥ ८८ ॥**

**शैवानावसथप्राप्तान्परया श्रद्धयार्चयेत् ।**

**संपन्नैः कारकैस्तांश्च ज्ञात्वा लिङ्गैर्यथार्हतः[15] ॥ ८९ ॥**

[**ततः**] पश्चाद् **ब्राह्मे च सवने** प्रभाते [**समिदादि**] समित्कुशकुसुमानि **आहरेत्। ततश्च** [**आवसथप्राप्तान्**] स्वावसथप्राप्तान् **शैवान्** [**लिङ्गैः तांश्च ज्ञात्वा**] विशिष्टैश्चिह्नैराचार्यसाधकादीन् ब्रह्मचारिगृहस्थादीन् ब्राह्मणक्षत्रियादींश्च बुद्ध्वा [**यथार्हतः संपन्नैः कारकैः**] [16]यथोचितामत्रोपकरणादि-

[1] C : अनुक्रान्ते pour अतिक्रान्ते
[2] E : नैर्ऋत pour निर्ऋति
[3] B : तस्मात् पश्चात् pour पश्चात्
[4] C : विद्यात्र pour विद्वान् इति
[5] C : अलसः pour अनलसः
[6] C omet सन्
[7] C : सन्मन्त्र pour तत्तन्मन्त्र
[8] C ajoute ज्ञात्वा
[9] A : अर्धरात्रौ pour अर्धरात्रे
[10] A : कुर्यात्पूजां जपादिकम्
[11] En ms. C les *śloka* 88b et 89 se trouvent ici ; cf. note 14.
[12] E : दक्ष pour दक्षिण
[13] E : पूर्वं pour पूर्वकं
[14] cf. note 11
[15] A : यथा हितम् pour यथार्हतः
[16] C : यथोपात्त pour यथोचित

संपत्त्या [परया श्रद्धया] [1]उत्कृष्टया भक्त्या [अर्चयेत्] [2]संमानयेत् । लिङ्गानि चात्र व्रतजात्यादि-चिह्नानि [3]व्रतिनियतपवित्रकलाजपमुद्राप्रदर्शनादीनि श्रीमत्कामिकपौष्करकिरणाद्यागमाम्नातानीह न प्रदर्शितानि ग्रन्थ[4]विस्तरमातन्वन्तीति तत एव ज्ञेयानि ॥ ८८-८९ ॥

न कंचित्प्रणमेद् ब्रूयात्साध्यमन्त्रं न कस्यचित् ।
नाक्षिपेदोषधीर्मन्त्र[5]गोब्राह्मणतपस्विनः ॥ ९० ॥
व्यक्तिस्थानं शिवस्यैते शिवनिन्दैव सा यतः ।

[न कंचित्प्रणमेद्] गुरुवन्न कंचिन्नमेत् । साध्यमन्त्रं न [कस्यचित् ब्रूयात्] प्रकाशयेत् । [ओषधीः] ओषध्यादीन्[6] गर्हां कुर्वन् [7]नाक्षिपेत् । [यतः] यस्मात् [शिवस्य] परमेश्वरस्य एते [व्यक्तिस्थानं] [8]व्यक्तिस्थानानि । एषु[9] व्यक्तः शिवभट्टारकस्तत्तत्फलदो भवति । [सा] तन्निन्दा शिवनिन्दैव इति गर्हणया न तानाक्षिपेत् ॥

विशिष्टेनोपहारेण[10] यजेत्पर्वसु[11] शंकरम् ॥ ९१ ॥
क्षेत्रपालं च [12]साध्याणुं [13]चरुं दद्यान्न कस्यचित् ।
लब्धानुज्ञो मृषा जातु तिष्ठेन्नैकमपि क्षणम् ॥ ९२ ॥

पर्वसु अष्टमीचतुर्दश्यादिषु [विशिष्टेनोपहारेण] सविशेषेण बल्याद्युपहारेण [शंकरं] परमेश्वरं [साध्याणुं] [14]साध्यमन्त्रं [15]क्षेत्रपालं च [यजेद्] अर्चयेत् । [16]साध्यमन्त्रसंस्कृतनिवेदितं चरुं न [कस्यचिद्] अन्यस्मै दद्यात् । [17]किंच [लब्धानुज्ञः] हे भगवन् ! इदमहं[18] करोमि, अनुजानीहि मामिति प्रार्थ्याज्ञां लब्ध्वा [मृषा] [19]तां तामकुर्वन् [जातु] यदा कदाचित् [एकमपि क्षणं] [20]क्षणमपि [न तिष्ठेद्] नासीत[21] ॥ ९१-९२ ॥

[1] C : प्रकृष्टया
[2] C : समुन्नयेत्
[3] B : प्रति pour व्रति
[4] E : विस्तार pour विस्तर
[5] A : मन्त्रं pour मन्त्र
[6] B : ओषध्यादि pour ओषध्यादीन्
[7] C : नो क्षिपेत्
[8] B : व्यक्त pour व्यक्ति
[9] C : एषां pour एषु
[10] B : उपचारेण pour उपहारेण
[11] A, C et E : पूर्वं तु pour पर्वसु
[12] A : साध्याणू pour साध्याणुं
[13] A : चरून् pour चरुं
[14] C : समन्त्रं pour साध्यमन्त्रं
[15] C omet क्षेत्र
[16] C : साध्यमन्त्रं संस्कृतं निवेदितं
[17] C omet किंच
[18] C omet अहं
[19] C et E : तां कुर्वन् pour तां तामकुर्वन्
[20] C : क्षिप्रमपि pour क्षणमपि
[21] E : नास्ति pour नासीत

[ सिद्धिक्षेत्रचारिणो नियमाः ]

इदानीं लेशतः सिद्धि[1]क्षेत्रचारिणं [2]प्रति विशेषमाह—

[3]गुप्ताक्षसूत्रपूजाङ्गः क्रियाकालविभागवित् ।
[4]क्रमशः सिद्धिमाप्नोति सिद्धिक्षेत्राणि संचरन् ॥ ९३ ॥

[**गुप्ताक्षसूत्रपूजाङ्गः**] अप्रकाशिताक्षसूत्रपूजोपकरणः [**क्रियाकालविभागवित्**] क्रियाकालविभागज्ञश्च [**सिद्धिक्षेत्राणि संचरन्**] [5]सिद्धिक्षेत्रचारी साधकः [**क्रमशः**] क्रमात् **सिद्धिम्** [**आप्नोति**] लभते । यद्यपि चैतत्स्थाणोरपि[6] साधारणविशेषणं[7], तथाप्यस्य [8]प्रत्यहं देशान्तराटने सति सविशेषं क्रियाकालज्ञत्वम् अर्चालिङ्गाक्ष[9]सूत्रादिगुप्तिश्च सुतराम् [10]उपयोगीत्येतदधिकरणे[11] इयमुक्तिः ॥ ९३ ॥

[ क्षेत्रपरिग्रहविधिः ]

क्षेत्रपरिग्रहार्थमाह—

परिगृह्याथवा क्षेत्रं सल्लिङ्गाधिकृतं वसेत् ।

[अथ वा सल्लिङ्गाधिकृतं] दाह[12]भङ्गस्फुटितादिदोषरहितश्रेष्ठलिङ्गाश्रयं वा क्षेत्रं **परिगृह्य वसेत्** ॥

तथा च सति—

गणेशवृषभस्कन्दमातृलोकेशकीलितम्[13] ॥ ९४ ॥
दक्षिणोत्तरदिग्द्वारं शिवधामान्यरक्षितम् ।
महाजनाकुलं [14]दूरसमित्पुष्पकुशोदकम् ॥ ९५ ॥
सोपद्रवं च संत्यज्य परिग्रहणमाचरेत् ।

ततश्च क्षेत्रे[15] परमेश्वरप्रतिष्ठानात्[16] पूर्वकं [**गणेश-वृषभ-स्कन्द-मातृ-लोकेश-कीलितं**]

[1] B omet क्षेत्र
[2] C : व्रति pour प्रति
[3] A : कॢप्त pour गुप्त
[4] C : क्रमात्सिद्धिमवाप्नोति
[5] C : सिद्ध pour सिद्धि
[6] B : समस्थादेरपि pour स्थाणोरपि
[7] E : साधारणं विशेषणं
[8] E omet प्रत्यहं
[9] B : सूत्रगुप्त्यादिश्च ; E : सूत्रादिगुप्तादेश्च
[10] C : उपयोगिनी pour उपयोगि
[11] B : अधिकारिणे ; C : अधिकारेण ; E : अधिकरणा
[12] B omet भङ्ग ; C: भङ्गस्फुटनादि
[13] A et B : क्रीडितम् pour कीलितम्
[14] A : द्वारे pour दूर
[15] C : क्षेत्रं pour क्षेत्रे
[16] C : प्रतिष्ठात् pour प्रतिष्ठानात्

गणेशाद्याक्रान्तं [**दक्षिणोत्तरदिग्द्वारं**] याम्योदग्गतद्वारं[1] **शिवधाम** [**अन्यरक्षितम्**] अन्यस्य साधकस्य[2] रक्षितं [**महाजनाकुलं**] बहुलोकाकीर्णं [**दूरसमित्पुष्पकुशोदकं**] विप्रकृष्टकुशकुसुमसमिज्जलं [**सोपद्रवं च**] हिंस्रप्राणिचोराद्युपद्रवयुतं[3] च [**संत्यज्य**] त्यक्त्वा [**परिग्रहणमाचरेद्**] [4]एतद्दोषरहितं गृह्णीयात् ॥

[5]बाणे लिङ्गे स्वयंव्यक्ते मुनिसिद्धनिषेविते ॥ ९६ ॥
[6]स्वकल्पोक्तेन विधिना स्वयं वा परिकल्पिते ।
शुक्लपक्षे चतुर्दश्यां विशेषेणोत्तरायणे ॥ ९७ ॥
कुर्यात्परिग्रहं विद्वानष्टम्यां वा समाहितः ।

[**बाणे लिङ्गे**] त्रिपुरीनर्मदाप्रवाहादिपरिगृहीते [**स्वयं व्यक्ते**] स्वयंभूस्थाने, तथा [**मुनिसिद्धनिषेविते**] मुनिसिद्धपर्युपासिते [**स्वकल्पोक्तेन विधिना**] स्वशास्त्रोक्तक्रमेण [**स्वयं वा परिकल्पिते**] स्वयं वा वक्ष्यमाणवत्प्रतिष्ठापिते । लिङ्ग इति, लक्षणया रुद्राश्रयस्थानोक्तिः । एषु स्थानेषु शुक्लपक्षचतुर्दश्यामष्टम्यामुत्तरायणकाले **समाहितः** [7]समाहितमतिः सन् [8]तत्क्रमज्ञः क्षेत्र**परिग्रहं कुर्यात्** ॥

यागधाम विधायादावस्त्रं माहेश्वरं यजेत् ॥ ९८ ॥
जप्त्वा दशसहस्राणि दशांशमनुहोमयेत् ।

[**आदौ**] प्रथमं **यागधाम** [**विधाय**] कृत्वा तत्र विघ्नोपशमनाय [**माहेश्वरम् अस्त्रं यजेत्**] [9]पारमेश्वरमस्त्रमिष्ट्वा [**दशसहस्राणि जप्त्वा**] दशसहस्रसंख्यया [10]तं जपन् [**दशांशम् अनुहोमयेत्**] तद्दशांशेन च होमं कुर्यात् ॥

भूरिस्रग्बलि[11]धूपाद्यैरिष्टलिङ्गस्थशंकरः[12] ॥ ९९ ॥
न्यसेद्दिगीश्वरान्दिक्षु शक्रादीन्शङ्कु[13]विग्रहान् ।
[14]नाडीभूतेन सूत्रेण संधाय बहिरालिखेत् ॥ १०० ॥

1 C : याम्योदग्द्वारं
2 C omet स्य
3 C : उपद्रवमृतं pour उपद्रवयुतं
4 C : एतद्रहितं pour एतद्दोषरहितं
5 C : बाणलिङ्गे pour बाणे लिङ्गे
6 A : स्वकल्पोक्तविधानेन
7 B omet समाहितमतिः
8 B : कुशलज्ञः pour तत्क्रमज्ञः
9 E : पारमेश्वरमत्र इष्ट्वा
10 C : तज्जपन् pour तं जपन् ; E : तज्जपं
11 A : गन्ध pour बलि
12 A : शंकरम् pour शंकरः
13 C : गुरु pour शङ्कु
14 A : नाडिभूतेन

प्राकारं भस्मना [1]दीप्तमस्त्रं माहेश्वरं जपन् ।
तदन्तरखिलैर्बीजैर्वर्मालब्धै[2]स्तदुच्चरन् ॥ १०१ ॥
[3]प्राकारं कवचं कुर्यात्स्वधाम्नोऽप्येवमेव हि ।

**[भूरिस्रग्बलिधूपाद्यैः]** प्रभूतस्रङ्नैवेद्य[4]धूपगन्धादिभिः **[इष्ट-लिङ्गस्थ-शंकरः]** अर्चितो लिङ्गाश्रयः शिवो यस्य तथाविधः साधकः क्षेत्रपरिग्रहाय[5] **शक्रादीन्** **[दिगीश्वरान्]** [6]इन्द्रादिदिक्पतीन् **[शङ्कुविग्रहान्]** [7]शङ्कुशरीरान् **[दिक्षु]** [8]प्राच्यादिदिक्षु **न्यसेत्** । [9]ततश्च **[नाडीभूतेन]** नाड्यात्मना **सूत्रेण संधाय** [10]दिग्बन्धनं कुर्यात् । **[बहिः]** तद्बाह्ये **[दीप्तं माहेश्वरम् अस्त्रं]** [11]ज्वलत्पारमेश्वरमस्त्रं **जपन्** **[भस्मना प्राकारम् आलिखेद्]** भस्मप्राकारं [12]विलिखेत् । **[तदन्तः]** तस्यान्तः **[अखिलैः बीजैः]** सर्वबीजैः **[वर्मालब्धैः]** [13]कवचाद्यभिमन्त्रितैः **[तदुच्चरन्]** तन्मन्त्रमुच्चारयन् **[कवचं प्राकारं]** कवच-प्राकारं **[कुर्याद्]** विदध्यात् । **[एवमेव हि]** इत्थमेव नित्यं **[स्वधाम्नोऽपि]** स्वनिवासे [14]कुर्वीत ॥

**[ क्षेत्रपरिग्रहिणो धर्माः ]**

[15]ततश्च—

[16]ग्रामशङ्कुषु लोकेशान्प्रदोषे[17] प्रतिवासरम् ॥ १०२ ॥
बाह्यावृतौ तदस्त्राणि यजेदन्तर्घनच्छदम् ।
क्षेत्रपालं स्वदिग्भागे पर्वसु क्षेत्रनेमिगान् ॥ १०३ ॥

**[ग्रामशङ्कुषु]** निवासपरिच्छेदहेतुषु [18]दिक्ष्वष्टसु निविष्टेषु शङ्कुषु **[लोकेशान्]** इन्द्रादिलोक-पालान् **[प्रदोषे]** रात्र्यारम्भे **[प्रतिवासरं]** प्रत्यहं पूजयेत् । **[बाह्यावृतौ]** [19]बाह्यप्राकारनिमित्तं च

[1] A : दीप्तं मन्त्रं pour दीप्तमस्त्रं
[2] A et C : वर्मलब्धैः pour वर्मालब्धैः
[3] E : प्राकारकवचं
[4] B : सन्नैवेद्य pour नैवेद्य ; E : नैवेद्यं
[5] B : परिग्रहज्ञः pour परिग्रहाय
[6] B omet इन्द्रादि
[7] B omet शङ्कुशरीरान्
[8] E omet प्राच्यादि
[9] C : तांश्च pour ततश्च
[10] C : दिग्बद्धं ; E : दिग्बन्धं
[11] B omet ज्वलत्
[12] C omet वि
[13] C : कवचादिभिर्मन्त्रैः ; E : कवचादिभिर्मन्त्रितैः
[14] B : कुर्वतः pour कुर्वीत
[15] C : तथा pour ततश्च
[16] A et B : ग्रामशङ्कुस्थलोकेशान्
[17] C : प्रदोषो pour प्रदोषे
[18] C : दिगष्टसु
[19] Le passage बाह्यप्राकारनिमित्तं à प्रागुक्त manque dans le ms. B.

शक्रादिदिगष्टके शक्कुषु [तदस्त्राणि] वज्राद्यायुधानि अन्तर्धनच्छदम् इति कवचाद्यावरणं च यजेत् । [स्वदिग्भागे] प्रागुक्ते नैर्ऋतस्थाने क्षेत्रपालं यजेत् । पर्वसु [1]चतुर्दश्यष्टम्यादिषु [2]क्षेत्रनेमिगान् इन्द्रादिलोकपालान् यजेत् । तथा ह्युक्तं प्राक्—

"[3]न्यसेद्दिगीश्वरान्दिक्षु शक्रादीन्शङ्कुविग्रहान् ।" इति ॥ १०३ ॥

**क्षेत्रे यन्नास्ति तद्दूरात्सहायोपहृतं भजेत्[4] ।**

[5]सिद्ध्यर्थं परिगृहीते **क्षेत्रे** [6]**यत्** कुशकुसुमसमिदादि **नास्ति, तद् दूराद्** विप्रकृष्टाद् **[सहायोपहृतं भजेद्]** अन्यतः सहायेनानयेत् ॥

ननु[7] दूरसमित्पुष्पकुशोदकस्य क्षेत्रस्याग्रहणमेव प्राङ्निरूपितम्[8] । इह च दूरात्सहायेन तदानयनोक्तेः [9]प्राग्व्याकृतपरामर्शतो विरोधः । नैष दोषः । कुशकुसुमसलिलसमिद्वर्जितमन्यत्फलमूलतृणेन्धनमृदादि दूरात् सहायेनानयेदितीह प्रतिपाद्यते । तन्न कश्चिद्विरोधः । यद्वा [10]दूरसमित्पुष्पकुशोदकक्षेत्र[11]निषेधसूत्रे सकलान्यगुणोपपन्नं क्षेत्रं [12]यदि स्यात्तदानीं[13] [14]दूर[15]समित्पुष्पकुशोदकस्यापि[16] [17]तस्यापरिहरण[18]मित्येष्टव्यमेव । तच्च "क्षेत्रे यन्नास्ति तद्दूरात्सहायेनोपहृतं भजेद्" [19]इत्येतत्सूत्रारम्भसामर्थ्यात्सिद्ध्यति । तदेतदुक्तम्—

"[20]प्राग्व्याख्यातपरामर्शसमाधानेष्टिकृद्भवेत् ।" इति ॥

**न [21]सिद्धिक्षेत्रमुत्सृज्य पदमप्यन्यतो व्रजेत् ॥ १०४ ॥**

**[22]वर्णलक्षजपान्मन्त्रो [23]होमाच्च दशमांशतः ।**

[1] C : चतुर्दश्यादिषु
[2] B : क्षेत्रनेमिभागान्
[3] cf. plus haut *śloka* 100 a
[4] E : सहायोपकमाद्यजेत्
[5] B : विध्यर्थं pour सिद्ध्यर्थं
[6] B omet यत्
[7] C et E ajoutent च
[8] cf. plus haut *śloka* 95b
[9] B omet प्राग्व्याकृतपरामर्शतो ; E : विमर्शतो pour प्राग्व्याकृतपरामर्शतो
[10] B : दूरे pour दूर
[11] B : निरोध pour निषेध
[12] B omet यदि
[13] B : तदा किं pour तदानीं
[14] B : दूरे pour दूर
[15] C : समुत्पन्न pour समित्
[16] C omet अपि
[17] C omet तस्य
[18] B : परिहरणम् pour अपरिहरणम् ; C et E : अपरिहार
[19] E : इत्येतत्सूत्रारम्भेणार्थात्सिध्यति
[20] cf. plus haut *śloka* 61a
[21] C : सिद्ध pour सिद्धि
[22] B : वर्णलक्षणवान्मन्त्रो
[23] B : होमाश्च

स्वशास्त्रविहितां वृत्तिमास्थितस्य प्रसिद्ध्यति ॥ १०५ ॥

[**सिद्धिक्षेत्रमुत्सृज्य**] [1]सिद्धिक्षेत्रावस्थितः[2] [3]साधकस्तत्त्यक्त्वा [4]**पदमपि न अन्यतो** [**व्रजेद्**] गच्छेत् । [**मन्त्रो वर्णलक्षजपाद्**] मन्त्रस्य च साध्यस्य यावन्तो वर्णास्तावल्लक्षजपात् [**दशमांशतो होमाच्च**] तद्दशांशहोमात् [**स्वशास्त्रविहितां वृत्तिमास्थितस्य प्रसिद्ध्यति**] स्वशास्त्राम्नातचर्याचरणाच्च सिद्धिः ॥ १०४-१०५ ॥

[ प्रायश्चित्तविधिः ]

संजातव्युत्क्रमः कुर्यात्प्रायश्चित्तं विधिस्थितम् ।
अकामात्कामतः कुर्यात्तदेव त्रिगुणं सुधीः ॥ १०६ ॥

[**अकामाद्**] अनिच्छातः [**संजातव्युत्क्रमः**] [5]स्वशास्त्राम्नातविध्यतिक्रमे [**विधिस्थितं**] तच्छास्त्रोपदिष्टं **प्रायश्चित्तं कुर्यात्** । [**कामतः**] [6]इच्छातः **त्रिगुणम्** । **सुधी**रिति, सुष्ठु शोभना [7]तदनुष्ठाने प्रवणा धीर्यस्य सः ॥ १०६ ॥

एवम्—

साधकाह्निकविच्छेदे सद्योजातायुतं जपेत् ।
शतं वा संयतप्राणो वासरं मारुताशनः ॥ १०७ ॥

[**साधकाह्निकविच्छेदे**] [8]अह्ना निर्वर्त्यः **आह्निकः** प्रत्यहं [9]कार्यो विधिः [10]साधकसाध्यः प्रागुक्तो विधिः, तस्येच्छातो विच्छेदे [11]तल्लोपे [**सद्योजातायुतं**] दशसहस्राणि सद्योजातस्य **जपेत्** । यद्वा [**वासरं मारुताशनः**] एकाहोपोषितः [**संयतप्राणः**] प्राणायामशतेन तमेव [**शतं**] शतशो जपेत् । अत्र च दूरस्थादपि यथायोगं प्राक्तनमकामकृत एकगुणत्वं कामकृते तु त्रैगुण्यमभि[12]-संबन्धनीयम् ॥ १०७ ॥

वामस्यान्न[13]व्यतिकरे[14] हिंसायां बहुरूपिणः[15] ।

[1] C : सिद्ध pour सिद्धि
[2] C : अवस्थितेः pour अवस्थितः
[3] C : साधकं त्यक्त्वा pour साधकस्तत्त्यक्त्वा
[4] C : पदं विनान्यतो pour पदमपि नान्यतो
[5] B omet स्व ; E : स्वशास्त्राम्नातः सिध्यति किमेतच्छास्त्रोपदिष्टं
[6] E : इच्छायाः
[7] C : तदनुष्ठानप्रवणा ; E omet तदनुष्ठाने
[8] E : अह्नि
[9] C : कार्योऽथ
[10] B : साधकः साध्यः
[11] C : लोपे pour तल्लोपे
[12] B : अपि pour अभि
[13] B : अह्न pour अन्न ; C : अन्त
[14] C : व्यतिरेके pour व्यतिकरे
[15] B : बहुरूपिणम्

**वक्त्रस्य स्यन्दने रात्रौ दिवा तद्द्विगुणं जपेत् ॥ १०८ ॥**

संयतप्राणो निराहारी शतं [**वामस्य**] वामदेवस्य अनिच्छाकृते [**अन्नव्यतिकरे**] अभोज्यान्नभोजने **जपेत्** । एवं **हिंसायां** कृतायां [**बहुरूपिणः**] बहुरूपशतम् । इच्छया[1] तत्त्रिगुणम् । **रात्रौ** [**स्यन्दने**] वीर्योत्सर्गे [**वक्त्रस्य**] तत्पुरुषमन्त्रं शतशोऽभि[2]जपेत् । **दिवा** तु **तद्द्विगुणं** प्रायश्चित्तमाचरेत् । अत्र चेच्छाकृतत्वं न संभवतीत्यनिच्छैव मुख्या ॥ १०८ ॥

**द्विजाद्युच्छिष्टसंसर्गे वक्त्राद्यन्यतमं गुणम् ।**
**चतुर्दलाब्जमध्येष्ट्या[3] कस्थाने पञ्चमं यजेत् ॥ १०९ ॥**

[**द्विजाद्युच्छिष्टसंसर्गे**] अदीक्षित[4]ब्राह्मणाद्युच्छिष्टसङ्करे "पुरुषाघोरवामाजा जातीशा ब्राह्मणादितः" इति [5]श्री**किरणो**क्त[6]तज्जात्यधिपतयः क्रमाद् [**वक्त्राद्यन्यतमं गुणं**] तत्पुरुषबहुरूपवामदेवसद्योजातमन्त्राः [**चतुर्दलाब्जमध्येष्ट्या**] चतुर्दलपद्ममध्ययोगेन पूज्याः । एवं जात्यनुसारेण मध्येऽर्च्य[7] [8]**कस्थाने** [**पञ्चमम्**] ईशानभट्टारकं [**यजेद्**] अर्चयेत् । एवं च यदि ब्राह्मणस्यादीक्षितब्राह्मणोच्छिष्टसङ्करो जातस्तदा तत्पुरुषमन्त्रं मध्यदलेऽभ्यर्च्य [9]पूर्वदले ईशानः पूजनीयः । अन्ये तु स्वस्थानेष्वेव । तस्यैव क्षत्रियवैश्यशूद्रोच्छिष्टस्पर्शे बहुरूपादिमन्त्रा मध्येऽभ्यर्च्याः । तदीयस्थाने त्वीशानमन्त्रः । एवं क्षत्रियस्यादीक्षितक्षत्रियवैश्योच्छिष्टस्पर्शे सति बहुरूपादयः प्रागुक्तक्रमादेव मध्ये [10]कस्थाने पुनरीशानभट्टारकमन्त्रक्रमः ॥ १०९ ॥

जपहोमार्थमाह—

**षडहोपोषितो लक्षं जपेद्वन्याशनोऽपि वा ।**
**जुहुयादयुतं [11]ज्ञाते द्विगुणं शुद्धिकारणात् ॥ ११० ॥**

[12]तस्मिन्यागे पूर्वं [**शुद्धिकारणात्**] [13]शुद्धिहेतोः [14]द्विजाद्युच्छिष्टस्पर्शशान्त्यै [**षडहोपोषितः**] क्रमादेकाहद्व्यहत्र्यहषडहोपोषितो [**वन्याशनोऽपि वा**] वन्यैः नीवारादिभिः कृतवृत्तिर्वा यष्टव्यमन्त्रं

[1] B : इच्छायां pour इच्छया
[2] B : अहि pour अभि
[3] A : मध्येषु pour मध्येष्ट्या ; C : मध्येष्टा
[4] B : ब्राह्मणादुच्छिष्ट pour ब्राह्मणाद्युच्छिष्ट
[5] cf. *Kiraṇāgama*, III, 16, 6
[6] C : श्रीमत्किरणोक्तेः ; E : श्रीमत्किरणोक्ताः
[7] C : अर्चिते pour अर्च्य ; E : अभ्यर्च्य
[8] E : तत्स्थाने pour कस्थाने
[9] B : पूर्वे pour पूर्वदले ईशानः
[10] B : तत्स्थाने pour कस्थाने
[11] A et B : जातं pour ज्ञाते
[12] C : तं च यागं pour तस्मिन् यागे
[13] B : सिद्धि pour शुद्धि
[14] B : द्विजाद् pour द्विजादि

**लक्षं जपेत्** । यदि [1]वाजानतः स्थितोऽप्यतिक्रमस्तदा **अयुतं जुहुयात्** । अन्यथा [**द्विगुणं**] [2]तद्द्विगुणम् । [3]जपस्य चायमेव क्रमः । 'यथा होमस्तथा जपः' इति श्रुतेः ॥ ११० ॥

**[4]जपेन्निर्माल्यसंपर्के सर्वब्रह्माणि[5] लक्षशः ।**
**समग्रसंहितालक्षं जपेन्निर्माल्यभोजने ॥ १११ ॥**

[**निर्माल्यसंपर्के**] निर्माल्यसाङ्कर्ये सति [**सर्वब्रह्माणि लक्षशो जपेत्**] ब्रह्ममन्त्राः प्रत्येकं[6] लक्षशो[7] जप्याः । [**निर्माल्यभोजने**] [8]साक्षात्तु तद्भोजने [**समग्रसंहितालक्षं जपेत्**] साध्यमन्त्रसंहितायाः शिवैकादशिन्या एकैकमन्त्रलक्षं जपेत् ॥ १११ ॥

**वामाद्याः पतयः [9]शाक्य[10]पादार्थिककपालिनाम् ।**
**अजातोऽधिपतिः प्रोक्तस्त्रयीनैष्ठिकलिङ्गिनाम् ॥ ११२ ॥**

**तदन्नभोजने शुद्धिर्जातिसंपर्कशुद्धिवत् ।**
**किंत्वै[11]न्दवव्रतप्रान्ते कापाल्यन्नाशने मतम् ॥ ११३ ॥**

[**शाक्य-पादार्थिक-कपालिनां**] सौगतार्हतमहाव्रतानां [**वामाद्याः**] वामदेवाघोरतत्पुरुषाः **पतयः**। [**त्रयीनैष्ठिक-लिङ्गिनां**] [12]**त्रयीनैष्ठिकाः** संन्यासाश्रमिणः अन्ये च **लिङ्गिनो** [13]अन्यदर्शनाम्नातव्रतधारिणः, तेषाम् [**अजातोऽधिपतिः**] सद्योजातः [14]पतिः । [15]**तदन्नभोजने** [**शुद्धिः**] प्रायश्चित्तं [**जातिसंपर्कशुद्धिवत्**] तदधिपतिश्चतुर्दलाब्जमध्ये [16]कस्थाने च ईशानभट्टारकः । **किं तु** [**कापाल्यन्नाशने**] महाव्रतान्नभोजने [**ऐन्दवव्रतप्रान्ते मतम्**] चान्द्रायणव्रतसमाप्तावेवंविधयागकरणाच्छुद्धिः ॥ ११२-११३ ॥

यदि त्वेषामन्नं न भुक्तं तदाह—

**ईशानस्य जपेल्लक्षं तत्सङ्करविशुद्धये ।**

[1] B : वा जातः pour वाजानतः
[2] C : तु pour तद्
[3] B : जपेद्वा pour जपस्य च
[4] B et C : जपे निर्माल्यसंपर्के
[5] C : ब्राह्मण pour ब्रह्माणि
[6] C ajoute एव
[7] C ajoute जपेन
[8] C : साक्षात् कृततद्भोजनतः pour साक्षातु तद्भोजने
[9] B : शाक्त्य pour शाक्य ; C : शक्त्या
[10] A : वादार्थिक pour पादार्थिक
[11] A et C : च pour तु
[12] C : तुर्या नैष्ठिकाः
[13] B et C omettent अन्य
[14] C omet पतिः ; E : पतितः
[15] C et E : तत्तदन्नभोजने
[16] B et E : तत्स्थाने pour कस्थाने ; C : व्रतस्थाने

[1]कापालिसंक्रमे त्रीणि लक्षाणि कृतसंयमः ॥ ११४ ॥

[तत्सङ्करविशुद्धये] साङ्कर्यमात्रे जाते [2]तु तच्छुद्धयै **लक्षम् ईशानस्य जपेत्**। [**कापालि-संक्रमे**] कापालिक[3]सङ्करे तु [**कृतसंयमः**] त्रिषवणस्नातो निराहारः **त्रीणि लक्षाणि** ॥ ११४ ॥

प्रमादाद्धारिते लिङ्गे भ्रष्टे वा साक्षसूत्रके ।
लक्षं जपेन्महेशस्य पुनः कुर्यात्परिग्रहम् ॥ ११५ ॥

[**लिङ्गे साक्षसूत्रके प्रमादाद्धारिते भ्रष्टे वा**] दैवान्मानुषाद्वा [4]प्रबलालिङ्गाक्षसूत्रयोर्हारित-योर्भ्रष्टयोर्वा [**महेशस्य लक्षं जपेत्**] [5]परमेश्वरमन्त्रलक्षजपं कृत्वा [**पुनः परिग्रहं कुर्यात्**] [6]पुनर्गुणो-त्कृष्टयोरन्ययोः संग्रहं कुर्यात् ॥ ११५ ॥

भ्रंशे वा जनिते भङ्गे दशांशो विहितो मुने ।
तदन्यत्रार्धमूलं वा सहस्रं सुलघीयसि ॥ ११६ ॥

**जनिते भङ्गे भ्रंशे वा** प्रागुक्तो विधिः। यदि तु [**तदन्यत्र**] पूजाविस्रंसननिर्माल्यमध्यपाता-द्याद्वा[7] [8]**जनिते भ्रंशे** अधःपाते लिङ्गस्य अक्षसूत्रस्य वा तदा [**दशांशः**] तद्दशांशो **विहितः**। [9]अयुतं जपेदित्यर्थः। तावानपि व्याजो यत्र [10]नोत्पातः तथाविधे भद्रपीठाद् [11]आसनाद्वा भ्रंशे जाते [**अर्धमूलं**] ततोऽप्यर्धं पञ्च सहस्राणि। [**सुलघीयसि**] सुष्ठु लघीयसि अल्पे [12]करचलने स्खलने भद्रपीठे [13]वा [14]आसने वा कराद्विच्यावे [15]**सहस्रं** जपः ॥ ११६ ॥

तद्वच्च पशुना [16]दृष्टे स्पृष्टे दशगुणं जपेत् ।
हारितार्धं गुणच्छेदे संख्यासूत्रस्य दोषनुत् ॥ ११७ ॥
त्यागश्च कफविण्मूत्रस्पृष्टस्यान्यत्र तैजसात् ।

1 B : कपालि ; C : कापाल
2 C omet तु
3 C omet क
4 C : प्रतिबलात् pour प्रबलात्
5 B : परमेश्वरमन्त्रं लक्षं जपं कृत्वा
6 B : पुनर्गुणोत्कृष्टये संग्रहं कुर्यात्
7 C : पदादपि pour पाताद्याद्वा ; E : पातात् यद्वा
8 C : आजनितो भ्रंशो अधःपातो pour जनिते भ्रंशे अधःपाते
9 C : अयुतजप इत्यर्थः pour अयुतं जपेदित्यर्थः
10 C : नोत्पादनः pour नोत्पातः
11 E omet आसनाद्
12 C : तरने स्खलने ; B omet स्खलने
13 C omet वा
14 C : स्वासन एव pour आसने वा ; E : आसन एव
15 C : सहस्रजपः
16 A : दष्टे pour दृष्टे ; E : भ्रष्टे

इष्टलिङ्गे अक्षसूत्रे वा [**पशुना**] अदीक्षितेन **दृष्टे** सहस्रं जपेत्। **स्पृष्टे** तु [**दशगुणं जपेद्**] अयुतं जप्यम्। **संख्यासूत्रस्य** इत्यक्षसूत्रस्य अकस्माद् [**गुणच्छेदे**] सूत्रस्य [1]च्छेदे **हारितार्धं** लक्षार्धं **दोषनुत्**। [**कफविण्मूत्रस्पृष्टस्य**] कफादिस्पृष्टस्य **त्यागः** कार्यः। **अन्यत्र तैजसाद्** इति, [2]हेमादिलोहस्य [3]दुष्टस्य तेनैव द्रव्येण पुनर्घटनं न तु त्याग इति। अयं च लिङ्गाक्षसूत्रविधिः[4] [5]साधकादन्यत्रापि विज्ञेयः॥

**प्रमादाद्योषितं गत्वा प्राणायामायुतं [6]भजेत्॥ ११८॥**
**द्विपञ्चगुणितं शुद्ध्यै प्रणवोच्चारसंश्रितम्।**

[**प्रमादाद् योषितं गत्वा**] अनिच्छया निखिलानि बलीवर्दन्यायेन [7]प्रमादात् प्रमदया कृत-परिष्वङ्गस्य तदुपभोगे [**प्रणवोच्चारसंश्रितं**] प्रणवोच्चारपुरःसरं [**प्राणायामायुतं भजेत्**] प्राणायाम-दशसहस्रं कुर्यात्। [8]इच्छया तु [**द्विपञ्चगुणितं**] तद्दशगुणं [9]जपेत्। लक्षं विदध्याद् इत्यर्थः॥

**महापातकसंयोगे शिवैकादशिकायुतम्॥ ११९॥**
**जपेद्दशगुणं प्राणसंयमी फलमूलभुक्।**
**तत्समेष्वेवमेव[10] स्यात्किं तु प्राणायतिं विना॥ १२०॥**

[**महापातकसंयोगे**] "ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। तत्संपर्कश्च" इति पञ्चमहा-पातकानि[11]। एभिरनिच्छातः संयोगे[12] [**शिवैकादशिकायुतं**] शिवैकादशिकायाः [13]संहिताया अयुतं **जपेत्**। इच्छया तु [**प्राणसंयमी**] संयतप्राणः [**फलमूलभुक्**] फलमूलाशनः तदेव **दशगुणं** जपेत्। [**तत्समेषु**] एतत्समेषूपपातकेषु[14] [**प्राणायतिं विना**] प्राणायामवर्ज्यम् [**एवमेव स्याद्**] एष एव विधिः॥ ११९-१२०॥

[1] C: च्छेदतोऽन्यस्य संग्रहः pour च्छेदे हारितार्धं लक्षार्धं दोषनुत्। कफादिस्पृष्टस्य त्यागः कार्यः।
[2] C: हेमादि pour हेमादि
[3] B: भ्रष्टस्य pour दुष्टस्य
[4] B: विधाना pour विधिः
[5] B: साधकान्यत्रापि
[6] C: जपेत् pour भजेत्
[7] B: प्रमदया pour प्रमादात्; C omet प्रमादात्
[8] C et E: य इच्छया pour इच्छया
[9] C omet जपेत्
[10] A: एवं pour एव
[11] cf. *Kiraṇāgama*, III, 13, 2:
ब्रह्महत्तिः सुरापानं स्तेयं गुर्वङ्गनागमः। विशेषपातकान्यत्र तद्योगात्पञ्चमो भवेत्॥
[12] B: अनिश्चितः संयोगे pour अनिच्छातः सयोगे; C: इच्छाकृतसंयोगेः; E: इच्छातस्संयोगे
[13] E omet संहिताया
[14] C: महापातकेषु pour उपपातकेषु; B ajoute पातकेषु

पातकेषु तदन्येषु क्रियाव्यतिकरेषु च ।
जपेदेकादशाजातमेकं वा ब्रह्ममध्यगम् ॥ १२१ ॥

[**पातकेषु**] तेभ्यो महापातकोपपातकेभ्यो यान्यन्यानि[1] पातकानि [2]तत्तद्द्रव्यापहरणनिषिद्धान्नभक्षणादीनि तेषु तेष्वपि[3] [**तदन्येषु क्रियाव्यतिकरेषु**] अन्येषु च क्रियाच्छिद्रेषु [**एकादश**] शिववक्त्राण्यङ्गसहितानि[4] **जपेत्** । यद्वा तत्तदनुसारेण [**अजातम् एकं**] बहुरूपनाथमेवावर्तयेत् ॥ १२१ ॥

न ग्राह्यं कारकं किंचित् सख्या जातांहसो हृतम्[5] ।
[6]आददानोऽपरिज्ञानात्पूर्वोक्तादर्धमाचरेत्[7] ॥ १२२ ॥

[**जातांहसः सख्या**] पूर्वोक्तमहापातकादियोगिनोऽनुचरेण [**हृतं**] [**कारकं**] [8]यथोक्तामन्त्रोपकरणादि[9] [**न किंचिद् ग्राह्यं**] [10]न किंचिद् गृह्णीयात् । किंचिद् [**अपरिज्ञानाद्**] अज्ञानाद् [**आददानः**] गृह्णन् [**पूर्वोक्ताद् अर्धम्**] [11]तत्तन्महापातकयोगिनः प्रायश्चित्तं [12]यत्पूर्वमुक्तं तदर्धम् **आचरेत्** ॥ १२२ ॥

बहुदैवसिके योगे तुल्यं साधर्म्ययोगतः ।
ज्ञात्वैवं साधको विद्वान् सहायं सद्गुणं भजेत् ॥ १२३ ॥
सजात्यभिजनोपेतं यवीयांसं गुणाधिकम् ।
पुत्रकं समयस्थं वा [13]सुस्निग्धमपरं ततः ॥ १२४ ॥

[**बहुदैवसिके योगे**] संजातपातकेन [14]सख्यादनेकाह्निके संपर्के सति [**तुल्यं**] तत्सममेव साधकस्य प्रायश्चित्तम् । [**साधर्म्ययोगतः**] तत्साधर्म्यप्राप्तेः । एवं बुद्ध्वा तद्विदा साधकेन [15]**सद्गुणः** सत्कुशलः तदलाभे समानजातिः कनीयान् गुणज्येष्ठः पुत्रकः समयी वा तयोरभावे अन्यः कश्चित्

[1] E omet अन्यानि
[2] B : तद्द्रव्य pour तत्तद्द्रव्य
[3] B et E omettent अपि
[4] C et E : सहितं pour सहितानि
[5] A et E : संख्याजातापि सा हृतम् ; B : संख्याजाताविसा हृतम् ; C : संख्याजातांहसाहृतम्
[6] B : आददाने pour आददानो
[7] E : पूर्वोक्तमर्धमाचरेत्
[8] B : यथोक्तमात्र : pour यथोक्तामन्त्र
[9] C et E : आदिना pour आदि
[10] C et E omettent न
[11] C : तत्तत्पातकयोगिनः
[12] E omet यत्पूर्वमुक्तं
[13] A, C et E : सुस्निग्धं परमं ततः
[14] B et E : संख्यानेकाह्निके
[15] C : सद्गुणतत्कुशलः ; E : सद्गुणस्तत्कुशलः

सुस्निग्धः सहायो [1]योजनीयः ॥ १२३ - १२४ ॥

**साधकोक्तं व्रतं कुर्याद्गुरुरस्ववशोऽव्रती ।**
**[2]द्विगुणं स्ववशस्तावच्चरेदस्ववशो व्रती ॥ १२५ ॥**

" [3]देशिको मन्त्रवृत्तिश्च पुत्रकः समयी च यः ।
चत्वार एते शैवाः स्युर्व्रतिनोऽव्रतिनोऽपि वा ॥ "

इति पूर्वमुक्तत्वाद्, **अव्रती** यो गुरुः, **अस्ववश** इत्यनिच्छुः कृतपातकः स प्रागुक्तानां पातकानां निवृत्त्यै **साधकोक्तम्** उदितं **व्रतं कुर्यात्** । **द्विगुणं स्ववश** इति, कामतः कृतपातको गुरुः साधकोक्तं व्रतं द्विगुणमाचरेत् । **तावच्चरेदस्ववशो व्रतीति**, यदि पुनरनिच्छाकृतपापो[4] [5]व्रती स द्विगुणमेवाचरेत् ॥ १२५ ॥

**स्ववशस्त्रिगुणं [6]त्र्यंशं विना [7]तत्पुत्रकश्चरेत् ।**
**[8]पुत्रकार्धं तु समयी पूर्वोक्तानुक्तपाप्मनाम् ॥ १२६ ॥**

स एव गुरुः **स्ववश** इच्छाकृतपातकश्चेत्[9] [**त्रिगुणं**] व्रतमनुतिष्ठेत् । इत्थं [10]सकामाकामत्वेन व्रतित्वाव्रतित्वभेदेन च गुरोश्चतुर्धा प्रायश्चित्तमुक्तम् । अधुना [11]पुत्रकं प्रत्युच्यते । **त्र्यंशं विना तत्पुत्रकश्चरेत्** । **स्ववश**स्तदिच्छावान् पुत्रकः साधकोक्तात् त्रिभागं प्रायश्चित्तं चरेत् । स एवानिच्छावान् व्रती **त्र्यंशं विने**ति, द्विभागमेवानुतिष्ठेत् [12]प्रथमसमयिनः । [13]**पुत्रकार्धं तु** इति, पुत्रकोक्ताद् व्रतादर्धं **समयी पूर्वोक्तानुक्तपाप्मनां** प्रागुक्तानामनुक्तानां च पापानां शान्तये व्रतं कुर्यात् ॥ १२६ ॥

**[14]कृच्छ्रं वा प्रतिषण्मासं प्रत्यब्दमथवैन्दवम्[15] ।**
**पराकं तप्तकृच्छ्रं वा मन्त्री [16]सानुचरश्चरेत् ॥ १२७ ॥**

[1] C : भोजनीयः
[2] Ce demi-*śloka* manque en ms. A.
[3] cf. plus haut *śloka* 2
[4] C et E : पापे pour पापो
[5] E omet व्रती स
[6] A : त्र्यक्षं pour त्र्यंशं
[7] A : तत्पुत्रकं चरेत्
[8] A : पुत्रकार्थी तु
[9] E : तत् pour चेत्
[10] E : सकामत्वेन pour सकामाकामत्वेन
[11] E : किं pour पुत्रकं
[12] B et C : प्रथमं समयिनः
[13] C omet पुत्रकार्धं त्विति
[14] A : कृष्णं pour कृच्छ्रं
[15] A et E : अथ चैन्दवम् pour अथवैन्दवम्
[16] B : सानुचरं चरेत्

निर्विघ्नसिद्धिमन्विच्छन्मुक्त्यर्थमितरे [1]त्रयः ।

असंविदितपातकविच्छित्त्यै [**निर्विघ्नसिद्धिमन्विच्छन्**] निर्विघ्नसिद्धिमेप्सुः [**सानुचरः**] ससहायः [**मन्त्री**] साधकः [**इतरे त्रयः**] तदन्ये च देशिकपुत्रकसमयिनस्त्रयः [**मुक्त्यर्थं**] विघ्नवर्जित-मुक्त्यर्थं **प्रतिषण्मासं कृच्छ्रम्** आचरेयुः । [**अथवा**] यद्वा [**प्रत्यब्दं**] प्रतिवर्षम् [**ऐन्दवं**] चान्द्रायणं **पराकं तप्तकृच्छ्रं वा** [2]कुर्युः । कृच्छ्रचान्द्रायणादिलक्षणं तन्त्रान्तराज्ज्ञेयम् । यथोक्तं श्रीमत्**किरणे**[3]—

"एकभुक्तं त्र्यहं [4]कुर्यात्त्र्यहं तु यदयाचितम् ।
त्र्यहं [5]स्यान्नक्तभोजी तु त्र्यहं स्यान्मारुताशनः[6] ॥
एष कृच्छ्रः समाख्यातः प्राजापत्य इति स्मृतः ।
[7]मासार्धं प्रासवृद्धिः स्याच्छुक्ले [8]कृष्णे तु ह्रासयेत् ॥
[9]चान्द्रायणविधिः प्रोक्तः" इति ।

तथा—

"[10]द्वादशाहं [11]निराहारः पराक इति [12]संस्मृतः ।" इति ।

तथा—

"[13]त्र्यहमुष्णं[14] पिबेद्वारि [15]त्र्यहं क्षीरं तथा पिबेत् ।
त्र्यहमुष्णं घृतं पीत्वा त्र्यहं वै[16] केवलं तत. ॥
तप्तकृच्छ्रोऽयमाख्यातः" इति ॥

## अथ पवित्रविधिः

[17]सर्वच्छिद्रहरश्चान्यो विधिरेषां निगद्यते ॥ १२८ ॥

[1] A : त्रयम् pour त्रयः
[2] C : कुर्यात् pour कुर्युः
[3] cf. *Kiraṇāgama*, III, 14, 11-12a
[4] *ibid.*, कार्यं त्रिदिनैः pour कुर्यात्त्र्यहं तु
[5] *ibid.*, तु नक्तभोजित्वं pour स्यान्नक्तभोजी तु ; E : च नक्तभोजी तु
[6] *ibid.*, अशनम् pour अशनः
[7] cf. *Kiraṇāgama*, III, 14, 15b-16a
[8] *ibid.*, ह्रासः सितेतरे pour कृष्णे तु ह्रासयेत् ; E : पक्षे तु ह्रासयेत्
[9] *ibid.*, चान्द्रायणमिति प्रोक्तम्
[10] *ibid.*, III, 14, 15a
[11] *ibid.*, निराहारात् pour निराहारः
[12] *ibid.*, स स्मृतः pour संस्मृतः
[13] *ibid.*, III, 14, 12b-13
[14] B : तूष्णीं pour उष्णं
[15] *Kiraṇāgama* : त्र्यहं स्यात्क्षीरभोजनम्
[16] *ibid.*, चेत् pour वै
[17] E omet les demi-*śloka* 128b et 129a

**यः प्राप्तस्तपसा देवैर्हरात्स्वविधिपुष्टये ।**

**एषां** साधकादीनां [**सर्वच्छिद्रापहः**] समयलोपादिजसकलच्छिद्रापहः [**अन्यो**] **यः** पवित्राख्यो विधिः प्राग् **देवैः** [**हरात्**] परमेश्वरात् **तपसा** [**प्राप्तः**] लब्धः स एवैषामेव [**स्वविधिपुष्टये**] स्वविधिपुष्ट्यर्थं [**निगद्यते**] उच्यते ॥

**श्रावणे तदुपान्ते वा नभस्ये वोच्यमानवत् ॥ १२९ ॥**
**शम्भोः पवित्रमापाद्य पूरयेद्वार्षिकं विधिम् ॥ १३० ॥**

**श्रावणे** मासि [**तदुपान्ते वा**] [1]सः श्रावण [2]उपान्तो यस्य कालस्य स तदुपान्तः कालः । आषाढपौर्णमासी वा चतुर्दशी[3] वा तस्मिन् । यथोक्तं श्रीमन्मते—" आषाढ्याश्चादिमेऽहनि " इति । **नभस्ये वा** [4]इति, भाद्रपदे । [एतेष्वन्यतमे काले **उच्यमानवत्** वक्ष्यमाणरीत्या **शम्भोः पवित्रमापाद्य** महेश्वरमूर्ध्नि पवित्राण्यारोप्य **वार्षिकं विधिं पूरयेत्** प्रत्यब्दमनुष्ठेयं नित्याङ्गभूतं प्रायश्चित्तात्मकं विधिं समापयेत् ।] ॥ १३० ॥

[5]इति श्रीभट्टविद्याकण्ठात्मज-भट्टनारायणकण्ठविरचितायां मृगेन्द्रवृत्तौ
चर्यापादः समाप्तः । [6]



[1] B : सश्रवणे pour सः श्रावण ; E : श्रावणे [2] C : इवान्तो pour उपान्तो

[3] B : सा चतुर्दशी ; E : सुचतुर्दशी [4] C om t इति

[5] Ce colophon manque dans les manuscrits C et E.

[6] Dans tous les manuscrits utilisés par cette édition le texte ainsi que le commentaire du *Caryāpāda* finissent par le *śloka* 130 शम्भोः etc. Il semble que le *Caryāpāda* soit incomplet, car quelques vers de l'*āgama* cités dans le commentaire et les autres manuels ne figurent pas dans les portions connues du texte. Le contexte laisse aussi supposer qu'il manque quelques *paṭala* dans ce *Caryāpāda*. Un court passage du commentaire figurant au début du *Yogapāda* dans le manuscrit C semble appartenir à un *paṭala* non connu du *Caryāpāda* (voir appendice). Le colophon trouvé dans quelques manscrits est évidemment ajouté par le scribe.

# APPENDICE I

Comme il a déjà été indiqué page 250 note 6, nous donnons ci-dessous un passage que nous supposons faire partie du *Caryāpāda* de cet *āgama*. Ce passage a été trouvé dans les folio 204-205 du Ms. C (manuscrit sur ôles D N° 5470 de Madras Government Oriental Mss. Library) utilisé pour cette édition.

## [लिङ्गलक्षणम्]

. . . . . तत्कथनमथाधिक्रियत इति प्रकरणसंबन्धः । **लिङ्गं** परमेश्वरपूजाधिकरणम् । **अमरार्चितम्** इति लिङ्गाराधनतस्तत्प्राप्तिर्जनानामिति ज्ञापयितुम् । तथा चोक्तं श्रीमन्**मये**—

"आदित्या वसवो रुद्रा ऋषयश्च महौजसः ।
विविधलिङ्गमाराध्य पदमिष्टतमं गताः ॥" इति ।

[**व्यक्तं**] प्रतिमा । **अव्यक्तम्** अनभिव्यक्ताङ्गम् । **उभयात्मकं** व्यक्ताव्यक्तं मुखलिङ्गमित्यर्थः । . . . . . . **सिद्ध्यर्थं** साधक **आत्मनः कृते स्थापयेत्** । **परैः** समयिसाधकपुत्रकादिभिः अभ्यर्थितो वा **गुरुः** आचार्यः प्रतिष्ठापयेत् । परैरिति विशेषणाद् गुरोः परे ये साधकादयस्तैस्तदेवसिद्धये आत्मनः प्रतिष्ठा कार्या । आचार्येण तु चतुर्णामपीति तात्पर्यम् ।

तदेव लिङ्गं विशिनष्टि—

**तच्छिलालोहमृद्रत्नदारुजं भौमसाधितम् ।**
**सर्वज्ञविहितं यावद्बुभुक्षोरितरस्य वा ॥**

**तद्** लिङ्गं **बुभुक्षोः** भोगेच्छोः [**इतरस्य वा**] अन्यस्य वा मुनेरर्चने प्रभवतीति । यतः सर्वज्ञत्वमतोऽखिलकर्तृप्रसरम् । तथा बाहुल्येन शैललोहमृद्रत्नदारुप्रकृतिजं प्रशस्तम् । **कचित्तु** स्वशास्त्राम्नातान्यप्रकृतिजमपि भाव्यम् ॥

प्राधान्यात्प्रथमस्य रत्नजस्य मानमाह—

**एकाङ्गुलं द्विहस्तान्तं रत्नजं न परं ततः ॥**

[**एकाङ्गुलम्**] एकाङ्गुलादारभ्य [**द्विहस्तान्तं**] चतुर्विंशत्यङ्गुलान्तं [**रत्नजं**] रत्नमयं लिङ्गं कुर्यात् । **न तु ततः परम्** इति । परमित्यधिकम् । आधिक्यविषय एवायं निषेधः । तस्मादङ्गुलान्न्यूनस्यापि सिद्धिः ।

" सिद्धये बदरादाथर्वणकाद्वापि शस्यते ।
सौक्ष्म्येऽणु च गुणो येन बलीयान् सर्वदोषहृत् ॥ "

इति श्रीमन्मयादावङ्गुलोनस्याप्याम्नातत्वात् ।

यत्तु श्रीमत्किरणादौ—

" [1]अङ्गुलादिवितस्त्यन्तं नोर्ध्वं लिङ्गं तु रत्नजम् "

इति मानं साधकायावश्यमानस्य विषयम् । न च लिङ्गविषयं ज्ञेयम् ।

लोहादीनां मानमुच्यते—

लोहादि पाणिषड्ढस्तं दारुभिस्त्रिविधं परम् ॥

[1] Cf. *Kiraṇāgama*, 4, 21, 46 : अङ्गुल्यादिवितस्त्यन्तकोर्ध्वलिङ्गन्तु रत्नजम्

# APPENDICE II

Nous donnons ci-dessous des vers attribués au *Mṛgendrāgama* par divers mannuels. Ils n'ont pas été trouvés dans le texte imprimé, dans le *Vidyāpāda* et *Yogapāda* édités à Dêvakôṭṭai et dans les Kâshmîr Series, comme dans le *Kriyāpāda* et le *Caryāpāda* édités par nous. Il est probable que ces vers appartiennent au *Caryāpāda* qui semble incomplet. Voir p. 250, note 6.

तृतीयेऽह्नि चतुर्थे वा चिनुयादस्थमुच्चरन् ।

*Aghoraśivācāryapaddhati* (ou *Kriyākramajyoti*), d'Aghoraśivācārya, **apara-kriyāvidhi**; écriture grantha; Cintātripêṭṭai, Madras, 1907, p. 272.

दुकूलं पट्टसूत्रं वा क्षौमं कार्पासमेव वा ।
सूत्रं नवगुणं कृत्वा सद्येन नवतन्तुकम् ॥
शुद्धोदकेन प्रक्षाल्य तथा चन्दनवारिणा ।
शोषयेद्बहुरूपेण कुर्यात्कन्दुकवद्दृढा ॥[1]

*Aghoraśivācāryapaddhati-vyākhyā* (ou *Kriyākramadyotikā-vyākhyā*): *Prabhā* par Nirmalamaṇi-deśika; écriture grantha; Cidambaram, 1927, p. 149.

विन्यसेत्तत्पुनः सर्वं यथामानसवैभवम् ।

*ibid.*, p. 177.

ततो विसृज्य चण्डेष्टिं विधायावभृथं भजेत् ।
पूर्वमुक्तं च सापेक्षं क्षमस्वेति विसर्जयेत् ॥

*ibid.*, p. 194.

बहिश्चर्यासु निष्णाताः स्वकर्मपरिरक्षकाः ।
अन्तःकरणचेष्टाभिर्लक्षयित्वा गुरूत्तमैः ॥

*ibid.*, p. 268.

ततश्चोभयतो देवं विसृज्यारोप्य तं चिताम् ।
प्रसक्तेन्धनमार्गेण नीत्वाग्निं परिदीपयेत् ॥

*ibid.*, p. 437.

voir aussi *Kriyādīpikā*, p. 112

गोशकृन्मण्डले त्रीणि ततः पात्राणि विन्यसेत् ।

*ibid.*, p. 484.

शुक्लकृष्णे तथा सूत्रमहत्त्वोदितलक्षणम् ।
[1]दुकूलं पट्टसूत्रं वा क्षौमं कार्पासमेव वा ॥
सूत्रं नवगुणं कृत्वा सद्येन नवतन्तुकम् ।
शुद्धोदकेन प्रक्षाल्य तथा चन्दनवारिणा ॥
शोषयेद्बहुरूपेण कुर्यात्कन्दुकवद्धृदा ।
ओंकारं चन्द्रमग्निं च ब्रह्मनागगुहं रविम् ॥
सदेशं सर्वदेवांश्च विन्यसेत्नवतन्तुषु ।

*Kriyādīpikā* de Śivāgrayogīndra; écriture grantha; Madras, 1930, p. 112.

गन्धपुष्पसमोपेतं दूर्वाक्षतसमन्वितम् ।
पवित्रमञ्जलौ कृत्वा ब्रूयादिममविस्खलन् ॥
ओंकारात्मन् त्वया देव यद्दृष्टं मामके विधौ ।
कृतं क्लिष्टं समुत्सृष्टं हृदा गुप्तं च मत्कृतम् ॥

*Pavitrotsavavidhi*; écriture grantha; Cintâtripêṭṭai, Madras, 1930, p. 181.

धूपदीपादिसत्कारं सर्वमङ्गलसंयुतम् ।

*ibid.*, p. 188.

प्रविशेन्मण्डपं तत्र भस्मोद्धूलितविग्रहः ।
पूजयेत्पूर्वमात्मार्थं नैमित्तिकमथाचरेत् ॥

*Pratiṣṭhā-aṣṭādaśakriyāvalī*; écriture grantha; Cintātripêṭṭai, Madras, 1927, p. 61.

लोकधर्ममयी दीक्षा शिवधर्ममयी तथा ।

*Mṛgendravṛtti de* Bhaṭṭanārāyaṇakaṇṭha *Vidyāpāda*, édition de Dêvakôṭṭai, p. 163.

न च देहपरित्यागः कार्यो दुःखेऽप्युपस्थिते ।

*ibid.*, *Kriyāpāda*, notre édition, p. 20.

[1] cf. *Aghoraśivācāryapaddhati-vyākhyā*, p. 149.

संध्याकालपरिभ्रंशे शिवैकादशिकां जपेत् ।[1]

*Vāruṇapaddhati* de Varuṇaśivācārya, manuscript de l'Institut Français d'Indologie, T. N°. 55, p. 87.

त्रिंशद्भेदलैर्वेणी ग्रथिता बाहुसंमितैः ।
ब्रह्मग्रन्थियुता चाग्रे विस्तृता विष्टरं शुभम् ॥
या वेणी केशपाशाभा विष्टरं तु तदुच्यते ।

*ibid.*, p. 469-470.

शिवभेदे शिवः पूज्यो रुद्रभेदे स एव हि ।

*ibid.*, p. 527.

इति वर्णाश्रमाचारान्मनसापि न लङ्घयेत् ।[2]

*Śivajñānabodhabhāṣya* de Sivāgrayogīndra; écriture grantha; Madras, 1921, p. 76.

पञ्चमन्त्रतनुः श्रीमान् सकलः परिपठ्यते ।
सुप्रसन्नेन्द्रियग्रामः सर्वज्ञः सर्वगोचरः ॥
योगी योगेश्वरः स्वामी स्वतन्त्रः पशुपाशहा ।
तस्योक्तिः पौरुषैः स्थूलैः पुराणैर्न च बाध्यते ॥

*ibid.*, p. 84.

शक्तोद्युक्तौ प्रवृत्तश्च कर्ता त्रिविध उच्यते ।
शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः ॥

*Śivajñānabodhabhāṣya* de *Sadāśiva Śivācārya*; écriture grantha; Cintâtripêṭṭai, Madras, 1924 p. 16.

साधारे यः परार्थेऽस्मिन्निराधारेऽपि कृत्यकृत् ।
अन्तरिक्षे निराधारो दृष्टः शाम्बादिकम्पकृत् ॥

*ibid.*, p. 18.

[3]इति वर्णाश्रमाचारान्मनसापि न लङ्घयेत् ।

*ibid.*, p. 102.

[1] voir aussi *Sakalāgamasārasaṃgraha*, p. 31

[2] voir aussi *Śivajñānabodhabhāṣya* de Sadāśiva Śivācārya, p. 102

[3] cf. *Śivajñānabodhabhāṣya* de Śivāgrayogīndra, p, 76.

तेजः कवचसाधर्म्यात्तन्नाम्ना व्यपदिश्यते ।

*Śivapūjāstava-vyākhyā* de Jñānaśambhu Śivācārya, Dêvakôṭṭai, 1935, p. 86.

अर्घ्यपात्रं च शङ्खं च पाद्याचमनपात्रके ।
वर्धनीं जलभाण्डं च क्षालयेदस्त्रमन्त्रतः ॥

*Śaivasiddhāntasaṃgraha*, manuscrit de l'Institut Français d'Indologie, T. N°. 46, p. 212.

ब्रह्मविष्णुहरेशानान्परितिस्थान्प्रपूजयेत् ।
इन्द्रादीशानपर्यन्तान्विग्रहेषु यथाक्रमम् ॥

*ibid.*, p, 486.

संध्याकालपरिभ्रंशे शिवैकादशिकां जपेत् ।[1]

*Sakalāgamasārasaṃgraha*; écriture grantha; Cintâtripêṭṭai, Madras, 1911, p. 31.

वागीश्वरं च रक्ताभं त्रिनेत्रं च चतुर्भुजम् ।
अभयं वरदोपेतं पाशशूलधरान्वितम् ॥
अतसीपुष्पसंकाशां तत्र देवीं सलक्षणाम् ।
तद्वद्वागीश्वरं देवं हृदा विन्यस्य पूजयेत् ॥

*ibid.*, p. 118.

यदा स्वरूपविज्ञानं पतितेति तदोच्यते ।

*Siddhāntasārāvalīvyākhyā* par Ananta Śivācārya, manuscrit de l'Institut Français d'Indologie, T. N°. 52, p. 230.

पूजाप्ररोचनं मूर्ध्नि त्रयं तत्त्वत्रयात्मकम् ।
तदिष्टग्रन्थिसंख्यान्तं शुभं कार्यं विपश्चिता

*ibid.*, p. 776.

ग्रन्थयस्तास्तु संख्यातास्तेष्वेवेति प्रलम्बिताः ।

*ibid.*, p. 778.

विभज्य मानसिद्ध्यर्थं शिरोऽष्टाग्निरसं स्मृतम् ।
भागं समन्ततो जाग्रत्पुषाख्ये सपादकम् ॥

*ibid.*, p. 850.

[1] cf. *Vāruṇapaddhati*, p. 87.

# INDEX DES DEMI-S'LOKA

## श्लोकार्धानुक्रमणिका


| | PAGE |
|---|---|
| **अ** | |
| अकामात्कामतः कुर्यात् | २४२ |
| अकृत्वा शिवभक्तानां | २१५ |
| अकेशादिमदग्रन्थि | १०७ |
| अग्निकार्योक्तविधिना | ९८ |
| अग्नीषोमात्मकावेतौ | ९८ |
| अघोरलोचनज्योतिः | ४० |
| अङ्गुष्टगर्भकौ पाणी | ४८ |
| अङ्गुष्ठादिषु तत्त्वं च | १८ |
| अङ्गुष्ठौ सर्वमन्त्राणां | ५० |
| अजातोऽधिपतिः प्रोक्तः | २४४ |
| अतोऽन्ये समयाचाराः | १८३ |
| अथ मुद्राः क्रियाङ्गत्वाद् | ४५ |
| अथ योनिषु सर्वासु | १५६ |
| अथाग्निकार्यं विदुषा | ५३ |
| अथाणोः पाशसंघात | १ |
| अथातो देशिकादीनां | २०६ |
| अथाधिवासयेच्छिष्यं | ८३ |
| अथाभ्यर्च्य महेशानं | ४० |
| अथार्चनादिसत्कर्म | ७ |
| अथार्चाभवने शुद्धे | १८ |
| अथेष्टसाधनी दीक्षा | ११९ |
| अथोत्तरेषां पाशानां | ११० |
| अथोर्ध्वमासां संसक्ते | ४६ |
| अथौदार्यदयादाक्ष्य | १८५ |
| अदीनं नातुरं नाथः | १८५ |
| अधश्शक्तेरनन्तस्य | ३ |
| अधिकारस्तु साम्राज्यं | १६३ |
| अधीत्य शृणुयाच्छास्त्रं | २२९ |
| अनध्याये स्वमन्त्रोक्त | २२४ |
| अनाहूतशिवं रक्षेत् | ६२ |
| अनुज्ञातश्चरेद्भैक्षं | २३१ |
| अन्तः शवश्रुतौ दाहे | २२६ |
| अभिसंधिकृताद्भेदाद् | १२३ |
| अभ्युन्नतदलप्रान्तं | १३० |
| अमृतत्वाप्तये तत्स्याद् | ९८ |
| अमृतीकृत्य दर्भेण | ६१ |
| अशोकाश्वत्थचूतादि | ९२ |
| अश्वत्थदलसंस्थान | ६८, १३१ |
| अष्टौ पूर्णान्विता दत्त्वा | १५९ |
| असौ नाथ त्वयाज्ञप्तो | १९४ |
| अस्त्रब्रह्मशिवैर्विघ्नान् | ९ |
| अस्त्रेण मृदमादाय | ८ |
| **आ** | |
| आग्नेये हृदयं दीप्तं | २६ |
| आढकीस्थूलया श्वेत | १२८ |
| आत्मविद्याशिवाख्यानि | १७४ |

| | PAGE |
|---|---|
| आददानोऽपरिज्ञानात् | २४७ |
| आधानमपि निष्पत्त्यै | १५७ |
| आप्यं चण्डासिधारादि | २१९ |
| आप्यायने घटाकारं | १३२ |
| आप्लुत्य परिवृत्यान्तः | १० |
| आभाति मूलसूत्रं तद् | २२३ |
| आभिषेचनिकं कर्म | १८४ |
| आमपात्रगताज्यस्य | ८५ |
| आम्नायोदितसंस्कार | १७७ |
| आवाहनं न संनिध्यै | ३७ |
| आवैदिकक्रियाव्याप्तेः | १८० |
| आसामन्यतमां दीक्षां | १२३ |

इ

| | |
|---|---|
| इति मनुपतिभर्तुः | ८१ |
| इति विधिविहिताभि | १७ |
| इति विलयहुताशा | ३८ |
| इत्थं सामयिकं कर्म | १०६ |
| इत्युक्तकृतसंस्कारं | ६१ |
| इत्युच्यमानसत्कर्म | १६७ |
| इत्येतत्ते सित | २०४ |
| इत्येतदुक्तमधि | ११७ |
| इध्मास्त्वस्फुटिता ऋज्व्यः | ७२ |
| इष्ट्वा प्रणम्य विज्ञाप्य | ५९ |
| इष्ट्वा शिवं पशोर्दीक्षां | १३९ |
| इष्ट्वा शिवं यजेत्साध्य | २३२ |
| इष्ट्वा संधाय यागोक्त्या | ६२ |
| इष्ट्वोक्तवन्महेशानं | १३९ |

ई

| | PAGE |
|---|---|
| ईशानस्य जपेल्लक्षं | २४४ |
| ईशानेनेशमालभ्य | १९० |
| ईषत्प्रहसितं पीतं | ३४ |

उ

| | |
|---|---|
| उत्कीर्णे पूरिते नीते | ५३ |
| उत्क्षेपार्थं हृदा तिस्रो | १६० |
| उत्तमाङ्गानि वक्त्रेण | २१ |
| उत्सृष्टवारिणा शक्तेः | १७ |
| उदङ्मार्गप्रवृत्तेऽर्के | १८८ |
| उद्धूलयेच्च सर्वाङ्गं | १५ |
| उद्वर्तनाङ्गसंस्कार | २३० |
| उपवीतं ततो दत्त्वा | १४३ |
| उपांशुना सुषुम्नायै | १०८ |

ऊ

| | |
|---|---|
| ऊर्ध्वप्राग्दक्षिणादीनि | २१ |

ए

| | |
|---|---|
| एकाङ्गुलौष्ठमुक्ताशा | ६८ |
| एकावरणको यागः | १३५ |
| एकीभूयाण्वधिष्ठानम् | ४३ |
| एताः कारकसाम्येऽपि | १२३ |
| एता मुद्रा मानसेज्यो | ५२ |
| एवं व्यक्तादिलिङ्गेषु | ३७ |
| एवं सदाशिवे तत्त्वे | १७३ |
| एवमाशाभृतोऽपि स्युः | २६ |
| एवमेव क्रियायोगाद् | १७१ |
| एवमेवाम्बिकासूर्य | १७२ |
| एवमेवैतदन्येषां | १६७ |
| एषां निशान्ते ज्यायस्त्वं | १२७ |
| एषामत्यर्थसक्तानां | ११७ |

| | PAGE |
|---|---|
| **ऐ** | |
| ऐशकोणे शिवप्रान्ते | ९१ |
| ऐशान्यां कल्पिते पीठे | १९१ |
| ऐश्वरी गन्धधीमूला | १६८ |
| **ओ** | |
| ओं निवृत्तिप्रतिष्ठायै | १६१ |
| ओं सृष्टये नम इति | १९२ |
| **क** | |
| कण्ठप्रावृतिनिष्ठीव | २३० |
| कदम्बकेतकीबिल्व | ७८ |
| कदम्बगोलकाकारं | १५७ |
| कनिष्ठामूलमार्गेण | ११ |
| कनिष्ठिकास्थूलमूला | ७२ |
| कन्यसां कन्यसाङ्गुल्या | ४६ |
| कन्यसानामिके चैषा | ४८ |
| कपिगुग्गुलुदन्तीश | ७८ |
| कमण्डल्वक्षसङ्माला | ३६ |
| करालं भीमनिर्ह्रादं | ९३ |
| करालमसितं पिङ्ग | ३४ |
| कर्णिकादिदलाप्रान्तं | १२९ |
| कर्णिकेशानभागस्थं | २५ |
| कर्तरीस्थाय चास्त्राय | १०० |
| कर्तर्यधिकृतं तद्वद् | ९३ |
| कर्मच्छिद्रे हुते शंभुम | १६२ |
| कर्मणोऽन्ते बलिं दत्त्वा | १९६ |
| कर्मण्यनिष्टभूयिष्ठे | ७७ |
| कर्म तत्कृच्छ्रवैराग्य | १४६ |

| | PAGE |
|---|---|
| कर्म यच्छिष्यविषयं | १०० |
| कर्म संजीवनं कुर्याद् | २१५ |
| कर्मस्वन्येषु चेष्टाप्त्यै | ३६ |
| कर्माणि क्षेत्रिकादीश | १४६ |
| कर्माण्यपि विचित्राणि | १४५ |
| कर्मोच्यते समासेन | १०७ |
| कर्षयेत्प्राणशक्त्यैव | १४२ |
| कलाः पञ्च निवृत्त्याद्या | १९२ |
| कलातत्त्वपवित्राणु | २०८ |
| कलादिभिर्नयेच्छुद्धिं | १७३ |
| कलावस्थानि तत्त्वानि | १४४ |
| कल्कस्य चन्दनादेश्च | ८० |
| कल्प्यस्तदुद्गतस्निग्ध | १६५ |
| कषायोदकसंसेकात् | ८६ |
| कष्टाकष्टपदान्तस्थे | १७१ |
| कस्थाने पञ्चगव्यादि | ९५ |
| कांस्ये वा भोजनं भैक्षं | २११ |
| का दीक्षा कानि चाङ्गानि | १४९ |
| कान्तारणिजदावाख्य | ५४ |
| कापालिसंक्रमे त्रीणि | २४५ |
| कामं चरेदनुज्ञातः | २३१ |
| कामदस्य प्रभोर्यागः | १३६ |
| कारणं ज्ञानमजितं | २२२ |
| कार्यस्तथैव संपातः | ९८ |
| कार्या पद्मोच्छ्रिता पूजा | १३४ |
| कासारगोशकृत्पिण्डा | ८० |
| किं तु कृत्यानुगार्णस्थैः | ८० |
| किं तु त्रिपञ्चसप्ताह | २०२ |
| किं तु देहवियोगार्थं | १७१ |

| | PAGE | | PAGE |
|---|---|---|---|
| किं तु पुंसवने बिन्दुम | ५६ | कृतरक्षः सरन्नलं | २३५ |
| किं तु संहितयाधारं | ९७ | कृतस्थापनविन्यास | १६२ |
| किं तु साध्यासनस्थस्य | १९९ | कृताणुतर्पणे तस्मिन् | २०२ |
| किं तु स्रग्गन्धधूपादि | १८१ | कृताह्निको यागगृहे | १२३ |
| किं तु स्वाहापदप्रान्तैः | ६३ | कृतेन शाखामुद्रेयं | ५१ |
| किं त्वावृतित्रयादेशम् | १३३ | कृतेरेवं पशोरर्थाः | १५१ |
| किं त्वैन्दवव्रतप्रान्ते | २४४ | कृतेष्टीन्प्रणतान्ब्रूयाद् | १८१ |
| कियद्भेदं प्रपन्नानि | १४५ | कृतोक्तकृत्यमत्यन्तं | १०४ |
| कीलके च रवीन्दुस्थे | २२६ | कृतोदकान्तसत्खातां | ८६ |
| कुण्डे हस्तमिते वृत्ते | ५३ | कृत्वाग्निं यजेत्प्राग्वत् | ९३ |
| कुण्डोक्तशुद्धियोगिन्यां | ९७ | कृत्वा पूर्वापरां रेखां | १२९ |
| कुम्भं तदनुगं यावत् | ९४ | कृत्वाभिमुखमाधाय | १०२ |
| कुम्भकेन परावस्थाम् | १५७ | कृत्वा शिवात्मकं हस्तं | ९० |
| कुम्भांश्च पञ्च तन्मन्त्रैः | १९० | कृत्वैवमर्चनं प्रान्ते | २८ |
| कुम्भे पुरे शिवाग्नौ च | १४३ | कृमिघ्नद्रव्यमिश्रेण | २०८ |
| कुर्यात्तदभिसंधानं | १४४ | कृष्णपक्षे चतुर्दश्यां | २१४ |
| कुर्यात्प्रतिग्रहं विद्वान् | २३९ | कृष्णां तु नैर्ऋते चूडां | २६ |
| कुर्यादवभृतं शम्भु | १८३ | केषामसत्ता सत्ता वा | १४५ |
| कुर्यादेवं देशिको | ४३ | क्रमव्युत्क्रमशो मध्ये | १९९ |
| कुशच्छलेन तन्नाडी | १०५ | क्रमशः प्रथमस्कन्धे | १९९ |
| कुशाग्निरोचिषा पूतं | ६० | क्रमशः सिद्धिमाप्नोति | २३८ |
| कुशेन शस्त्रजप्तेन | ९१ | | |
| कुशोदकं च तेनैव | ९१ | | |
| कृच्छ्रं वा प्रतिषण्मासं | २४८ | क्षयादिषु तिरोभावे | ३४ |
| कृतगणपतिभूत | १७ | क्षवर्णः क्षेत्रपालानाम् | ५ |
| कृतप्रणाममुत्थाप्य | १४१ | क्षिपेज्जलाञ्जलिं मन्त्र | १२ |
| कृतप्रणामोऽनुज्ञातो | २२९ | क्षीबाक्षा रक्तगौराभाः | १९८ |
| कृतप्रतिज्ञमुत्थाप्य | १९४ | क्षेत्रं दशाङ्गुलं त्यक्त्वा | ५८ |
| कृतमन्त्रासने पीठे | १९२ | क्षेत्रपालं च साध्याणुं | २३७ |

| | PAGE |
|---|---|
| क्षेत्रपालं स्वदिग्भागे | २४० |
| क्षेत्रस्थः प्रारभेत्कर्म | २३२ |
| क्षेत्रे यन्नास्ति तद्दूरात् | २४१ |
| क्षेमाद्यर्थं कस्यचित् | ४३ |
| क्षैरद्रुमं त्वचा युक्तम् | ११४ |

ख

| | |
|---|---|
| खड्गखेटधनुर्बाण | ३६ |
| खड्गवन्मन्त्रसंदीप्त्यै | १९५ |
| खरोष्ट्रीसूकरारोहो | १२५ |
| खेदनापायशमनं | २१६ |

| | |
|---|---|
| गङ्गादिसत्पयःस्पृष्ट | ८ |
| गङ्गार्कतनयासिन्धु | १५ |
| गच्छन्तं पृष्ठतो यायाद् | २६१ |
| गणनाथाम्बिके स्वामि | ३० |
| गणादिगा मनुभृतः | २६ |
| गणाध्यक्षं गुरुं चैव | २१८ |
| गणा नन्दिमहाकाल | २६ |
| गणा विमानगास्त्वक्षा | २७ |
| गणेशकमलास्वामि | ३० |
| गणेशवृषभस्कन्द | २३८ |
| गणेषु चण्डनाथस्य | १३१ |
| गदितमतुलमस्या | ३८ |
| गदिता एव परिघा | ४५ |
| गन्धमण्डलकं कृत्वा | ९२ |
| गर्भाधानं पुंसवनं | १७७ |

| | PAGE |
|---|---|
| गलांसोरःस्थलं पृष्ठ | २२ |
| गले नीलं पृथुस्कन्धं | ३६ |
| गवादिसद्रजोयोग | ८ |
| गव्यपात्राण्यपीमानि | ७४ |
| गव्यपूर्वं चरुं प्राश्य | ११६ |
| गायत्रीजप्तया शंभुम् | ७५ |
| गुग्गुलोर्महिपाक्षस्य | ८० |
| गुणानापादयेत्तत्र | १६६ |
| गुप्ताक्षसूत्रपूजाङ्गः | २३८ |
| गुप्तेष्टिकारको माया | २०१ |
| गुरवः पुत्रका ये च | २०९ |
| गुरुजङ्घानिविष्टाग्र | १०५ |
| गुरुतत्तुल्यबन्धूनां | २१४ |
| गुरुपादाम्बुजालब्ध | ८ |
| गुरोर्न कुर्यान्नो वादं | २३० |
| गुरौ मासं शिवीभूते | २२७ |
| गुर्वग्निशिवविद्याभ्यः | २३५ |
| गुह्यका भुजगा यक्षाः | २२० |
| गृहीत्वा योजयेत्सूत्रे | १११ |
| गृह्य नाडचैव तद्योनौ | १५७ |
| गोकर्णाप्रकमीशानां | १३१ |
| गोमूत्रं गोमयं क्षीरं | ९० |
| गोशकृद्द्रवपङ्काम्बु | १२६ |
| गोशकृन्मण्डले न्यस्त | १०१ |
| गोशकृन्मण्डले शस्त | ९६ |
| गोष्पदाभार्धविष्कम्भः | ६५ |
| गौरवं तन्मनोवृत्त्या | १६ |
| गौरास्तत्पुरुषस्कन्धम् | १९८ |
| गौरीवागीश्वरादीनां | १३१ |

**अमृतीकृत्य**—कराङ्गुलिदशकाभिमुखनाडीदशकप्रवाहिणा धेनुमुद्रारूपेण अमृतमयं कृत्वा, ५५

**अयने**—दक्षिणोत्तरे अयने, २१२

**अयुग्मच्छदः**—सप्तपर्णः, ७८

**अयुतम्**—दशसहस्राणि, २४२

**अयुतम्**—शिवास्त्रम्, २९

**अरणिः**—अग्न्युद्भवकाष्ठम्, ६४

**अरत्निः**—कनिष्ठान्तहस्तप्रमाणम्, ६९

**अरुणिताः**—भासुरीकृताः, १०४

**अर्कः**—द्वादश, ७५

**अर्कतनया**—यमुना, १६

**अर्कसंक्रमः**—संक्रान्तिदिवसः, २२५

**अर्गला**—कवाटरक्षाकारिणी, ८८

**अर्घ्यत्रयम्**—सामान्यार्घ्यम्, शिवार्घ्यम्, निरोधार्घ्यं च, ८९

**अर्घ्यपात्रम्**—हेमादिकृतं वर्तुलं द्वादशाङ्गुलविस्तीर्णम् अर्घ्यजलार्थं पात्रम्, ६४, ७४

**अर्घ्यम्**—शिरःसु देयमुदकम्, २४

**अर्घ्यम्**—शिवार्घ्यम्, २४, २८, ६४, ८९, विलोमार्घ्यम्, २९; निरोधार्घ्यम्, ३१, ३७

**अर्चनम्**—पूजा, २३६

**अर्चा**—पूजा, १८, १०६

**अर्चाभवनम्**—पूजागृहम्, १८

**अर्णः**—वर्णः, ८१, १७४

**अर्थः**—प्रयोजनम्, २१८

**अर्थः**—सुखदुःखमोहहेतुर्विषयः, १५०

**अर्धविष्कम्भः**—अर्धकृतवक्त्रविस्तारः, ६५, ७४

**अवकुण्ठ्य**—कवचेनावकुण्ठितं कृत्वा, ५५

**अवटः**—खातम्, ६५

**अवटः**—मुखम्, ६७

**अवटः**—श्वभ्रम्, ६४

**अवभृथः**—यज्ञाभिषेकः, १८४

**अवाङ्मुखौ**—अधोमुखौ, ६०

**अविद्या** क्लेशः, १०६

**अव्यक्तम्**—अनभिव्यक्ताङ्गं लिङ्गम्, २५१

**अव्यक्ताङ्गम्**—अनारोपितशार्वशरीरम्, २१

**अशनम्**—आहारः, १४२

**अशुद्धः**—मलादिपाशप्रतिबद्धस्वरूपः, १४९

**अश्नुते**—प्राप्नोति, २२५

**अश्वत्थः**—पिप्पलः, ६५

**अश्वमेधः**—सत्रविशेषः, १७९

**अष्टका**—पाकयज्ञः, १७८

**अष्टत्रिंशत्कलाः**—ईशानकलापञ्चकम्, तत्पुरुषकलाचतुष्टयम्, अघोरकलाष्टकम्, वामदेवकलात्रयोदशकम्, सद्योजातकलाष्टकं च, २२

**असहायवान्**—एकाकी, २२८

**असिः**—अस्त्रमन्त्रः, १८,४२,१००,१११, ११५,१४३,१५६,१५८,१५९

**असितः**—अशुद्धः, २०५

**असिताङ्गः**—अघोरः, ११५

**असितार्थः**—अशुद्धप्रयोजनम्, २०५
**असिद्धिः**—सिद्धिहानिः, १२६
**असुमार्गः**—प्राणवर्त्म, ३१
**अस्त्रकङ्कणः**—अस्त्रजप्तो दर्भकङ्कणः, ५५
**अस्त्रकुशः**—अस्त्रजप्तकुशः, ५८
**अस्त्रब्रह्मशिवाः**—अस्त्रब्रह्ममूलमन्त्राः, १०
**अस्त्रम्**—अस्त्रमन्त्रः, ९,१३,२६,२९,५३, ६३,९२,९७,१०१,११२,११६, १२७,२३५,२३९,२४०
**अस्त्रम्**—अस्त्रप्राकारः, १३९
**अस्त्रम्**—चक्रम्, पद्मम्, १३८
**अस्त्रशोधितम्**—उत्सारितविघ्नम्, ५४
**अस्त्राणि**—वज्राद्यायुधानि, २४१
**अस्त्रोक्षितम्**—अस्त्रमन्त्रेण प्रोक्षितम्, ६०
**अस्फुटिताः**—अविदारिताः, ७२
**अस्ववशः**—अनिच्छुः, २४८
**आकर्षणीमुद्रा**—सर्वाकृष्टिकरणी, ५१
**आक्रमणी**—उत्तरारणिः, ७५
**आक्रम्य**—अधिष्ठितं कृत्वा, ४३
**आक्ष्वेलितम्**—क्ष्वेलनिका, १२६
**आखोटकाः**—मुद्गराः, ८६
**आगमः**—शास्त्रम्, १०७
**आगमचोदितः**—शास्त्रश्रुतः, १०७
**आगामि**—भविष्यत्कर्म, १७०
**आग्नेयम्**—भस्मस्नानम्, १४
**आग्नेयम्**—शैवागमेषु रौद्रभेदः, २२२
**आग्रहायणी**—पाकयज्ञः, १७८
**आघट्टयेत्**—पिदध्यात्, १००
**आघारः**—तप्ताभिघारः, शीताभिघारश्च, ९८
**आचमनीयकम्**—आचमनीयार्थं मुखेषु देय-मुदकम्, २५
**आचार्यः**—देशिकः, १८४
**आचार्यकृत्यम्**—आगमचर्चा, अनुष्ठानाभ्यासः, भक्तेष्वनुग्रहः, शिवादिप्रतिष्ठा च, १९६
**आज्यकोशः**—पुष्करम्, ६७
**आत्मगुणाः**—अहिंसासत्यास्तेयादयः, १२१
**आत्मगुणाः**—दया, स्पृहा, अनसूया, शान्तिः, शौचम्, मङ्गलम्, अकार्पण्यम, अनायासः इत्यष्ट, १७९
**आत्मवान्**—आत्मयुक्तस्वरूपविश्रान्तः, ९५
**आत्मवान्**—सर्वात्मकतत्त्वभावनायुक्तः, १४४
**आत्मिकदेशिनी**—परा दीक्षा, १७१
**आदितः**—अकारमादौ कृत्वा, ६०
**आदित्यम्**—पुनर्वसुः, १८८
**आद्या**—अकारः आद्यः यस्याः सा, २
**आधानम्**—देहस्य निष्पत्तिः, १५०
**आधारः**—पीठम्, ३१
**आधाराङ्गानि**—अधश्छदनादीनि, ४
**आधेयम्**—हविर्यज्ञः, १७८
**आध्यात्मिककर्म**—अभिसन्धिरूपं वैराग्यात्मकं कर्म, १४६
**आनद्धम्**—वेष्टितम्, ९७
**आनलम्**—भस्मना स्नानम्, ८
**आनिलम्**—वायव्यं स्नानम्, ८

आनिलम्—वायव्यम्, ७२
आपादनम्—समर्पणम्, २००
आपादयेत्—उत्तेजयेत्, १६७
आप्यम्—पश्चिमम्, २१९
आप्लुतिः—स्नानम्, १२४
आभिचारिकम्—मारणोच्चाटनादि, ८०, १३३
आमयः—क्लेशः, १०४
आम्नायः—वेदः, १४६
आयतिः—आयामः, ६५
आयामः—दैर्घ्यम्, ६६
आयुधम्—अस्त्रमन्त्रः, १३९
आयुधानि—वज्रादीनि [वज्र-शक्ति-दण्ड-खड्ग-पाश-ध्वज-गदा-त्रिशूलानि] १९०
आरोग्यम्—निर्वृतिः, १०६
आर्षम्—शिवाज्ञया मुनिभिः संप्रणीतम्, २२०
आर्षलिङ्गम्—मुनिसिद्धपर्युपासितं लिङ्गम्, २३९
आर्हतः—[जैनः] २४४
आलब्धम्—अभिजप्तम्, ९३, ११६, १३०, १४३
आलब्धम्—चिह्नितम्, ९३
आलब्धम्—स्पृष्टम्, ८
आलभेत्—अभिमन्त्रयेत्, १९०
आलभेत्—मन्त्रालब्धं कुर्यात्, १०४
आवरणम्—कवचमन्त्रेण प्रावरणम, ९३
आवरणम्—शिवमण्डले हृदादिषडङ्गैः, विद्येश्वरैः, गणैः, लोकपालैः, लोकपालायुधैर्वा परमेश्वरस्य आवरणम्। शक्तिमण्डले कामेश्वरस्य शक्तिभिरावरणम्, १३५, १३६
आवाहः—आवाहनम्, ५०
आवाहनम्—सान्निध्यकरणम्, ३८
आवृत्—मन्थनरज्जुः ७५
आवृतः—आवरणैर्युक्तः, १३५
आवृतम्—अवकुण्ठितम्, २९
आवृतम्—कवचेन संवेष्टितम्, १०७
आवृतिः—प्राकारः, २४०
आवृतिः—मेखला, ६९
आवृत्य—कवचेनावकुण्ठ्य, ६०
आवेद्य—निवेद्य, १३
आशयः—भावः, १४२
आशाभृतः—शक्रादयो लोकपालाः, २६, २७
आशाश्रा—दिक्संख्याश्रा चतुरश्रा अष्टाश्रा वा, ६७
आश्रमी—ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाख्याश्रमचतुष्टयाद्यन्यतमस्मिन्नाश्रमे वर्तमानः, ९
आश्वयुजी—पाकयज्ञः, १७८
आसनम्—अर्धचन्द्रपद्मस्वस्तिकादि, २३६
आसनानि—विष्टराणि, ६४
आहितम्—निवेशितम्, १३९
आहुतिः—यागाग्नौ क्रियमाणो द्रव्यप्रक्षेपः, ६४
आहृताः—उपस्थापिताः, ६
आह्निकः—प्रत्यहं कार्यो विधिः, १२३, २४२
इज्याकृत्—पूजयिता, ६
इन्दुदिक्—उदीची, ११४

**इन्द्रः**—वज्रायुधो द्विरदवाहनश्च, २७
**इध्मा**—समित्, ६०, ७२
**इष्टः**—पूजितः, १०४, २२८, २४०
**इष्टः**—मनोहरः, १९८
**इष्टकर्म**—यागादौ दानम्, १४६
**इष्टद्वितयम्**—भुक्तिमुक्ती, ८१
**इष्टम्**—ईप्सितं भुक्तिमुक्त्यात्मकम्, २
**इष्टम्**—यज्ञेषु यद्दानम्, १७३
**इष्टम्**—शुभम्, ११४
**इष्टविग्रहः**—यत्र यत्र भुवने भोगाभिलाषः तत्र तत्र देहनिर्माणतोऽभिप्रेतभोगभोजनम्, १७१
**इष्टशंकरः**—पूजितपरमेश्वरः २२८
**इष्टिः**—अव्याप्त्यतिव्याप्तिपरिहारः, २२७
**इष्टिः**—पूजनम्, ८१
**इष्टिः**—शिवपूजा, १९५
**इष्टिकारकाणि**—पूजाङ्गानि, २०२
**इष्ट्वा**—अभ्यर्च्य, १३९, २३२
**ईशः**—अधिपतिः, ४
**ईशः**—ईशानः, ३३, ४८, १९०, १९२
**ईशः**—ईशानमन्त्रः, १३, १५
**ईशः**—परमेश्वरः, १०४
**ईशः**—शिवमन्त्रः, ८
**ईशतः**—ऐशान्यां दिशि, ९३
**ईशदिक्**—ईशानदिक्, ८४
**ईशपूतम्**—शिवमन्त्रपवित्रम्, ८
**ईशाः**—विद्येश्वराः, १३१
**ईशानः**—अनुग्रहकर्ता, ३३
**ईशानः**—त्रिशूलायुधो वृषभवाहनश्च, २२
**ईशानः**—लयकर्ता, १५८
**ईशानदिक्**—ऐशानी, ११४
**ईशानम्**—ईशानकलापञ्चकम्, २१
**ईशानाः**—मन्त्रेश्वराः, २२०
**ईश्वरः**—कारणेश्वरः, १४३, १४४, १६०, १६९
**ईश्वरः**—परमेश्वरः, ३८
**ईश्वराः**—रुद्राः, १३१
**ईश्वराः**—विद्येश्वराः, १३२
**उक्तिः**—अभिधेयम्, २१८
**उक्थ्यः**—सोमसंस्थः, १७९
**उक्षितम्**—प्रोक्षितम्, ६०
**उग्रं धाम**—उत्कृष्टं तेजः, ८१
**उच्चरन्**—जपन्, ५५
**उत्कीरणम्**—भूसंस्कारविशेषः, ५४
**उत्क्षेपः**—शुद्धस्यात्मनः पुनः स्वहृदि पूरकेण न्यासः, १६०
**उत्क्षिप्य**—उपसंहृत्य, २०२
**उत्तममन्त्राः**—शिवमन्त्राद्याः, २३३
**उत्तमोन्मानः**—अष्टोत्तरशताङ्गुलोच्छ्रायः, १८५, १८७
**उत्तरम्**—उत्तरकृत्यम्, १३
**उत्तरस्रोतांसि**—संमोहादीनि, २१९
**उत्तरोपायः**—समयाचारोलङ्घनप्रत्यवायनिराकरणविधिः, १७३
**उत्प्लवः**—आन्यभिमुखप्रेरणम्, ६०
**उत्सेधः**—उच्छ्रायः, ६९, ७५

**उदक्**—voir सौम्यम्
**उद्गीतम्**—प्रोद्गीतम्, २२२
**उद्गीथः**—प्रणवः, २५, २९
**उद्देशकम्**—उद्देशः, २२३
**उद्भवः**—नानाविधदेहोत्पादः, ३४
**उद्भवमुद्रा**—[आधानकरणी] १५७
**उद्वास्य**—परिश्राम्य, ६०
**उन्मील्य**—उत्पाद्य, १२९
**उपयोगः**—पूजादिः, ६
**उपलः**—उपलवर्षः, २२५
**उपवीतम्**—यज्ञोपवीतम्, १४३
**उपसंहरेत्**—विसर्जयेत्, ६३, २०२
**उपसर्गः**—शत्रुराजादिकृतं मारकादिकर्म, २०२
**उपांशुः**—स्वसंवेद्यलघुध्वनिः, ४२, १०८, २३२
**उभयात्मकम्**—व्यक्ताव्यक्तम्, २५१
**उमा**—आदर्शहस्ता सिंहवाहना च, २७
**उल्का**—दण्डाकारतेजोरूपा, २२५
**उल्लिखितम्**—भूसंस्कारविशेषः, ५४
**ऊर्ध्वकम्**—ऊर्ध्वस्रोतः, २२२
**ऊर्ध्वबिन्दुः**—अनुस्वारः, ५
**ऊर्ध्वस्रोतांसि**—कामिकादीनि ज्ञानानि, २१९
**ऊर्ध्वस्रोतोभेदाः**—दश शैवभेदाः, अष्टादशरौद्रभेदाः, २२१
**ऋज्व्यः**—स्पष्टाः, ७२
**ऋतुः**—षट् ६७
**एकतत्त्वदीक्षा**—voir शिवतत्त्वदीक्षा
**एकादशमन्त्राः**—शिववक्त्राण्यङ्गसहितानि, २४७
**एकीभूय**—एकीभावं विचिन्त्य, ४३
**एकोच्चारणम्**—सकृदुच्चारणम्, ३८
**ऐन्दवव्रतम्**—चान्द्रायणव्रतम्, २४४
**ऐन्द्री**—प्राची, ११४
**ऐश्वर्यम्**—अनन्तस्य सामर्थ्यविशेषः, ३
**ऐष्टिकम्**—वेदव्रतविशेषः, १७८
**ओंकारः**—voir अक्षरम् et प्रणवः
**ओष्ठः**—खाताधोवस्थितकटकाकृतिः कुण्डावयवविशेषः, ५३, ६८, ७०
**कणानि**—कम्बुकानि, ८०
**कण्ठप्रावृतिः**—उत्तरीयैः कण्ठवेष्टनम, २३०
**कन्यसा**—कनिष्ठाङ्गुलिः, ४६, ४८
**कपिः**—सिल्हकः, ७८
**कम्**—शिरः १०३
**करणम्**—इन्द्रियम्, १६०
**करणी**—सूत्रविन्याससाधनम, १२८
**करन्यासः**—अङ्गुलीषु मन्त्रन्यासः, १९
**करमानम्**—हस्तप्रमाणम्, १३०
**कर्तरी**—वर्धनी, ९३
**कर्म**—प्रारब्धम्, आगामि, संचितमिति त्रिविधम्, १७०
**कर्मदेवाः**—पाणिपादपायूपस्थाः; १६९
**कर्मभूमिः**—यागभूः, ९४
**कर्महस्तः**—दक्षिणः, १५
**कर्माणि**—लौकिकवैदिकाध्यात्मिकातिमार्गशैवाख्यानि, १४५

**कर्मेन्द्रियाणि**—वाक्पादपाणिपायूपस्थसंज्ञानि, १६९
**कर्षणीमुद्रा**—आकर्षणीमुद्रा, ५१
**कलशः**—कुम्भः, ९३
**कलशः**—सर्वाध्वशिरोरूपी, ११७
**कलशमुद्रा**—घटमुद्रा, १०
**कला**—अङ्गुलम्, ६७
**कलाः**—[अष्टत्रिंशच्छशिन्यादिकलाः], २१ २२
**कलाः**—तारा, सुतारा इत्याद्यष्टत्रिंशत्, २०४
**कलाः**—[निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीता इति पञ्च], ५८, १६४
**कलाः**—voir बैन्दव्यः कलाः
**कलाध्वदीक्षा**—निवृत्त्यादिकलाभेदभिन्ने सदाशिवतत्त्वे अधोवर्तिनमध्वानमुत्तरोत्तरक्रमेण संमेल्य शोधनम्, १७३
**कलाध्वा**—कलापञ्चकम्, १६४
**कलापञ्चकम्**—निवृत्ति-प्रतिष्ठा-विद्या-शान्ति-शान्त्यतीताख्यम्, १९३
**कल्कम्**—तुरुष्कादिः, ८०
**कल्प्यः**—अभ्यूह्यः, १२७
**कवाटः**—द्वारपिधानम्, ८८
**कषायोदकम्**—उदुम्बरवटहरीतक्यादिजलम्, ८६
**कष्टम्**—अशुभभोगात्मकम्, १७२
**कष्टाकष्टपदम्**—भवाभवपदम, १७१
**कस्थानम्**—ब्रह्मस्थानम, ९५, २४३
**कान्तः**—सूर्यकान्तः, ५५
**कामः**—काम्यः, १३४
**कामिकम्**—शैवागमेषु शैवभेदः, २२२
**काम्यः**—भौतिकः, विभूतियोगी वा, २१०
**कारकम्**—उपकरणम्, ३०, ८९, २३६, २४७
**कारकम्**—प्राकरणिकसूत्राधिकारकम्, २१८
**कारकसाम्यम्**—अङ्गयागसाम्यम्, १२३
**कारकाणि**—संभारादिसामग्री, १४८
**कारणम्**—शैवागमेषु शैवभेदः २२२
**कारणेश्वराः**—ब्रह्मा, विष्णुः, रुद्रः, ईश्वरः सदाशिवश्च, १४३, १४४, १६०, १६९,
**कालः**—भुवनेश्वरः, ४
**कालधाम**—कालाग्निः, ११०
**कालान्तमण्डलम्**—कालाग्न्यन्ताध्वमण्डलम्, ११
**कासारः**—क्षीरखण्डिकाघृतकृतो भोजनविशेषः, ८०
**किरणम्**—शैवागमेषु रौद्रभेदः, २२२
**कीलकम्**—कीलकाकृत्युत्पातः, २२६
**कीलकाः**—संधानकीलकाः, १३२
**कीलितम्**—आक्रान्तम्, २३९
**कुण्डनितम्बः**—कुण्डबुध्नभागस्तृतीया मेखला, ५८
**कुण्डपरिष्करणम्**—voir अक्षपाटः
**कुण्डम्**—अग्न्याधारः, ६४, ९७
**कुण्डम्**—चुल्ल्यादिः, ६१

**कुबेरः**—गदायुधः, निधिवाहनश्च, २७
**कुमारः**—voir स्कन्दः
**कुम्भः**—कलशः, ९३
**कुम्भकः**—प्राणापानसंरोधः, १५७
**कुम्भमुद्रा**—voir घटमुद्रा
**कुरुक्षेत्रम्**—पावनक्षेत्रम्, ८
**कूष्माण्डः**—भुवनेश्वरः, ४
**कृच्छ्रः**—प्राजापत्यचान्द्रायणादिः, २४९
**कृतकस्थानः**—कृतमूर्धप्रदेशः, ११६
**कृतरक्षः**—कवचास्त्ररक्षितः, १५
**कृत्यात्मकम्**—कामयितव्यवस्तुवत्, ३३
**कृत्यानुगुणम्**—काम्यानुगुणम्, ३२
**कृमिघ्नद्रव्यम्**—कटुतैलविडङ्गपारदादिद्रव्यम्, २०९
**कृष्टिः**—आकृष्टिः, ५१
**क्रिया**—पूजाजपादि, २११
**क्रिया**—स्थापननिरोधनाद्या, ४५
**क्रियाभूः**—भुवर्लोकः, १८०
**क्रियाव्यतिकरः**—क्रियाच्छिद्रम्, २४७
**क्रियाश्रयः**—व्याख्याक्रियाश्रयः, २१८
**क्रूरजातयः**—हुंफट्कारााद्याः, ११३
**क्लेशाः**—अविद्यादयः, १०६
**क्षतिः**—भङ्गः, १२६
**क्षमा**—अध्वभूः, ६
**क्षिपेत्**—निक्षिपेत्, ६४
**क्षिपेत्**—विकिरेत्, ९२
**क्षेत्रनेमिगाः**—इन्द्रादिलोकपालाः, २४१
**क्षेत्रपरिग्रहः**—साध्यमन्त्रजपार्थं परिगृहीतपवित्रस्थानम्, २३३
**क्षेत्रपालः**—नैर्ऋतस्थाने पूज्यः, २४१
**क्षीरद्रुमः**—क्षीरवृक्षावयवः, ११४
**खड्गः**—निर्ऋतेरायुधम्, २७
**खपुरम्**—गन्धर्वपुरम्, १२५
**खरद्युतिः**—चण्डरुचिः सूर्यः, ८७
**खातपरीक्षा**—भूपरीक्षाविशेषः, ८५
**खिलिः**—तैलनिर्यासः, ८०
**गणपतिः**—दंष्ट्रहस्तः, विमानगश्च, २७
**गणाः**—नन्दीश्वरादयः, २६, १९०
**गणाः**—विमानगाः, शूलभृतश्च, २७
**गणान्तः**—गणैकावरणयुक्तः, १३५
**गणाम्बिका**—कालान्ताध्वोपरि शक्तिः, १४२
**गण्डिका**—स्रुक्स्रुवयोरवयवविशेषः, ६७
**गदा**—कुबेरस्यायुधम्, २७
**गन्धः**—अगरुतुरुष्कादयः, २५
**गन्धः**—कर्पूरादिः, ९३
**गन्धालब्धम्**—कुङ्कुमचन्दनादिचिह्नितम्, ९३
**गरुडध्वजः**—विष्णुः, १३८
**गर्भाधानम्**—देहस्य निष्पत्तिः, १५०
**गर्भाधानम्**—संस्कारविशेषः, ५६
**गव्यम्**—पञ्चगव्यम्, ११६
**गव्यानि**—गोमूत्रम्, गोमयम्, गोक्षीरम्, दधि, सर्पिः, ९०
**गाणेश्वरम्**—शिवाज्ञया गणेश्वरैः संप्रणीतम्, २२०

**गायत्री**—कालान्तेऽध्वनि शक्तिः, १४२
**गुग्गुलुः**—धूपद्रव्यम्, ८०
**गुणः**—प्रणवः, ७३
**गुणाः**—आत्मगुणाः, १७९
**गुणाः**—मन्त्राः, १०६
**गुणाः**—सर्वज्ञताद्याः, १६३
**गुणोत्तमः**—मूलमन्त्रः, ११
**गुप्तम्**—कवचेनावृतम्, ६०
**गुप्तेष्टिकारकः**—गुप्ता इष्टिः पूजनं तत्कारकाणि अङ्गानि यस्य, २०२
**गुरुः**—आचार्यः, १४१, २०९
**गुरुः**—चोदकः, बोधकः, परश्च, १२
**गुरुः**—देशिकः, ४१
**गुरुतुल्याः**—गुरुपुत्रः वयोविद्याधर्मादिवृद्धाश्च, २१४
**गुरुसन्ततिः**—गुर्वाम्नायक्रमः, २१७
**गुह्यकाः**—भुजगयक्षदानवाः, २२०
**गोक्षणम्**—गोदानाख्यः संस्कारः, १७८
**गोमयम्**—गोशकृत्पिण्डम्, ५८
**गोशकृद्द्रवः**—गोमयनिष्यन्दः, १२६
**गोशकृन्मण्डलम्**—गोमयोपलिप्तमण्डलम्, १०१
**गोष्पदाभः**—गोष्पदप्रतिबिम्बाकृतिः, ६५
**गौरवम्**—गुरुचरणस्पर्शपवित्रितशिरोरूपं स्नानम्, ८
**गौह्यकम्**—शिवप्रेरितैर्भुजगयक्षदानवैः संक्षिप्योक्तम्, २२०
**ग्रासार्हम्**—कवलप्रमाणकम्, ८०
**घटः**—घटमुद्रा, ४५
**घटमुद्रा**—अभिषेकादिविधिपूरणी, ५२
**घटिका**—मण्डपाद्युपयोगिनी, ९९
**घनच्छदम्**—कवचाद्यावरणम्, २४१
**घनम्**—कवचम्, २९, ९७, १३९
**घर्षणम्**—श्लक्ष्णीकरणम्, ८७
**घोरः**—अघोरमन्त्रः, १३
**घोरः**—बहुरूपः, १२७
**चक्रम्**—छेद्यच्छेदकम्, २
**चक्रम्**—समूहः, २
**चङ्क्रमन्तम्**—चङ्क्रमणपरम्, २३०
**चण्डः**—चण्डेश्वरः, ६२, १८२
**चण्डनाथः**—चण्डेश्वरः, १३१
**चण्डेतरा क्रिया**—चण्डेश्वरहोमादृतेऽन्या क्रिया, ६२
**चण्डेशः**—चण्डेश्वरः १३१
**चण्डेश्वरः**—समयोल्लङ्घकानां क्रव्यादादियोनिषु नियन्ता परमेश्वर एव, १८२
**चतुर्मार्गः**—मध्ये प्रागुदङ्मुखैर्दर्भैश्चतुष्पथः, ५४
**चन्द्रः**—अर्धचन्द्रः, ३
**चन्द्रः**—मन्थस्य नाम, ७५
**चन्द्रज्ञानम्**—शैवागमेषु रौद्रभेदः, २२२
**चन्द्रमण्डलम्**—परमेश्वरपीठभूतपङ्कजकेसरनिविष्टम्, ४
**चरणम्**—आचरणम्, १८३

**चरुः**—हविः, ९८
**चर्या**—आचरणम्, १८३, २२९
**चलम्**—चललिङ्गम्, ५२
**चातुर्मास्यम्**—हविर्यज्ञः, १७९
**चातुर्वर्ण्यम्**—ब्राह्मणादिवर्णचतुष्टयम्, २११
**चान्द्रायणम्**—[शुक्लपक्षे चन्द्रकलानुरोधेन ग्रासवृद्धिः, कृष्णपक्षे च ग्रासह्रासः], २४९
**चालयेत्**—परिवर्तयेत्, ९७
**चित्**—आत्मा, २१,१०९,१४८,१५४, १५६,२१६
**चित्**—मन्त्रः, ३५
**चित्**—जन्तुः, १५६
**चित्**—संवित्तिः, ७, ८३
**चूडा**—शिखा, २६
**चूडा**—शिखामन्त्रः, २३
**चैत्री**—पाकयज्ञः, १७८
**चोदकाः**—प्रवर्तयितारः, १२
**छिद्रम्**—वाचिक-कायिक-मानसच्छिद्रनिवृत्त्यै होमः, १४२,१८०
**जटिलाः**—भौतिकाः, नैष्ठिकाश्च, २०७
**जन्म**—शक्तिसकाशात्पुंसां भोगभूमिषु संभवनम्, १५०
**जपः**—मानसः, उपांशुः, भाष्य इति त्रिविधः, क्रमेण उत्तमो मध्यमोऽधमश्च, २३३
**जाग्रति**—आदानव्यापारोद्युक्ते, ४२
**जातः**—सद्योजातः, ४६
**जातकर्म**—जातकर्मनामा संस्कारः, ५७
**जातिः**—नमस्कारादिः [नमः, स्वाहा, स्वधा, वषट्, वौषट्, हुं फट् इति षट्], ४
**जातिः**—मालती, ७७
**जातीशाः**—ब्राह्मणादिजातीनाम् अधिपतयः क्रमेण तत्पुरुषाघोरवामदेवसद्योजाताः, २४३
**जात्युपपदः**—हुंफट्कारादिजातियुक्तः, ६
**जीवः**—चैतन्यम्, ५६
**जृम्भणम्**—विदारितास्यगात्रविनमनम्, २३०
**ज्ञानम्**—अनन्तस्य सामर्थ्यविशेषः, ३
**ज्ञानेन्द्रियाणि**—त्वक्चक्षुःश्रोत्रजिह्वाघ्राणसंज्ञानि, १६९
**झषः**—वरुणस्य वाहनम्, २७
**टङ्कः**—परशुः, ७२
**टङ्काननाकारम्**—परशुमुखप्रख्यमर्धचन्द्राकारं कुण्डम्, ७२
**तत्त्वज्ञानम्**—परमार्थावबोधः, ७७
**तत्त्वदीक्षा**—तत्त्वशुद्धिः, १७४
**तत्त्वद्वितयम्**—शिवशक्ती, १७४
**तत्त्वनवकम्**—प्रकृतिपुरुषनियत्यादिशिवान्ततत्त्वनवकम्, १७४
**तत्त्वपञ्चकम्**—पृथिव्यादिपञ्चकम्, १७४
**तत्त्वमृतः**—तत्त्वेश्वरा ब्रह्मादयः, ४
**तत्त्वम्**—आत्मविद्याशिवाख्यम्, १९
**तत्त्ववर्त्म**—तत्त्वक्रमः, ४२
**तत्त्वसंहृतिः**—अधस्तनतत्त्वस्योत्तरस्मिन् संहृतिः, ३२
**तत्त्वादिधर्माः**—तत्त्वभुवनकलादयो गुणाः, १५८

**तत्त्वाध्वदीक्षा**—तत्त्वान्तर्भावेण सर्वाध्वशोधनम्, १७४

**तत्त्वानि**—पृथिव्यादिपरमशिवान्तानि षट्त्रिंशत्, ११,१४४,२०८

**तत्पुरुषः**—ब्राह्मणजात्यधिपतिः, २४३

**तत्पुरुषः**—भोगभोजकः, १५८

**तत्पुरुषः**—महाव्रतानामधिपतिः, २४४

**तत्पुरुषः**—स्थितिकर्ता, ३३

**तन्त्रम्**—शास्त्रम्, ३३, ९०, १५५

**तप्तकृच्छ्रः**—प्रत्येकं दिनत्रयमुष्णवारिक्षीरघृतपानं त्र्यहमुपवासश्च, २४९

**तमः**—मलम्, १२१

**ताडनम्**—अस्त्रमन्त्रेण तर्जन्या प्रहरणम्, १४३

**तारः**—नादः, १७२

**तारकः**—ओंकारः, १०, १०८

**तालः**—तालाख्यमुद्रा, ४५, ५२

**तालमुद्रा**—विघ्नापहा, ५२

**तिरोभावः**—यथेष्टाद्भोगादप्रच्यावः, ३४

**तीक्ष्णाग्रम्**—सुशितप्रान्तम्, १३१

**तृतीयः**—अघोरनाथः, १९८

**तृतीयार्घ्यम्**—रोधार्घ्यम्, ३१

**तैजसम्**—आनलम [भस्मस्नानम्], ७

**तैजसम्**—हेमादिलोहः, २४६

**त्याजयेत्**—क्षेपयेत्, १०३

**त्रयी**—ऋग्यजुःसामानि, ५८

**त्रयीप्रणेता**—ऋग्यजुःसाम्नां प्रवर्तको ब्रह्मा, ५८

**त्राणम्**—संसार्यनुग्रहः, २

**त्रिकलावटा**—त्र्यङ्गुलगम्भीरमुखा, ६७

**त्रितत्त्वदीक्षा**—आत्मविद्याशिवाख्यतत्त्वत्रयव्याप्त्या सर्वाध्वशुद्धिः, १७४

**त्रिफलम्**—हरीतक्यामलकविभीतकाख्यफलत्रयम्, २०९

**त्रियोनयः**—वाङ्मनःकायलक्षणानि छिद्राणाम् उद्भवस्थानानि, ११५

**त्रिशिखीमुद्रा**—त्रिशूलमुद्रा, ४७

**त्रिशूलम्**—ईशानस्यायुधम्, २७

**त्रिशूलम्**—त्रिशूलाख्या मुद्रा, ४८

**त्रिशूलमुद्रा**—दुष्टदमनी, ४७

**त्रिशूलमुद्रा**—शूलमुद्रा, २७, ४७

**त्रिसीम**—आत्मविद्याशिवाख्यतत्त्वत्रयविभागयुतम्, ५६

**त्र्यश्रम्**—त्रिकोणम्, ७२

**त्वरावान्**—शैघ्र्यार्थी, ७६

**त्वाष्ट्रम्**—चित्रा, १८८

**दक्षिणनाडी**—[पिङ्गला] १०७

**दक्षिणस्रोतांसि**—असिताङ्गादीनि, २१९

**दण्डः**—यमस्यायुधम्, २७

**दन्तकाष्ठम्**—दन्तधावनकाष्ठम्, ११४

**दन्तधावनम्**—दन्तकाष्ठम्, ११४

**दन्ताः**—द्वात्रिंशत्, १३७

**दन्तीशमदः**—गजदाननिष्यन्दः, ७८

**दया**—आत्मगुणः, १७९

**दर्पणाकारा**—आदर्शोदराभा, ८७

**दर्शम्**—हविर्यज्ञः, १७८

**दलनम्**—विघ्नविसरणम्, १७
**दाढर्यापादनम्**—भूसंस्कारविशेषः, ५४
**दार्विकम्**—वेदव्रतविशेषः, १७८
**दावः**—वनदाहः, ५५
**दिक्**—दश, ३६
**दिगीश्वराः**—इन्द्रादिदिक्पतयः, २४०
**दिग्भुजः**—दशभुजः, ३६
**दिग्भृतः**—इन्द्रादयः, ४
**दिग्भृतः**—लोकपालाः, १३१
**दिङ्नाथाः**—इन्द्रादिदिक्पतयः, ९५
**दिनार्धसवनम्**—माध्याह्निकम्, २३४
**दिव्यम्**—भाभसम् [सूर्यवृष्ट्या स्नानम्], ७, ८
**दिव्यम्**—शिवाज्ञया देवैः संप्रणीतं तन्त्रम्, २२०
**दिव्या नाडी**—पराशक्त्याश्रया सुषुम्ना, १०७
**दिव्या वृष्टिः**—अम्भोमयी अनभ्रा वृष्टिः, १६
**दीक्षा**—कर्मवासनाक्षपणपूर्वकं ज्ञानदानेन भुक्तिमुक्तिफलसाधनी, अशुद्धस्य इष्टसाधनी शुद्धिः, ११९
**दीक्षा**—पाशच्छेदः, १५५
**दीक्षा**—मलादिपाशप्रतिबद्धरूपस्यात्मनो मन्त्रप्रभावतस्तद्व्युदासेन स्वरूपाभिव्यञ्जनम्, १४९
**दीक्षाभेदाः**—तत्त्वाध्वदीक्षा, वर्णाध्वदीक्षा, पदाध्वदीक्षा, मन्त्राध्वदीक्षा, भुवनाध्वदीक्षा, कलाध्वदीक्षा इति षट्, १७४
**दीप्तम्**—शैवागमेषु शैवभेदः, २२२
**दुष्टौघवारकम्**—विघ्नसमूहप्रशमनम्, ९४
**दृक्**—ज्ञानम्, १९, २१, १०९
**दृक्**—द्वे, ७९
**दृक्क्रिया**—ज्ञानक्रिया, १६४, २०६
**दृक्क्रियामण्डलम्**—ज्ञानक्रियात्मकं स्वरूपम्, २१
**दृक्क्रियाशक्तिः**—ज्ञानशक्तिः, १०९
**दृगङ्गुलाः**—द्व्यङ्गुलाः, ७९
**दृढा**—अभङ्गुरा, ९७
**दृढा**—दृढीकृता, ९२
**देवाः**—विद्येश्वरगणेश्वरलोकपालाः, १३८
**देशिकः**—आचार्यः, ४३, १८४, १८५, १९५, २०७
**देशिकः**—गुरुः, ११४, १४१, २०२
**देशिकादयः**—आचार्यपुत्रकसाधकसमयिनः, २०७
**देशिकोत्तमः**—गुरुः, १०१
**देहनिष्कृतिः**—देहनिष्पत्तिः, १५०
**दैत्यांशः**—नैर्ऋतस्थानम्: ९२
**दैत्याशा**—नैर्ऋतदिक्, ५३
**द्युतिविभवः**—वामादिशक्तिमहिमा, ३८
**द्वादशान्तम्**—[शिरस उपरि द्वादशाङ्गुलादूर्ध्वम्] १०९
**द्विजः**—अदीक्षितब्राह्मणादिः, २४३
**द्विजसत्तमः**—मुनिप्रवरः, २
**द्विजेन्द्राः**—ब्राह्मणक्षत्रियविशः, १४१
**द्वितत्त्वदीक्षा**—शिवशक्तितत्त्वद्वयान्तर्गतसर्वाध्वशुद्धिः, १७४

**द्विरदः**—इन्द्रस्य वाहनम्, २७
**धर्मः**—अनन्तस्य सामर्थ्यविशेषः, ३
**धर्मज्ञानादयः**—अनन्तसामर्थ्यविशेषाः, ३
**धर्मेशः**—यमः, ६१
**धर्मेशदिक्**—याम्यदिक्, ६१
**धान्यम्**—यवादिकम्, ७८
**धाम**—कुण्डम्, ६०
**धाम**—तेजः, १६३, १६६, २२४
**धाम**—निवासः, २४०
**धाम**—पूजाश्रयमण्डलम्, १३९
**धाम**—मूलमन्त्रः, १९
**धाम**—यागगृहम्, १७
**धाम**—मण्डलकलशाद्यधिकरणम्, १८०
**धाम**—स्वदृक्क्रियात्मकं तेजः, १५४
**धामपतिः**—तेजसां पतिरग्निः, १०२
**धारणानि**—पार्थिवप्रभृतीनि, ४, ५
**धूमनिर्गमाः**—गवाक्षजालचन्द्रशालिकाभित्तिवारणादयः, ८८
**धेनुः**—धेन्वाख्यमुद्रा, ४९
**धेनुमुद्रा**—अमृतीकरणी, ईशानसंनिधापनी वा, ४९, ५५
**ध्यानम्**—रूपचिन्तनम्, ३२
**ध्रुवः**—अविचलितसंनिवेशो देवताविशेषः, ८७
**ध्वंसः**—विशरणम्, १२६
**ध्वजः**—वायोरायुधम्, २७
**नक्षत्रभर्ता**—सोमः, ५७
**नतिः**—नमस्कारः, ३
**नतिः**—नमस्कारमुद्रा, २८, ५०
**नमस्कारमुद्रा**—मन्त्रसांनिध्यकरणी, ५०
**नरः**—तत्पुरुषः, २५, १९०
**नरः**—तत्पुरुषमन्त्रः, ९
**नवतत्त्वदीक्षा**—प्रकृत्यादिशिवान्ततत्त्वनवकान्तर्भावेण सर्वाध्वशुद्धिः, १७४
**नाडी**—[इडा, पिङ्गला, सुषुम्ना] १०७, १०८
**नाडीसन्धानम्**—[दर्भकाण्डद्वारा देहद्वये मूर्तिद्वये वा स्थितानां नाडीनां विलयनभावना], १०५
**नाथाः**—कारणेशाः, १४४
**नादः**—अनाहतपरध्वनिः, २
**नादः**—हकारः, ३
**नाभसम्**—दिव्यम्, सूर्यवृष्ट्या स्नानम्, ८
**नाभिः**—पिप्पलपत्राकृतिः होतुरग्रावस्थितः कुण्डावयवविशेषः, ५३, ६९
**नाभ्यादयः**—नाभ्योष्ठमेखलाः, ५३
**नाम**—नामकरणकर्म, १७७
**नामकरणम्**—संस्कारविशेषः, ५६
**नायकाः**—कलाध्वभुवनाध्वाद्यधिपतयः, १९५
**नाहः**—वेष्टनम्, ६७
**निकुब्जः**—शुक्त्याकृतिः पाणिः, ७९
**नितम्बमेखला**—कुण्डबुध्नभागस्थतृतीयमेखला, ५८
**नित्यकम्**—नित्यकर्म, ८०
**निदध्यात्**—उपवेशयेत्, १०५
**निदध्यात्**—स्थापयेत्, ११३
**निधिः**—कुबेरस्य वाहनम्, २७

**नियामिकाः**—साङ्केतिकाः, १११
**निरपेक्षदीक्षाभाक्**—समयाचारानुष्ठानासमर्थः, १६७
**निरपेक्षा**—समयाचारानुष्ठानानपेक्षिणी, १२१
**निरोधनीमुद्रा**—निष्ठुरमुद्रा, ४५
**निरोधार्घ्यम्**—voir रोधार्घ्यम्
**निरोधिका**—निरोधशक्तिः, १६२
**निर्ऋतिः**—खड्गायुधः, निशाचरवाहनश्च, २७
**निर्घातः**—आन्तरिक्षः शब्दः, २२५
**निर्वाणदीक्षा**—कर्मदाहात्सद्यो मुक्तिदायिनी, १२१
**निर्वाणे**—उपशान्ते, ६३
**निर्विघ्नः**—अप्राप्तविघ्नः, ८
**निर्वृत्तः**—संपादितः, ६७
**निवृत्तिकला**—ब्रह्माण्डान्ताधिष्ठाना, ११०
**निशाचरः**—निर्ऋतेर्वाहनम्, २७
**निशान्तम्**—प्रभातसमयः, १२७
**निश्वासम्**—शैवागमेषु रौद्रभेदः, २२२
**निष्कृतिः**—दीक्षा, १५५
**निष्कृतिः**—निष्पत्तिः, १५०
**निष्कृतिः**—पाशसंघातशक्तिसंरोधरूपा, १५५, १७५
**निष्कृतिः**—विशेषशुद्धिः, १५१,१५२
**निष्क्रामः**—चन्द्रार्कदर्शनार्थं बहिर्निष्क्रमणाख्यः संस्कारः, १७८
**निष्ठा**—कैवल्यम्, १२०
**निष्ठा**—मुक्तिः, १०७
**निष्ठीवः**—मुखपानीयनिरसनम्, २३०
**निष्ठुरमुद्रा**—सर्वमन्त्रसंरोधनी, ५०
**निष्ठुरा**—निष्ठुराख्यमुद्रा, ५०
**नृकम्**—पुरुषोत्तमाङ्गम्, ३७
**नृविग्रहमन्त्रः**—देववाचकमन्त्रः, ४१
**नेत्रम्**—नेत्रमन्त्रम्, १०२
**नेत्रम्**—नेत्रमन्त्राभिमन्त्रितवासः, १०२
**नेत्रोद्घाटनम्**—नेत्रोन्मीलनम्, १०३
**नेमिः**—मेखला, ६९
**नैमित्तिकं कर्म**—प्रतिष्ठादीक्षाभिषेकादि, ६९
**नैमिशम्**—पावनक्षेत्रम्, ८
**नैष्ठिकव्रती**—शरीरपातान्तंव्रतनिर्वाहकः,२०९
**नैष्ठिकी**—नैर्वाणिकी, १२०
**नैष्ठिकी**—मुक्तिसाधनी, ११९
**नौयानम्**—परराष्ट्रादिजिगीषया अर्थाहरणेच्छया वा सागरादौ नौयानम्, ७६
**न्यायवर्ती**—शास्त्रानुष्ठानपरः, ११७
**पङ्कजम्**—पद्ममुद्रा, ४८
**पङ्कजाङ्गचतुष्टयम्**—कर्णिकाकेसरदलदलाग्रम्, १२९
**पङ्कजाङ्गानि**—कन्दबीजाङ्कुरादीनि, ४
**पञ्चकृत्यानि**—सृष्टिस्थितिसंरक्षणादानानुग्रहाख्यानि, १०३
**पञ्चकेश्वरः**—सदाशिवः, १७१
**पञ्चगव्यम्**—गोमूत्रं, गोमयं, क्षीरं, दधि, सर्पिः, ९०
**पञ्चतत्त्वदीक्षा**—पृथिव्यादिपञ्चतत्त्वव्याप्त्या शुद्धिः, १७४
**पञ्चमन्त्राः**—सद्योजातादिपञ्चमन्त्राः, १९७

**पञ्चवर्गः**—पञ्चविंशतिः, १३७

**पञ्चशाखा**—पञ्चाङ्गुलिसमुदायः, ७८

**पञ्चस्कन्धात्मकः**—लोकवेदाध्यात्मिकातिमार्गशैवाख्यः निवृत्त्यादिकलापञ्चकव्या-सः, ईशानतत्पुरुषाघोरवामदेवसद्योजातात्मकोऽध्वा, १९७

**पञ्चस्रोतांसि**—ऊर्ध्वदक्षिणोत्तरप्राच्यपश्चिमस्रोतांसि, २१९

**पञ्चांशवर्जितम्**—चतुरंशक्षेत्रमानम्, १८१

**पतयः**—गणेश्वरादयः, ४

**पतिः**—परमेश्वरः, ३९,१३५,१४०

**पतिः**—महेशानः, १०१

**पतिप्रान्तः**—विद्येशावरणयुक्तः, १३५

**पतिमनुमण्डलम्**—शिवमन्त्रचक्रम्, १७

**पत्रम्**—दलम्, १३०

**पदाद्यन्तयुक्**—प्रणवहुंफड्स्वरूपाभ्यामाद्यन्तयोर्युक्तः, १११

**पदाध्वदीक्षा**—मातृकापदभेदभिन्नस्याधरस्याध्वन उत्तरोत्तरस्मिन् योजनतः शोधनम्, १७४

**पद्ममुद्रा**—शक्त्युद्दीपनी, ४८

**पद्मावृतिः**—व्योमरेखा, १३७

**परं वक्त्रम्**—ईशानवक्त्रम्, ५९

**परमनिष्कृतिः**—दीक्षा, १५५

**परमनिष्कृतिः**—पाशच्छेदः, १५५

**परमपदम्**—परमेश्वरः, १८०

**परमेशार्चनम्**—शिवार्चनम्, ३०

**परवाक्**—voir शक्तिः

**परसिक्तः**—अन्याभिषिक्तः, २२८

**पराकः**—द्वादशाहं निराहारता, २४९

**परा शुद्धिः**—दीक्षा, १५५

**परिघः**—परिघामुद्रा, ४८,५१

**परिघामुद्रा**—विघ्नौघविघातकरणी, ५१

**परिच्छदः**—परिवारः, ३०

**परिधयः**—कुण्डपरिष्करणशाखाः, ५८,७२

**परिस्रुतिः**—आज्यनिर्यासधारामुखम्, ६८

**परे**—अनुग्रहकृतः, १२

**परोऽर्घ्यः**—तृतीयार्घ्यः [रोधार्घ्यः], ३७

**पर्णिः**—श्रीपर्णिः, ६५

**पर्यग्निकरणम्**—आज्यसंस्कारः, ६०

**पर्व**—ग्रन्थिः, ११४

**पर्ववत्**—इक्षुकाण्डादि, ७९

**पवित्रपात्रम्**—आज्यसंस्काराङ्गं पात्रम्, ६४

**पवित्रम्**—आज्यसंस्काराङ्गम्, ६४

**पवित्रम्**—पवित्रारोहणम्, पवित्रोत्सवः, २२६

**पवित्रम्**—प्रादेशदीर्घे दर्भाग्रे द्विगुणीकृते परस्परं श्लिष्टमध्ये ग्रथितप्रान्ते च कृत्वा विघ्नदोषापहं पवित्रं जायते, ७३

**पवित्रविधिः**—समयलोपादिजसकलछिद्रापहो नित्याङ्गभूतः प्रायश्चित्तात्मको विधिः, २५०

**पवित्राणवः**—सद्योजातादिमन्त्राः पञ्च, २०८

**पवित्राणि**—[शास्त्रोक्तविधिना निर्मितान्यभिमन्त्रितानि च क्षौमादिकृतनवगुणसूत्रादीनि] २५०

**पशुः**—अदीक्षितः, १०३,२१८,२२७, २४६

**पशुः**—दीक्ष्यः, १३९,१५२
**पशुबन्धः**—हविर्यज्ञः, १७९
**पशुशान्तिः**—पशुदर्शनप्रथिताः शान्तयः, १८४
**पश्चाच्चापः**—वारुण्यां दिशीन्द्रधनुः, २२५
**पश्चिमः**—सद्योजातः, १९९
**पश्चिमस्कन्धः**—सद्योजाताध्वा, १९९
**पश्चिमस्रोतांसि**—चण्डासिधारादीनि, २१९
**पश्वर्घ्यम्**—शरीरप्रोक्षणार्थम्, आत्मोपचारार्थं च, ९०
**पाकयज्ञाः**—अष्टका, पार्वणी, श्राद्धं, श्रावणी, आग्रहायणी, चैत्री, आश्वयुजी चेति सप्त, १७८
**पाणिः**—अञ्जलिः, २००
**पाणिपूरकम्**—प्रसृताङ्गुलिपाणिपूरकत्वेन समन्ताद् द्वादशाङ्गुलत्वम्, ७४
**पाणियोगिता**—विवाहाख्यः संस्कारः, १७८
**पातकानि**—तत्तद्द्रव्यापहरणनिषिद्धान्नभक्षणादीनि, २४७
**पादार्थिकः**—आर्हतः, २४४
**पाद्यम्**—[पादप्रक्षालनार्थं जलम्], ५४
**पारमेश्वरम्**—शैवागमेषु रौद्रभेदः, २२२
**पारिव्राज्यम्**—परिव्राड्व्रतम्, १७९
**पार्थिवम्**—गङ्गादिमृदा स्नानम्, ८
**पार्वणी**—पाकयज्ञः, १७८
**पालाः**—द्वारपालाः, १७
**पावनक्षेत्रम्**—प्रभासनैमिशकुरुक्षेत्रादि, ८
**पाशः**—मायेयाणवकर्मरूपः [स त्रिविधः आगामिप्रारब्धसंचितरूपः], २, १०१, १०८, १७०
**पाशः**—[मोक्षप्राप्तिप्रतिबन्धकः] सहजागन्तुकलक्षणः, १०४
**पाशः**—वरुणस्यायुधम्, २७
**पाशच्छेदः**—पाशानां निरोधनम्, तत्प्रतिबन्धकत्वनिवृत्तिः, १५५
**पाशच्छेदः**—पाशाश्रयत्वेन प्रावृतानां सूत्राणां छेदः, १०८
**पाशजालम्**—आणवकर्ममायीयरूपम्, २
**पाशवी**—मायेया, १९
**पाशसंघातः**—पाशजालम, २,१५४
**पाशातीतः**—पाशेभ्य उत्तीर्णः, १६४,१६५
**पाशाधिकारः**—सकलजगद्बन्धनम्, १५५
**पाशान्तम्**—द्वादशान्तम्, १०९
**पिण्डी**—सक्त्वादिकृता, ८०
**पिण्याकम्**—तैलनिर्यासः, ८०
**पितामहस्थानम्**—ब्रह्मस्थानम्, ३०
**पीठम्**—परमेश्वरासनं पद्मम्, १३०
**पीडनम्**—मर्मोद्घाटनदेहताडनधनापहरणैहिंसा, २२९
**पुंनिर्वीजितानि**—तत्पुरुषमन्त्रेण उत्तेजितानि, १४
**पुंसवनम्**—संस्कारविशेषः, ५६
**पुण्यक्षेत्रम्**—पवित्रक्षेत्रम्, २३२
**पुत्रकः**—समयित्वे स्थितो निस्पृहः, २०४
**पुत्रकः**—समयाचारनिष्ठो मोक्षार्थी गुरुगृहवासी स्वगृहवासी वा, २०३

**पुद्गलः**—आत्मा, १११, १६५
**पुमान्**—तत्पुरुषः, १४
**पुरम्**—भुवनम्, १७५
**पुरम्**—मण्डलम्, ११७,१३०,१३४, १३८,१४१,१८०,१८१
**पुरम्**—यागमण्डलम्, १२८
**पुरुषः**—तत्पुरुषः, ३२
**पुष्करम्**—आज्याश्रयणपात्रम्, १६५
**पुष्करम्**—स्रुचि घृतकोशः, ६६
**पुष्पपरीक्षा**—भूपरीक्षाविशेषः, ८५
**पूजा**—अर्चनम्, २३६
**पूजा**—voir aussi समुदिता पूजा
**पूजाङ्गम्**—पूजोपकरणम्, २३८
**पूजास्थानानि**—स्वदेहः, स्थण्डिलम्, अर्घ्यपात्रम्, चललिङ्गम्, स्थिरलिङ्गम्, चित्राकृतिः, विद्यापीठम्, ५२
**पूतः**—पावितः, ८
**पूता**—पवित्रिता, ८
**पूरणम्**—भूसंस्कारविशेषः, ५४
**पूर्णा**—पूर्णाहुतिः, ६३,९९,१००,१०६, १४१,१४२,१५९,१६३
**पूर्तम्**—वापीकूपतटाकादिप्रतिष्ठा,१४६,१७३
**पूर्वतः**—प्राच्याम्, ७२
**पृथुत्वम्**—विस्तारः, ६९
**पृथ्वी**—विपुला, १३४
**पौर्णमासिकम्**—हविर्यज्ञः, १७८
**पौष्टिकम्**—पुष्टिनिमित्तं कर्म, ७२,७८,८०
**प्रकृतिः**—मुख्ययागः, १३६
**प्रजननम्**—अग्न्युत्पादकशङ्कुः, ७५
**प्रजासृट्**—ब्रह्मा, १७३
**प्रणतिः**—नमस्कारमुद्रा, २४
**प्रणवः**—ओंकारः, ३, ४, ४१, ९३,९७, १०५, १४०, १६५, १९२
**प्रणवपीठम्**—प्रणवकल्पितं पीठम्, १०५
**प्रणवविग्रहः**—प्रणवाकारः, २१८
**प्रणवासनम्**—प्रणवेनासनन्यासः, १०१, १०२, १४०
**प्रणवास्त्रम्**—प्रणवपूर्वास्त्रमन्त्रः, १४७
**प्रणालः**—आज्यनिर्यासः, ६७
**प्रणीतापात्रम्**—आज्याधिश्रयणार्थं होम्यानां च पात्रम्, ७४
**प्रतिपुरम्**—प्रतिभुवनम्, १७५
**प्रतिष्ठा कला**—अतत्त्वान्तव्यापिका नाभ्यन्ते योज्या, ११०
**प्रत्यालभ्य**—अभिजप्य, ५५
**प्रथमः**—ईशानः, १९९
**प्रथमस्कन्धः**—ईशानाध्वा, १९९
**प्रदोषः**—निशारम्भः, १२७, २४०
**प्रपूर्वाः पितामहाः**—प्रपितामहाः, १२
**प्रबोधः**—दीपनम्, ११३
**प्रभासम्**—पावनक्षेत्रम्, ८
**प्रभुः**—परमेश्वरः, २७
**प्ररोचनी**—उद्दीपनी, ४६
**प्रलयः**—कल्पान्तम्, ५८
**प्रलेपनम्**—भूसंस्कारविशेषः, ५४
**प्रवराधिपाः**—वसिष्ठादयः, ११

**प्रसिद्धिः**—प्राप्तिः, १२५

**प्राक् शम्बरः**—आद्यो मन्त्रः सद्योजातः, १४

**प्राग्गृहस्थः**—पूर्वं गृहस्थः उत्तरकालं गार्हस्थ्य-त्यागापेक्षी, २१०-२११

**प्राग्धनुः**—पूर्वदिवस्थेन्द्रधनुः, २२५

**प्राचीनमस्तकः**—प्राक्शिरस्कः, ११६

**प्राच्यस्रोतांसि**—स्रोतलादिज्ञानानि, २१९

**प्राजापत्यकृच्छ्रः**—त्र्यहमेकभुक्तम्, त्र्यहमयाचितभुक्तम्, त्र्यहं नक्तभोजनम्, त्र्यहमुपवासश्च, २४९

**प्राजापत्यम्**—रोहिणी, १८८

**प्राणबलम्**—प्राणशक्तिः, १६५

**प्राणशक्तिः**—पूरकप्रयोगः, १६०

**प्राणायतिः**—प्राणायामः, २४६

**प्रादेशः**—प्रसृततर्जन्यङ्गुष्ठः संकुचितान्याङ्गुलिः पाणिः, ७३,७९

**प्रायश्चित्तम्**—[पातकानां क्रियाच्छिद्राणां वा निवृत्त्यै शान्तये वा व्रतजपहोमाद्यनुष्ठानम्], २४८

**प्रारब्धम्**—देहधारकं कर्म, १७०

**प्राशनम्**—संस्कारविशेषः, १७७

**प्रासादः**—[मूलमन्त्रः] १०२

**प्रेतभर्ता**—यमः, ५७

**प्रोक्षणम्**—अभ्युक्षणमस्त्रमन्त्रेण, १४३

**प्रोक्षयेत्**—अभ्युक्षयेत्, ३०, १०१

**प्रोक्ष्य**—अभ्युक्ष्य, ६०, १०७, १४०

**प्रोत्क्षेपः**—[दीक्षाङ्गम् उत्क्षेपः] १५०

**प्रोद्गीतम्**—शैवागमेषु रौद्रभेदः, २२२

**प्लुतिः**—अपराधः, १६८

**बलद्वयम्**—मायाख्यं रोधनाख्यं च शक्तिद्वयम, १५२

**बलम्**—कवचम्, २३, २६

**बलम्**—दीक्षा [पाशच्छेदः] १५५

**बलसिद्धिः**—वीर्यसाधनम्, ७६

**बलिः**—[दिव्यान्तरिक्षभौमेभ्यो भूतेभ्यो बहिर्दीयमानं चर्वादि], ९५, ११६

**बलिः**—नैवेद्यम्, २४०

**बलिः**—विलेपनधूपस्रक्प्रधानः, २३६

**बहिः पूजा**—बाह्यार्चनम्, २९

**बहुरूपः**—अघोरनाथः, ३३, ४७

**बहुरूपः**—अघोरमन्त्रः, १००, १५८,१९०

**बहुरूपम्**—अघोरकलाष्टकम्, २२

**बहुरूपी**—अघोरमन्त्रः, २४३

**बाणलिङ्गम्**—त्रिपुरीनर्मदाप्रवाहादिपरिगृहीतम्, २३९

**बाहुमात्राः**—बाहुप्रमाणदैर्घ्याः, ७२

**बाह्याङ्गम्**—द्रव्यक्रियादि, १५९

**बाह्यावृतिः**—बाह्यप्राकारः, २४०

**बिन्दुः**—अनुस्वारः, ३

**बिन्दुः**—अन्तःसंजल्पात्मकः संपिण्डितवाग्रूपः, २

**बिन्दुः**—सर्वमन्त्राणां संवेदनरूपः, ५

**बिन्दुप्रान्तो वर्णः**—प्रणवः, १६५

**बीजम्**—यवादिबीजम्, ९३

**बीजाशनाशयाः**—बीजाहारभावाः, १४२

**बीजानि**—[बीजमन्त्राः], २४०

**बुद्धीन्द्रियम्**—ज्ञानेन्द्रियम्, १६९
**बुभुक्षुः**—भोगेच्छुः, ११६, २५१
**बैन्दव्यः कलाः**—बिन्दुसम्बन्धिन्यो निवृत्ति-प्रतिष्ठाविद्याशान्त्याख्याः कलाः, ५८
**बोधकाः**—व्याख्यातारः, १२
**ब्रह्म**—ब्रह्ममन्त्राः, २४४
**ब्रह्मपञ्चकम्**—[सद्योजात-वामदेव-अघोर-तत्पुरुष-ईशानाख्यपञ्चकम् ], ३
**ब्रह्मवृक्षः**—पलाशः, ६५
**ब्रह्मसूत्रम्**—दिगष्टके प्राक्पश्चिमादिगतं सूत्र-चतुष्टयम्, ८८
**ब्रह्मा**—कारणेश्वरः, १४३,१४४,१६०, १६९
**ब्रह्मा**—तत्त्वेश्वरः, ४
**ब्रह्मा**—सूर्यमण्डलाधिपतिः, ४
**ब्रह्माङ्गपञ्चकम्**—[हृदय-शिरः-शिखा-कवच-नेत्राख्यपञ्चकम् ], ३
**ब्रह्माङ्गवर्गः**—ब्रह्मणामङ्गानां च वर्गः, ३
**ब्रह्माणि**—सद्योजातादिपञ्च, २८
**ब्रह्मादिपञ्चकम्**—सद्योजातादिपञ्चकम्, ११
**ब्राह्मसवनम्**—प्रभातसमयः, २३६
**भक्ष्यवस्तु**—मोदकादि, ७९
**भारवती**—भारसहा, ८५
**भाष्यः**—अन्यश्रवणात्मकः, ४२,२३२
**भुवनाध्वदीक्षा**—ब्रह्माण्डाधोवर्तिनोऽनन्तभुव-नादारभ्य सर्वभुवनानां तदधिपतीनां च शोधनम्, १७५
**भुवनेश्वराः**—अनन्तकालकूष्माण्डादयः, ४
**भुवर्लोकः**—पैशाचादिदेवयोन्यात्मकान्तरलोकः, १७९
**भूताः**—दिङ्मातङ्गाः, १७
**भूताः**—पशुमृगपक्षिसरीसृपाः, ११
**भूतिः**—विचित्राभिमतभोगावाप्तिः, ११९
**भूतिः**—सिद्धिः, १३०
**भूतेशवर्यः**—शिवः, ३६
**भूतेशाः**—ब्रह्मेन्द्रादयः, ३६
**भूमिः**—स्थण्डिलम्, ५२
**भूमिपाः**—क्षत्रियाः, २०७
**भैक्षम्**—भिक्षाग्रहणम्, २११
**भोगः**—सुखदुःखमोहहेतुर्विषयानुभवः, १५०
**भोगव्यापारः**—कर्मफलानुभवः, १५१
**भोग्यम्**—जनकाधारकं कर्म, १५३
**भौतिकः**—भुक्तिकामः, १०२,२०९
**भौतिकम्**—वेदव्रतविशेषः, १७८
**भौतिकव्रती**—सावधिकव्रतचारी, २०९
**भौतिकी**—इष्टभोगावाप्त्यन्ते मुक्तिसाधनी, ११९
**भौतिकी**—भूतिकामविषयिणी, १२०
**भौभुगम्**—कालानलाधोवर्तिभूभुगाख्यरुद्राश्रयस्थानम्, ९२
**भौमम्**—पार्थिवं स्नानम्, ७, ८
**भौमम्**—मृण्मयम् पात्रम्, ७४
**भ्रंशः**—अधःपातः, २४५
**मकरः**—मकरी मुद्रा, ४,४५
**मकरी**—मकरी मुद्रा, ४७
**मकरी मुद्रा**—सर्वविघ्नप्रभक्षणी, ४७

**मकुटम्**—शैवागमेषु रौद्रभेदः, २२२
**मङ्गलम्**—आत्मगुणः, १७९
**मणिमण्डलम्**—मन्थनसंज्ञा, ७५
**मण्डलत्रयी**—दिनकरशशिवह्निरूपाणां त्रयी, ४
**मण्डलत्रितयम्**—सूर्यादिमण्डलत्रितयम्, २३, २४
**मण्डलम्**—वृत्तम्, १३१, १३२
**मण्डलाकृतिः**—वर्तुला, ६४
**मण्डलाग्रकम्**—वृत्तप्रान्तम्, १३१
**मदः**—कस्तूरिकादिः, ८०
**मदः**—गर्वः, २०२
**मध्यः**—अघोरनाथाध्वा, १९९
**मध्यनाडी**—सुषुम्ना, १०७
**मध्यममन्त्राः**—मन्त्रेशादिमन्त्राः, २३३
**मध्यमाः**—ऋषयः, १२
**मध्याङ्गम्**—श्रोणी, ३६
**मननम्**—सर्ववेदित्वम्, २
**मनुः**—मन्त्रः, २, ८१
**मनुचक्रम्**—मन्त्रसमूहः, २
**मनुपतिभर्ता**—मन्त्रेश्वराधिराजः, ८१
**मनुसृतः**—विद्येश्वराः, २७
**मनोरथमुद्रा**—परमेश्वरसान्निध्यहेतुः, ४९
**मनोरथा**—मनोरथाख्या मुद्रा, २७
**मन्त्रः**—मननत्राणधर्मी, २
**मन्त्रचक्रपरिच्छदः**—मन्त्रसमूहपरिवारः, ३०
**मन्त्रप्रयोक्तारः**—मन्त्रप्रयोगार्हाः, २१७
**मन्त्रवृत्तिः**—साधकः, २०७
**मन्त्रसंपातः**—संपातहोमः, ९८
**मन्त्राः**—अङ्गब्रह्ममन्त्राः [संहितामन्त्राः],९,१६
**मन्त्राः**—उत्तममध्यमाधमभेदेन त्रिविधाः, २३३
**मन्त्राध्वदीक्षा**—शिवैकादशकसंहितारूपे भुवनयोजनतः शोधनम्, १७४
**मन्त्रान्तम्**—द्वादशान्तम्, २४
**मन्त्री**—साधकः, ३९,१९७,२०८,२४९
**मन्त्रेशाः**—अनन्तादिविद्येश्वरा अष्टौ, १९०, २०८
**मन्थराग्रकम्**—विततपुरोभागमाभुग्नप्रान्तम्, १३१
**मरुदाशा**—वायव्यदिक्, ५३
**मर्यादाः**—परिधयः, ६४
**मल्लिका**—जातिः, ७७
**महापातकानि**—ब्रह्महत्या, सुरापानम्, स्तेयम्, गुर्वङ्गनागमनम्, तत्संपर्कश्चेति पञ्च, २४६
**महाव्रतः**—कापाली, २४४
**महासेवा**—शिवैकप्रवणत्वेन सेवा, ११४
**महिषः**—यमस्य वाहनम्, २७
**महिषाक्षः**—गुग्गुलुः, ८०
**महीकम्पः**—भूमिकम्पः, २२५
**महेशः**—भगवान्, २
**महेशानः**—पतिः, १०१
**महेशानः**—परमेश्वरः, ४०, १०३
**महेशानाः**—अनन्तादयः, २६
**महेशास्त्रम्**—शिवास्त्रम्, ९३

**महोदयः**—सर्वातिशायिनी सिद्धिः, ७८
**मातृका**—निखिलवाङ्मयजननी, २
**मातृका**—पञ्चाशद्वर्णा, ३
**मातृका**—शिवमूर्तिः, २
**मात्रा**—अजिनाक्षसूत्रकमण्डल्वादिव्रत्युपयोगी परिकरः, २१३
**मात्सर्यम्**—द्वेषः, २०२
**माधूकरम्**—गृहाद्गृहं पर्यटतोऽनियतभैक्षम्, २३४
**माधूकरी**—Voir माधूकरम्
**मानसः**—[मनसा क्रियमाणो जपः]४२,२३२
**मानसम्**—मन्त्रस्मरणपूर्वकं शाक्तजलौघ-प्लवनरूपं स्नानम्, ८, १७
**मानसादिः**—मानसोपांशुभाप्यभूतो जपः,४२
**मानसेज्या**—मानसपूजा, ५२
**मान्त्रिकौ**—न्यस्तमन्त्रौ, १८
**मान्त्रेश्वरम्**—शिवाज्ञया मन्त्रेश्वरैः संप्रणीतम्, २२०
**माया**—कुस्मृतिः, २०२
**मायाकर्म**—क्लेशाः, १४८
**मायात्मकादिपाशाः**—मायेयाणवकर्मरूपाः त्रिविधाः पाशाः, १०७-१०८
**मारुतम्**—वायव्यम्, १६
**मारुताशनः**—उपोषितः, २४२
**मार्गः**—अध्वा, १९७
**मार्गक्षीणः**—अध्वनि क्षीणपाथेयः क्षीणदेहो वा, २१३
**मार्गस्थाः**—अध्वमध्येऽवस्थिताः, १७३
**मार्गांशः**—अध्वभागः, २०३
**मालतिः**—जातिः, ७७
**मिश्रः**—शुद्धाशुद्धः, २०५
**मिश्रज्ञानम्**—अन्यतमज्ञानस्य अन्यैः संग्रहेण कथनम्, २२१
**मिश्रार्थः**—शुद्धाशुद्धप्रयोजनम्, २०५
**मुक्तिः**—दीक्षा [पाशच्छेदः],१५५
**मुखबिम्बम्**—शैवागमेषु रौद्रभेदः, २२२
**मुखम्**—सन्निधिस्थानम्, २३३
**मुद्गरत्रिशिखः**—त्रिशूलमुद्रा, ४८
**मुद्गराः**—आखोटकाः, ८६
**मुद्रणम्**—अस्त्रतन्त्रीकरणम्, ४५
**मुद्राः**—कराङ्गुलिसंनिवेशविशेषरूपाः, ४६
**मुद्राः**—विघ्नौघमुद्रणा हरशक्तयः सुङ्मकराद्याः, ४,२८,४५,५२
**मुद्रितानि**—मुद्राभिः कृतरक्षाणि, ४४
**मुमुक्षुः**—मुक्त्यर्थी, २८
**मूर्तिः**—तनुः, १९,२३
**मूर्तिः**—लिङ्गविग्रहः, ३१
**मूलम्**—कन्दादि, ७९
**मृगी**—मृग्यभिधाना मुद्रा, ७९
**मृगी मुद्रा**—उन्मुखकनिष्ठतर्जनीका पिण्डित-मध्यानामिकाङ्गुष्ठा मुद्रा, ७९
**मृच्चतुर्थानि**—हेम-रजत-ताम्र-मृद्द्रव्याणि, ७४
**मृत्युकर्म**—मारणकर्म, ७२

**मृषा**—व्यर्थम्, २२५

**मेखला**—बहिः कटकाकृतिः कुण्डावयवविशेषः, ५३, ५७, ५८, ६७, ७०

**मैत्रम्**—अनुराधा, १८८

**यजेत्**—अभ्यर्चयेत्, ९३, १०७

**यज्ञारिसूदनः**—नारायणः, ५९

**यथासंपन्नम्**—यथाशक्त्युपहृतम्, ३०

**यमः**—दण्डायुधः, महिषवाहनश्च, २७

**यमाशा**—याम्या दिक्, ५३

**यवनिका**—तिरस्करिणी, १०२

**यवान्तराः**—यवप्रमाणव्यवधानाः, १३४

**यवोनाः**—यवेन न्यूनाः, १३४

**यागः**—अर्चनम्, ६२

**यागमण्डपः**—यागगृहम्, ८७

**यागाङ्गमनुः**—यागाङ्गतया संहितान्तरेपूक्तो मन्त्रः, २५

**याज्ञियम्**—यज्ञाङ्गम्, ७२

**याज्ञीयः**—यज्ञार्हः, ८६

**याम्यभागः**—दक्षिणा दिक्, ५८

**याम्यम्**—दक्षिणम्, ४०, ७२

**योगपीठम्**—पद्माङ्कितोदरः श्रीपर्णिकादिदारुकृतो वृत्तोऽर्चाधारः, २३४

**योगिनीकौलम्**—योगिनीभिः शिवाल्लब्धं तन्त्रम्, २२१

**योगोद्भवम्**—योगजम्; शैवागमेषु शैवभेदः, २२२

**योग्यः**—समयस्थः, २०८

**योग्यतागुणः**—पावित्र्यम्, ३०

**योनयः**—चतुर्दशविधभूतसर्गसंबन्धिन्यः, १५६

**योनिसंस्थानम्**—अश्वत्थपत्राकारं कुण्डम्, ७२

**रक्ताङ्घ्रिः**—अरुणाङ्घ्रिः, ३७

**रक्ताभम्**—अरुणम्, ३६

**रजः**—श्वेतधातोर्भस्मनो वा रजः, १२८

**रजोव्युदासः**—भूसंस्कारविशेषः, ५४

**रत्नम्**—हीरकादि, ९३

**रन्ध्राणि**—क्रियाच्छिद्राणि, ४४

**रसः**—पारदादिः, ७७

**रसः**—षट्, ६६

**रसायनम्**—विशिष्टदेशकालमन्त्रौषधिप्रयोगैः शरीरस्थिरीकरणहेतुर्द्रव्यविशेषः, ७७

**राज्योपकरणम्**—अश्वच्छत्रध्वजचामरादि, १२४, १९३, २००

**रिपुग्रस्तः**—शत्रुभिर्वशीकृतः, २१३

**रुद्रः**—कारणेश्वरः, १४३, १४४, १६०, १६९

**रुद्रः**—वह्निमण्डलाधिपः, ४, ३०

**रुद्राणी**—शक्तिः, १४२

**रोचना**—गोरोचना, ११२

**रोदनम्**—अश्रुपातः, १२५

**रोधः**—निरोधार्घ्यम्, ८९, ९०

**रोधमुद्रा**—निरोधनी मुद्रा, २४

रोधनी मुद्रा—निरोधनीमुद्रा [निष्ठुरमुद्रा],५०
रोधार्घ्यम्—आवाहने विसर्गे च दीयमानमर्घ्यम्, ३१, ९०
रौद्राः—शिवाधिष्ठितै रुद्रैरुपदिष्टा विजयादयोऽष्टादश, २२२
रौरवम्—शैवागमेषु रौद्रभेदः, २२२
लताः—वीरुधः, गुच्छरूपाः गुल्मरूपाश्च, ७९
लयः—कलातत्त्वभुवनादीनामुपसंहारः, १६४
लयः—समतीतेऽपि भोगानुभवक्षणे तन्मयीभावानुगमः, १५१
लयमुद्रा—आकर्षणी मुद्रा, ५१
लयान्तकम्—आधानादिलयान्तम्, १६३
ललितम्—शैवागमेषु रौद्रभेदः, २२२
लालापनोदनम्—संस्कारविशेषः, ५९
लिङ्गप्रकृतिः—शैललोहमृद्रत्नदार्वादीनि,२५१
लिङ्गम्—चिह्नम्, २३६
लिङ्गम्—परमेश्वरपूजाधिकरणम्, २५१, २५२
लिङ्गम्—रुद्राश्रयस्थानम्, २३९
लिङ्गस्थः—लिङ्गाश्रयः, २४०
लिङ्गानि—व्रतजात्यादिविशिष्टचिह्नानि, २३७
लिङ्गी—महाव्रतशाक्यादिचिह्नभृत्, २३५
लिप्तम्—उपलिप्तम्, ८९
लोकधर्मिणी—देहान्तेऽणिमादिसिद्धिदात्री, १२३
लोकधर्मी—लोकधर्मिणीदीक्षादीक्ष्यः, १७२
लोकपालाः—इन्द्रादयो दिक्पालाः, ५८, १३१, १३८
लोकपालायुधानि—वज्राद्यायुधानि, १३५
लोकपालायुधावधि—वज्रादिलोकपालायुधावधिकैकावरणः, १३५
लोकेशाः—इन्द्रादिलोकपालाः, २४०
लोचनम्—नेत्रमन्त्रः, ९७
लोहम्—आयसम, १२६
लोहम्—हेमादिलोहम्, ९३
लौकिककर्म—इष्टापूर्ताख्यम्, १४६
लौकिकाग्निः—गृहाग्निः, ५५
लौकिकादीनि—लौकिकवैदिकाध्यात्मिकातिमार्गशैवाख्यानि, १४५
लौकिकी—लोकधर्मिणी, १७३
वक्त्रमन्त्रः—तत्पुरुषमन्त्रः, ४८
वक्त्रम्—तत्पुरुषकलाचतुष्टयम्, २१
वक्त्रविशोधनम्—वक्त्राभिघाराख्यसंस्कारविशेषः, ५६, ५७
वक्त्रोद्घाटनम्—वक्त्रविदारणाख्यसंस्कारविशेषः, ५६, ५७
वक्रवपुः—वक्राकृतिः, ६५
वज्रम्—इन्द्रस्य दिव्यायुधविशेषः, २७, १२५
वज्राङ्कितम्—वज्रीकरणम्, ५४
वज्रीकरणम्—भूसंस्कारविशेषः, अस्त्रेण पूर्वगास्तिस्रो रेखाः, याम्यसौम्यमुखा त्वेका रेखा, ५४
वनवासित्वम्—वानप्रस्थव्रतम्, १७९
वन्याशनः—नीवारादिभिः कृतवृत्तिः, २४३

**वपुः**—दृक्क्रियामण्डलम्, २१
**वपुः**—मूर्तिः, ३१
**वपुः**—लिङ्गादिमूर्तिः, ३०
**वपुःकल्पनम्**—अष्टत्रिंशत्कलाभिः, ईशानमूर्ध-तत्पुरुषवक्त्र-अघोरहृदय-वामदेवगुह्य-सद्योजातमूर्तित्वेन विग्रहकल्पनम्, २१, २२
**वरुणः**—पाशायुधः, झषवाहनश्च, २७
**वरुणदिक्**—प्रतीची, ११४
**वर्गः**—अवर्गादिः, ३
**वर्गः**—[एकस्याः संख्यायास्तयैव गुणनेन लब्धः], १३७
**वर्णः**—ब्राह्मणादिः, ८४
**वर्णाध्वदीक्षा**—मातृकासंबन्धिवर्णात्मकेऽध्वस्तनाध्वनामुत्तरोत्तरक्रमेण संमेल्य शोधनम्, १७४
**वर्तनम्**—प्राणयात्रा, २१२
**वर्तिकापरीक्षा**—भूपरीक्षाविशेषः, ८५
**वर्त्म**—षड्विधाध्वा, १९५
**वर्त्म**—सितासिताध्वा, १५२
**वर्धनी**—[शिवकुम्भस्य समीपे देव्यधिष्ठित उपकुम्भः, ९४
**वर्म**—कवचमन्त्रः, ९, १४, १८, ४२, ६१, ९७, १०८, ११०, ११६, २४०
**वर्मगर्भम्**—कवचावृतम्, १८
**वर्मपूतम्**—कवचमन्त्रितम्, ९७
**वल्ल्यः**—प्रतानाकृतयो व्रतत्यः, ७०
**वसुः**—अष्टौ, ६९, ७२, ७५, १३०
**वागीशाः**—विद्येश्वराः, ४
**वागीश्वरः**—अग्नेः पिता, ५४
**वागीश्वरी**—अग्नेर्माता, ५४
**वाजपेयः**—सोमसंस्थः, १७९
**वातघ्नः**—एरण्डः, २११
**वातुलम्**—शैवागमेषु रौद्रभेदः, २२२
**वादः**—विवादः, २३०
**वादिभेदः**—वक्तृभेदः, २२१
**वामः**—वामदेवः, २५, ३४
**वामः**—वामदेवमन्त्रः, ९, १५७, १९० २४३
**वामदेवः**—तिरोभावकर्ता, ३४
**वामदेवः**—वैश्यजात्यधिपतिः, २४४
**वामदेवः**—सौगतानामधिपतिः, २४४
**वामनाडी**—[इडा], १०७
**वामम्**—वामदेवकलात्रयोदशकम्, २२
**वायव्यम्**—धनिष्ठा, १८८
**वायुः**—ध्वजायुधः, हरिणवाहनश्च, २७
**वारिपरीक्षा**—भूपरीक्षाविशेषः, ८५
**वारुणम्**—वारिणा स्नानम्, ७
**वारुणी**—प्रतीची, ११४
**वार्क्ष्याः**—वृक्षभवाः, ७९
**विकिराः**—निर्विघ्नार्थं विकीर्यमाणाः, सर्षपयवलाजाद्याः, ९२
**विकृतिः**—सौम्येतरक्षुद्रकर्म, ७३
**विकृष्य**—आकृष्य, १०९

**विगर्हितः**—क्षुद्राचारः, २३४
**विग्रहः**—देहः, १४३
**विघट्टयेत्**—निदध्यात्, ९७
**विघ्नरोधः**—विघ्नरक्षा, ५८
**विघ्नसमूहः**—सहजागन्तुकपाशः, १०४
**विजयम्**—शैवागमेषु रौद्रभेदः, २२२
**विद्याः**—सप्तकोटिमन्त्राः, ११
**विद्या**—मन्त्रः १३८
**विद्या**—वागीश्वरी, १५६,१५९
**विद्या**—विद्याख्या शक्तिः, ५४
**विद्याकला**—विद्यातत्त्वान्तव्यापिका हृदि योज्या, ११०
**विद्येश्वराः**—अनन्तादिशिखण्ड्यन्ताः, ११
**विद्येश्वराः**—पद्मपाणयः पद्मासनाश्च, २७
**विद्वान्**—विधिज्ञः, ५३
**विधयः**—शास्त्राणि, १५०
**विध्युदितम्**—शास्त्रविहितम्, २३१
**विमलम्**—शैवागमेषु रौद्रभेदः, २२२
**वियोज्य**—विश्लेषं कृत्वा, १५६
**विलयः**—उपसंहारः, १६१
**विलयः**—द्वादशान्तपर्यन्तोच्चारितप्लुत-शान्तिः, १७
**विलयहुताशः**—कालाग्निः, ३८
**विलुप्यते**—व्याहतसिद्धिर्भवति, ४१
**विलेपनम्**—कुङ्कुमकर्पूरचन्दनादीनि, २५
**विलोकनम्**—निरीक्षणम्, ९७
**विलोमतः**—विन्यासक्रमवैपरीत्येन, ११२
**विलोमतः**—संहारक्रमात्, २१६
**विशेषयोग्यता**—मुक्त्यर्हता, १४३
**विश्लेषः**—छेदनार्हता, १५४
**विश्लेष्य**—हृन्मन्त्रसंपुटितं कृत्वा, १०९
**विश्वः**—सर्वो बन्धमोक्षात्मकोऽर्थः, १५२
**विश्वमाता**—वागीश्वरी, १४५
**विश्वमाता**—शक्तिः, १४२
**विश्वस्य मूलम्**—मलः, मायाशक्तिः, रोधनाशक्तिश्च, १५२
**विषुवम्**—पुण्यकालविशेषः, २१४
**विष्कम्भः**—विस्तारः, ६५, ७४, १३४
**विष्टरः**—दर्भाणां विंशता तन्तुभिः कृतं केशपाशाकृत्यासनम्, ७३
**विष्णुः**—कारणेश्वरः, १४३,१४४,१६०, १६९
**विष्णुः**—चन्द्रमण्डलाधिपतिः, ४
**विसृष्टिः**—विसर्जनम्, ३७
**विस्तारः**—विष्कम्भः, १३४
**वीरभद्रम्**—वीरम्, २२२
**वीरम्**—शैवागमेषु रौद्रभेदः, २२२
**वृत्तः**—कृतवेष्टनः, ६८
**वृद्धाः**—विद्यावृद्धा आगमोक्तपरीक्षाकुशलाः, २१५
**वृषभः**—ईशानस्य वाहनम्, २७
**वेदः**—चतुःसंख्याकः, १३०
**वेदभक्तम्**—चतुर्धा भक्तम्, १२९
**वेदव्रतानि**—ऐष्टिकम्, दार्विकम्, भौतिकम्, सौमिकं च, १७८

**वेदाश्रम्**—चतुरश्रम्, ५३,७२
**वेदी**—चतुरश्रा आधारस्थालिका, ६६
**वेष्टितम्**—अवकुण्ठितम्, १४
**वैदिककर्म**—वेदोक्तकर्माणि सोमसंस्थादि-रूपाणि, १४६
**वैद्युतः**—मेघजः, ५५
**वैराग्यम्**—अनन्तस्य सामर्थ्यविशेषः, ३
**वैलोम्यम्**—विषयसांकर्यम्, ९०
**वैशेषिकं धनम्**—उत्कृष्टालङ्करणांशुकनैवेद्यादि,, ९५
**वैषुवती**—सुषुम्नानाडी, १०७
**वैष्णवः समयः**—सायंसमयः, २३६
**वैष्णवम्**—श्रवणम्, १८८
**व्यक्तम्**—प्रतिमा, २५१
**व्यक्ताव्यक्तम्**—मुखलिङ्गम्, २५१
**व्यक्तिः**—दीक्षा [पाशच्छेदः], १५५
**व्यतीपातः**—बृहद्वैधृत्यादिपुण्यकालविशेषः, २१२
**व्यस्तम्**—असंसक्तम्, ४६
**व्युत्क्रमः**—शास्त्राम्नातविध्यतिक्रमः, २४२
**व्युदस्यते**—छिद्यते, ११२
**व्योम**—आकाशवाचको हकारः, १०९
**व्योमपुरम्**—गन्धर्वनगरम्, २२५
**व्योमरेखा**—पद्मावृतिः, १३७
**व्रणम्**—छिद्रम्, ७२
**व्रतम्**—उपनयनाख्यः संस्कारः, १७८
**व्रतम्**—पञ्चगव्यचरुप्राशनादि, ११४
**व्रताङ्गानि**—अजिनकमण्डल्वादीनि, २१०
**व्रतिनः**—जटिलाः, मुण्डाश्च, २०७
**व्रतेश्वरः**—शिवः, २०८
**व्रतोद्धारः**—दीक्षाविधिविशेषः, १७०
**व्रश्चनम्**—छेदनम्, प्रतिबन्धकनिवृत्तिः, २
**शंकरः**—परमेश्वरः, ३०
**शंकरास्त्रम्**—शिवास्त्रम्, १०१
**शंभुः**—शिवमन्त्रः, ५९, ७५
**शंभ्वर्घ्यम्**—शिवार्घ्यम्, ८९
**शक्तयः**—वामाद्याः, विभवाद्याः, गायत्री, सावित्री च, ४
**शक्तयः**—वामाद्या नव, २०८
**शक्तिः**—अग्नेरायुधम्, २७
**शक्तिः**—आधारशक्तिः, ३०
**शक्तिः**—दृक्क्रियारूपा, १५४
**शक्तिः**—निष्कला, १७
**शक्तिः**—परमेश्वरेच्छात्मकप्रथमप्रसररूपा, १६२
**शक्तिः**—परवाक्स्वरूपा कुण्डलिनी, २
**शक्तिः**—रुद्राणी—कालान्तेऽध्वनि गायत्री, तदूर्ध्वं गणाम्बिका, तदुपरि शुद्धविद्या, १४२
**शक्तिः**—विश्वमाता, १४२
**शक्तिः**—शक्त्याख्यमायुधम्, २७
**शक्तिमान्**—भगवान्, २
**शक्तिमुद्रा**—मुद्गमुद्रा, २७
**शक्तिव्यक्तिः**—दृक्क्रियाशक्त्यभिव्यक्तिः, १५४
**शक्तिस्थापनम्**—शक्तेरुपस्थापनम्, १५०
**शङ्कवः**—मण्डपसूत्राभिज्ञापकाः, ९९

शतालब्धम्—शतवारं मन्त्राभिमन्त्रणेन गृहीतम्, ९७
शतालब्धम्—शतवारमभिजप्तम्, ९३
शतिकः—शताहुतिः, १२७
शम्बरः—मन्त्रः, १४
शर्वोक्तम्—शैवागमेषु रौद्रभेदः, २२२
शल्यनिरासः—भूसंस्कारविशेषः, ८६
शवश्रुतिः—शवपटहरोदनादिश्रुतिः, २२६
शस्त्रकुशः—अस्त्राभिजप्तकुशः, ९६
शस्त्रजप्तम्—अस्त्रमन्त्रमन्त्रितम्, ९१
शस्त्रम्—अस्त्रमन्त्रः, १८,१९,९१,१०६, १४७,१५९
शस्त्रप्राकारः—अस्त्रमयप्राकारः, १८
शाक्तः—पराशक्तिक्षोभोद्भूतः, २१
शाक्तः—परस्याः शक्तेरुद्भूतः परतेजःप्रसरः, ९१
शाक्तम्—शाक्तजलौघप्लवनतः शाक्तं स्नानम्, ८
शाक्तविग्रहः—निर्लिङ्गा विद्यामूर्तिः, सलिङ्गा शिवमूर्तिश्च, २४
शाक्ताः—शैवादन्यादृशाः [शक्तिपारम्यवादिनः], २०७
शाखा—लयमुद्रा, ५१
शाखामुद्रा—आकर्षणीमुद्रा, ५१
शान्तिः—आत्मगुणः, १७९
शान्तिकम्—शान्त्यर्थं कर्म, ८०
शान्तिकला—मन्त्रेशान्तव्यापिका मुखे योज्या, ११०
शान्त्यतीतकला—बिन्द्वन्ताधिष्ठाना मूर्ध्नि योज्या, ११०
शिखा—चौलाख्यसंस्कारः, १७७
शिखागुप्तशिखः—शिखामन्त्रगुप्तशिखः, ११६
शिवः—अनुत्तरं श्रेयः, १६५
शिवः—कारणेश्वरः, १६९
शिवः—परमेश्वरः, १०६, २१८
शिवः—मूलमन्त्रः, १०,१५,२८,९१, ११५,१५९
शिवः—शिवमन्त्रः, १३,१६,५५,९७, ११४,१९२
शिवकुम्भः—[शिवाधिष्ठितः प्रधानकलशः],९४
शिवगतान्—परमेश्वराश्रयान्, ३१
शिवज्ञानसंवित्—शिवज्ञानसदृशविज्ञाननिष्पत्तिः, १६४
शिवतत्त्वदीक्षा—शिवतत्त्वैकव्याप्त्या दीक्षा, १७४
शिवतन्त्रम्—शिवशास्त्रम्, १५५
शिवदेवता—सादाशिवी मूर्तिः, १६९
शिवधर्मिणी—शिवसमसर्वज्ञतादिधर्मसाधनी, १२२
शिवमूर्तिः—निर्लिङ्गा, सलिङ्गा, नवार्कतेजोरूपा, २४
शिवयोगी—शिवशासने युक्तः, २१३
शिवव्यक्तिस्थानानि—गुरुः, साध्यमन्त्रः, ओषधय इत्यादि, २३७
शिवहस्तः—गन्धाद्यलंकृतोऽभिमन्त्रितः पाशच्छेदकरः क्षौमी शिवाधिष्ठितः हस्तः, ९०

**शिवाग्निः**—आवाहितशिवो होमयोग्योऽग्निः, ६२
**शिवादयः**—संहितामन्त्राः, १९५
**शिवाम्भः**—शिवार्घ्यपात्रस्थमुदकम्, शिवार्घ्यम्, ९०, ९२
**शिवार्घ्यम्**—पाद्याचमनपूजासमाप्तिषु देयमर्घ्यम्, ९०
**शिवालब्धम्**—शिवमन्त्राभिजप्तम्, १४३
**शिवाविष्टाः**—शिवाधिष्ठिताः, २२२
**शिवाश्रयः**—परमेश्वराभिमुखः, २९
**शिवाश्रयः**—मूलमन्त्रनिलीनः, २९
**शिवासनम्**—पृथिव्यादिशक्त्यन्तपञ्चत्रिंशत्तत्त्वरूपपद्माकृति, २३
**शिवास्त्रम्**—अस्त्रम्, ५८
**शिवीकृत्य**—मन्त्रन्यासादिभिः शिवीकृत्य, १४०
**शिवीभूतः**—शिवभावनाभावितात्मा, ८९
**शिवीभूतः**—उपरतः, २२७
**शिवीभूय**—सकलीकरणादि कृत्वा, १८
**शिवैकादशिका**—संहिता, २४६
**शिष्यशेषः**—शिष्योपयुक्तशिष्टः, १००
**शुकः**—अग्नेर्वाहनम्, २७
**शुचिः**—स्नानादिकर्मणा शुद्धः, ६
**शुद्धविद्या**—गणाम्बिकाव्याप्ताध्वोपरितना शक्तिः, १४२
**शुद्धशक्तिः**—निष्कलशक्तिः, १६१
**शुद्धा**—संशोधिता, ६
**शुद्धिः**—प्रायश्चित्तकर्म, ८०
**शुद्धिः**—मन्त्रप्रभावतो मलादिपाशव्युदासः, १४९
**शूलमुद्रा**—त्रिशूलमुद्रा, २७, ४७
**शृङ्गम्**—खड्गादिप्राणिशृङ्गम्, ७४
**शैवकर्म**—विज्ञानजन्यं कर्म, १४६
**शैवम्**—शिवसंप्रणीततन्त्रम्, २२०
**शैवम्**—शैवशास्त्रम्, २२५
**शैवसाधनम्**—समयाचारः, १७१
**शैवाः**—व्रतिनः अव्रतिनश्च, देशिकः, पुत्रकः, साधकः, समयी च, २०७
**शैवाः**—शिवेनोपदिष्टाः कामिकादयो दश, २२२
**शोधनम्**—अस्त्रमन्त्रेण शोधनम्, ५५
**शौचम्**—आत्मगुणः, १७०
**श्राद्धम्**—पाकयज्ञः, १७८
**श्रावणी**—पाकयज्ञः, १७८
**श्रुतिः**—श्रवणम्, परमेश्वरशास्त्राधिगमः, १०६
**श्वेतधातुः**—मृत्तालादिः, १२८
**षट्पिण्डः**—षण्णामङ्गुलीनां समाहारः, ४७
**षडङ्गः**—षट्त्रिंशत्, ६६
**षडध्वानः**—तत्त्वाध्वा, पदाध्वा, वर्णाध्वा, भुवनाध्वा, मन्त्राध्वा, कलाध्वा, १७४
**षष्ठो वर्णः**—ऊकारस्वरः, ३
**षोडशिकः**—सोमसंस्थः, १७९
**संकलय्य**—संमेल्य, १७३
**संख्यासूत्रम्**—अक्षसूत्रम्, २४६

**संचितम्**—अनेकभविकं कर्म, १७०
**संजीवनकर्म**—सृष्टिक्रमेण प्रतितत्त्वसंहिता-होमात् सर्वसमाप्तावधस्तात् पूर्णाहुतिः,२१६
**संजीवनम्**—अस्थाने मन्त्रखेदनजनितप्रत्य-वायशान्तिः, दीक्षाफलप्रतिबन्धकं कर्म, २१६
**संतर्प्य**—तर्पणं कृत्वा, ६०
**संताडनम्**—अस्त्रमन्त्रेण ताडनम्, ९३
**संधयः**—संश्लेषाः, ११२
**संधानम्**—मन्त्रसंधानम्, ६२
**संधानम्**—शोधितस्य कलादेस्तदूर्ध्वव-र्तिन्यशोधिते उपसंहारः, १६१
**संधाय**—अभिसंधाय, ९४, १५६, १७०
**संधाय**—नाडीसंधानादिकं कृत्वा, २९,९५
**संधाय**—पृथग्रूपतामालम्ब्य, २९
**संधाय**—संचिन्त्य, १४७
**संधिः**—बन्धस्थानम्, ११२
**संपन्नकारकः**—संभारादिसामग्रीयुक्तः, १४८
**संपन्नम्**—उपहृतम्, ३०
**संपन्नम्**—निर्भरम्, ८०
**संपर्कः**—साङ्कर्यम्, २४४
**संपातः**—संपातहोमः ९८,९९,१०६,११३
**संपातहोमः**—आज्यं स्रुवेण अग्नौ "स्वा" इति जुहुयात्। अर्धे तत्स्रुवस्थं "हा" इत्युच्चरन् द्रव्यमूर्धनि कम्पयेत्, ९९
**संपात्य**—संपातहोमेन संस्कृत्य, १४२
**संपात्य**—संपातहोमं कृत्वा, २०८
**संप्लवः**—स्वसांमुख्योन्नयनम्, ६१
**संबन्धः**—परो महान् अन्तरालो दिव्यो दिव्या-दिव्योऽदिव्य इति षट्प्रकारः, २१८
**संयतप्राणः**—प्राणायामकृत्, २४२
**संयतासुः**—नियमितप्राणः, १०
**संयमः**—प्राणायामः, ८
**संयोगः**—शक्त्युपस्थापनादिभिरङ्गैर्दीक्ष्यस्य सम्यग्योगः, १४९
**संयोगाङ्गानि**—शक्तिस्थापन-तद्गर्भाधान-जननभोग-योग्यतारूपाणि, १४९
**संरक्षणम्**—यथेष्टाद्भोगादप्रच्यावः, ३४
**संरक्ष्य**—सिद्धार्थरोचनादिभिरस्त्रमन्त्रेण रक्षार्थे तिलकं कृत्वा, ११६
**संवृतिः**—अन्धकारः, १२७
**संवेष्ट्य**—अवकुण्ठ्य, ९
**संश्रयः**—अधिष्ठानम्, ११०
**संसक्तम्**—श्लिष्टम्, ४६
**संस्काराः**—गर्भाधानादिसंस्काराः, ५५
**संस्थः**—स्थितः, २२८
**संस्था**—उक्तिः, २१६
**संस्थानम्**—आकारः, ६०, ७८
**संहारः**—एकत्र संघट्टनम्, १०८
**संहारः**—संग्रहः, २२१
**संहारक्रमः**—[अधमादारभ्योत्तमान्तं क्रिया-कलापः], १०२
**संहारमुद्रा**—लयमुद्रा, १५७
**संहिता**—शिवैकादशिनी [संहितामन्त्राः, पञ्च ब्रह्ममन्त्राः, षडङ्गमन्त्राश्च], १६, ६१, ९१, ९८, १७४, २४४

**संहितार्णवः**—शिवैकादशिका, २०८
**संहृतः**—विसर्जितः, ६२
**संहृत्य**—उद्धृत्य, ६३
**संहृत्य**—विसर्जनं कृत्वा, ६०
**संहृत्य**—संपुटीकृत्य, ४२
**सकलीकरणम्**—अष्टत्रिंशत्कलात्मकवपुःकल्पनम्, २०,२१
**सकलीकरणम्**—देहे अष्टत्रिंशत्कलामन्त्रन्यासः, १९२
ं—मृगाजिनम्, २३६
**सत्क्षेत्रम्**—पुण्यक्षेत्रम्, १६
**सत्त्वम्**—प्राणी, १२६
**सत्पयः**—पुण्यपयः, १६
**सत्पात्रम्**—ताम्रादिशोधितपात्रम्, ५५
**सत्यक्रियाः**—सफलकर्माणः, ६
**सत्येशः**—ब्रह्मा, १३८
**सत्राणि**—हिरण्यपादः, हिरण्यत्वक्, हिरण्यगर्भः, हिरण्यमेदः, हिरण्यास्थि, हिरण्यगुह्यम्, हिरण्यार्चिः, हिरण्यनाभिः, हिरण्यतालुः, हिरण्यश्रोत्रः, हिरण्यनेत्रः, इत्येकादश, अश्वमेधश्च, १७९
**सत्सान्तानिकः**—मौतिकः, २१०
**सत्सान्तानिकः**—सान्तानिकाख्यभैक्षयुक्तः, २१०
**सदाधारः**—शुद्ध आधारः, १५
**सदाशा**—पूर्वपश्चिमोत्तरेशानादिदिक्, ९६
**सद्यः**—सद्योजातः, १९८
**सद्यः**—सद्योजातमन्त्रः, ९,९१,१५८
**सद्यफण्मध्यवर्ती**—सद्योजातमन्त्रस्य फट्कारस्य च मध्यवर्ती, १५९
**सद्यम्**—सद्योजातकलाष्टकम्, २२
**सद्यादयः**—सद्योजातादिब्रह्मपञ्चकमन्त्राः, ५६, १९१
**सद्योजातः**—आत्मनो विविधशरीरयोजकः, १५८
**सद्योजातः**—उद्भवकर्ता, ३४
**सद्योजातः**—शूद्रजात्यधिपतिः, २४३
**सद्योजातः**—संन्यासाश्रमिणां शैवादन्यदर्शनाम्नातव्रतधारिणां चाधिपतिः, २४४
**सन्तानम्**—शैवागमेषु रौद्रभेदः, २२२
**सन्तानसिद्धिः**—सन्तानोत्पत्तिः, ७६
**सन्धितम्**—अभिसन्धितम्, ५५
**सबिन्दुः**—सानुस्वारः, १०९
**समन्वितः**—अदूरस्थैरनुपहतैश्चान्वितः, ८४
**समयगताः**—समयाचारभ्रंशाः, १८३
**समयस्थः**—समयी, २४७
**समयानुवर्ती**—समयाचारानुष्ठाननिरतः, १२१
**समयी**—समयाचारानुष्ठाता, २०७,२२७, २२९,२३१,२४८
**समाः**—अनिम्नोन्नताः ७२
**समानालापः**—साम्येनापिहितवक्त्रस्यानग्नस्य संकथनम्, २३०
**समासः**—संक्षेपः, २,३८
**समिदादि**—समित्कुशकुसुमानि, २३६
**समिधः**—अग्नीन्धनाः, ७९
**समीकरणम्**—भूसंस्कारविशेषः, ५४

